प्राधान्येन' इति वचनात् धात्वर्थविशेष्यतया आख्यातार्थबोधः सिद्धः ।
कालादीनामनेकेषां आख्यातार्थानां मध्ये कस्य विशेष्यत्वं कस्य विशेषणत्वमित्य-
पेक्षायां, 'भावप्रधानमाख्यातम्' इति स्मृतिः भावनातिरिक्ताख्यातार्थं प्रति
भावनायाः प्राधान्यं नियमयति । क्रियाविशेषणपदात् 'ततोऽन्यत्रापि दृश्यते'
इत्यनुशासनेन द्वितीयामात्रम्, न तत्र कर्मसंज्ञा, कर्मणि लकारापत्तेः । कृति-
शक्तस्यापि आख्यातस्य आनुशासनिकी कर्तरि निरूढलक्षणा, इत्यादिक-
मसाधारणं प्रमेयजातं व्युत्पादयन्ति **भाट्टरहस्ये श्रीखण्डदेवमिश्राः** ॥

अद्वैतशास्त्रव्यवस्थापनलब्धवर्णानां **श्रीरङ्गोजिभट्टानां** तनूजाः **श्रीकौण्ड-भट्टाः**, शब्दकौस्तुभे निर्णीतान् वैयाकरणसिद्धान्तान् संक्षेपेण प्रतिपादयन्तीनां **श्रीभट्टोजिदीक्षित**विरचितकारिकाणां व्याख्यानरूपे विस्तृते **वैयाकरणभूषणा**भि-धाने तत्सारसंग्रहात्मके **भूषणसारा**भिधाने च निबन्धे, नव्यनैयायिकपद्धत्यनु-सारिण्या तत्त्वविवेचनशैल्या नैयायिकैः मीमांसकैश्चोक्तानि दूषणानि दूरीकृत्य वैयाकरणसिद्धान्तान् व्यवस्थापयामासुः । तद्ग्रन्थोपक्रमे स्थितोऽयं श्लोकः—

**पाणिन्यादिमुनीन् प्रणम्य पितरं रङ्गोजिभट्टाभिधं**
**द्वैतध्वान्तनिवारणादिफलिकां पुंभाववाग्देवताम् ।**
**ढुण्ढिं गौतमजैमिनीयवचनव्याख्यातृभिर्दूषितान्**
**सिद्धान्तानुपपत्तिभिः प्रकटये तेषां वचो दूषये ॥** इति ।

सुप्तिङन्तचयः वाक्यम् । तत्र तिङन्तं प्रधानम् । अतएव धात्वर्थमुख्य-विशेष्यको बोधो जायते । अतः प्रथमं, धातोः फलव्यापारोभयार्थकतां, तिङश्चा-श्रयपर्यवसितकर्तृकर्मार्थकतां, धात्वर्थे व्यापारे तिङर्थस्य विशेषणतयान्वयं, दशानां लकाराणामर्थांश्च निर्णीय तिङन्तनिरूपणं समापितम् । ततः सुबर्थान्, सुप्-प्रकृतिनाम्नोऽर्थं, नामसमुदायात्मकसमासस्य एकार्थीभावं च निर्णीय, शक्तिस्वरूपं निरणायि । ततः नञर्थं, प्रादीनामिव चादीनामपि द्योतकतां, क्त्वादिप्रत्ययार्थञ्च निर्णीय शास्त्रसिद्धः स्फोटो निरूपितः । वर्णस्फोटादीनष्टविधान् स्फोटान् विशदी-कृत्यान्ते अखण्डवाक्यजातिस्फोटं ब्रह्मरूपिणमुक्त्वा, तन्नमस्काररूपमङ्गलेन समीचीनया रीत्या निबन्धमुपसमाहार्षुः ॥

अथ वैयाकरणानां नैयायिकानाञ्च बोधानुबन्धिनः सिद्धान्तभेदाः प्रदर्श्यन्ते ।

(1) धात्वर्थमुख्यविशेष्यकः शाब्दबोधः ।

(2) सकर्मकाणामिवाकर्मकाणामपि धातूनां फलव्यापारोभयार्थता ।

(3) कर्तृकर्मादयो धर्मिणः प्रत्ययवाच्याः ।

(4) लडाद्यर्थकालः धात्वर्थभावनान्वयी ।

(5) समासे एकार्थीभावः ।

(6) बोधकत्वं शक्तिः, न संकेतः ।

(7) अपभ्रंशा वाचकाः ।

(8) लक्षणाख्यं वृत्यन्तरं नास्ति ।

(9) प्रादीनां चादीनाञ्च वैषम्यं नास्ति ।

(10) वाक्यार्थबोधकः स्फोटः ।

इत्येते वैयाकरणसिद्धान्ताः ।

(1) प्रायः प्रथमान्तार्थमुख्यविशेष्यको बोधः ।

(2) सकर्मकाणामेव धातूनां फलव्यापारोभयार्थकता, नाकर्मकधातूनाम् ।

(3) कर्तृत्वकर्मत्वादिः धर्म एव प्रत्ययवाच्यः, न धर्मी ।

(4) आख्यातार्थकालः आख्यातार्थकृत्यन्वयी, यत्राख्यातेन कृतेर्न बोधः तत्र, जानाति, नश्यति इत्यादौ धात्वर्थान्वयी ।

(5) समासे वाक्यवद् व्यपेक्षैव, नैकार्थीभावः ।

(6) ईश्वरसंकेतः शक्तिः ।

(7) अपभ्रंशा न वाचकाः, शक्तिभ्रमात् तेभ्यः शाब्दबोधः ।

(8) लक्षणा नाम वृत्यन्तरम् ।

(9) प्रादयो द्योतकाः, चादयो वाचकाः ।

(10) स्फोटः न प्रमाणसिद्धः ।

इत्येते नैयायिकसिद्धान्ताः ।

नव्यवैयाकरणसिद्धान्तानपेक्ष्य प्राचीनवैयाकरणसिद्धान्ताः नैयायिक-सिद्धान्तसंनिकृष्टा वर्तन्ते । तथाहि—

(1) धातोः फलावच्छिन्नव्यापारे व्यापारावच्छिन्नफले च शक्तिद्वयं स्वीकुर्वन्ति नव्यवैयाकरणाः । प्राचीनास्तु फलं व्यापारश्च धात्वर्थः इति नैयायिक-संमतं खण्डशक्तिपक्षं रोचयन्ते । परन्तु फलव्यापारयोः सामानाधिकरण्ये धातो-रकर्मकत्वं, वैयधिकरण्ये तु सकर्मकत्वमिति वैयाकरणनयः । अकर्मकधातोः केवलव्यापारार्थकत्वं, न फलार्थकत्वमपि । सकर्मकधातोरेव फलव्यापारोभयार्थ-कत्वमिति न्यायनयः ।

(2) क्रियाजन्यफलाश्रयत्वात् कर्मत्वमिति व्यवहारदर्शनात् स्वस्य स्वप्रयोज्यत्वासंभवात् क्रियाजन्यफलाश्रयत्वातिरिक्तं कर्मत्वमखण्डो धर्मः इति नवीनाः । नैयायिकमतवत् क्रियाजन्यफलाश्रयत्वं सखण्डमेव कर्मत्वम् । निरुक्तव्यवहारे कर्मत्वपदं कर्मसंज्ञापरमिति प्राचीना वदन्ति ।

(3) द्वितीयार्थः कर्म । तत्र क्रियायाः फलस्य च धातुतः, जन्यत्वस्य आकांक्षया च लाभात् अनन्यलभ्यः आश्रयः अर्थः इति फलितम् । शक्तिपक्षे आश्रयत्वमर्थः इति प्राचीनानां निरूपणं, कर्मत्वार्थकद्वितीयायाः आधेयत्ववाचिता-वादिनैयायिकपद्धतिमध्यास्ते ।

(4) जातिः, द्रव्यं, संख्या, लिङ्गं, कारकमिति पञ्चकस्य नामार्थतापक्षं परमसिद्धान्ततया आद्रियन्ते नव्याः । कारकस्य प्रत्ययवाच्यतापक्षं रोचयन्ते प्राचीनाः भूषणसारकाराः 'प्रत्ययस्यैव वाचकताया युक्तत्वात्' इति ग्रन्थेन ।

(5) लिङर्थः प्रेरणा । तेनेष्टसाधनत्वमनुमाय पुरुषः प्रवर्तते इति नव्याः । प्राचीनास्तु नैयायिकवत् इष्टसाधनत्वं लिङर्थः इति प्रतिपादयन्ति । परन्तु नैयायिकसंमतं बलवदनिष्टाननुबन्धित्वं कृतिसाध्यत्वञ्च न लिङर्थः शाब्दिकमते । नव्यनैयायिकाः केचन इष्टसाधनतामात्रस्य लिङर्थतां स्वीकुर्वन्ति ।

(6) आरोपितत्वं नञा द्योत्यते । चैत्रो न पचति इति वाक्यात् आरोपितः चैत्रकर्तृकः पाकः इति बोधः इति नव्याः । प्राचीनास्तु आरोपितत्वस्य नञ्-

द्योत्तवपक्षमुपन्यस्य, 'निवृत्तपदार्थको नञ्।' इति भाष्यप्रामाण्यात् नैयायिकाभिमत नञ अभावार्थकत्व सिद्धान्तपक्षतया निरूपयन्ति।

अभावो वा तदर्थोऽस्तु भाष्यस्य हि तदाशयात्।
विशेषणं विशेष्यो वा न्यायतस्त्ववधार्यताम्॥

इति कारिका। वैयाकरणसिद्धान्ताना व्यवस्थापक भूषणग्रन्थोऽय सर्वथा विदुषा हृदयहारी विजयते।

हरिवल्लभभट्टाचार्याः, शाब्दविचारोपयोगिनिखिलतत्त्वप्रतिफलनयता **दर्पणेन** व्याख्यानेनालचक्रुर्भूषणसारम्। दर्पणकाराश्चेमे न्याय याकरणयो. पारदृश्वान। मूलवाक्यविवरण, तदर्थाविष्करण, तदुपरिप्रसक्ताक्षेपसमाधान-निरूपणञ्चैतेषा गदाधरभट्टाचार्यसरणिमनुसरति। व्युत्पत्तिवादादिनव्यनैयायिक-प्रबन्धेषु अकृतश्रमाणा न सुलभावगाहमिद दर्पणम्। एकैकस्मिन्नपि प्रकरणे वैयाकरणसिद्धान्त सनिष्कर्ष सप्रमाण निरूप्य, अन्ते नैयायिकानामाशयविशेष निरूपयन्ति। न कस्यापि ग्रन्थकर्तुर्नामोल्लिखन्ति। गदाधरभट्टाचार्यादर्वाचीन-पण्डितरचितग्रन्थेपूक्तमपि न्यायसिद्धान्त प्रतिपादयन्ति। नैयायिकमतनिरूपणा-वसरे, घटादीनां जानातिकर्मत्व गौणमिति शिरोमण्युदीरितमनभिधाय, विषयत्व ज्ञानञ्च धात्वर्थ इत्यभ्युपगम्य धात्वर्थतावच्छेदकविषयतारूपफलाश्रयत्वात् मुख्य-मेव घटादीनां जानातिकर्मत्वमिति **पदवाक्यरत्नाकरोक्त** निरूपयन्ति।

समासे एकार्थीभाव व्यवस्थाप्य, अन्ते एकार्थीभावानङ्गीकारे मीमास-कानामधिकरणत्रयस्यासागत्य भवति इति निरूप्य, "तस्मात् समासशक्तिपक्ष. जैमिनीयैरवश्याभ्युपेय इत्यास्तां विस्तर।" इत्युपसहृत **भूषणसारे**।

तत्र 'जैमिनीयैरिति वदता नैयायिकमतस्य सयुक्तिकत्व ध्वन्यते।" इति व्याचक्षाणा दर्पणकारा न्यायमतेऽभिनिवेश प्रकटयन्ति।

परन्तु, शक्तिनिर्णये, 'अत्र वदन्ति' इत्यादिना ग्रन्थेन मूलोक्तस्य बोध-कत्वस्य, नैयायिकोक्ताया ईश्वरेच्छायाश्च शक्तित्व निराकृत्य, वाच्यवाचकभाव-व्यवहारनियामक सबन्ध पदार्थान्तरमिति व्यवस्थापयन्ति। तत्र प्रवृत्तके, परि-

ष्कारविशेषाश्रयणेन गङ्गापदस्य न तीरवाचकत्वमिति नैयायिकोक्तिः शिष्यप्रतारणमात्रम् इत्युक्तं तैरिति बोध्यम् ।

एवं, सुबर्थनिर्णये, यूपाय दारु इत्यत्र चतुर्थ्यर्थं तादर्थ्यं व्युत्पत्तिवादोक्तमनूद्य, "तन्न मनोरमम्, तादर्थ्यस्योक्तरूपत्वे मुक्तये हरिं भजतीत्यत्र चतुर्थ्यनुपपत्तेः । न हि भजनस्य मुक्तीच्छाधीनेच्छाविषयव्यापारवत्ता । नापि मुक्तेः संप्रदानता कर्मजन्यफलभागितयानुद्देश्यत्वात् । तस्मात् तदिच्छाधीनेच्छाविषयत्वमेव तादर्थ्यम् । स्वर्गाय पुण्यमित्यादयस्तु इष्यन्त एव । वार्तिकं दृष्ट्वा सूत्रकृतोऽप्रवृत्तेः न तुमर्थादिति सूत्रानुपपत्तिरपि ।" इति सन्दर्भेण दूषयन्ति ।

**व्युत्पत्तिवादे,** 'तादर्थ्यार्थे सूत्रान्तरेण' इत्यत्र 'तादर्थ्ये' इति **कातन्त्रसूत्रं,** तुमर्थादिति सूत्रेत्यत्र 'तुमर्थाच्च भाववाचिनः' इति **कातन्त्रसूत्र**स्वामिसंहितं भट्टाचार्यैरिति व्युत्पादितमस्माभिः **षष्ठे तरङ्गे** । अतः 'वार्तिकं दृष्ट्वा' इत्यादिवचनस्य नावसरः । मुक्तये हरिं भजतीत्यत्र भट्टाचार्योक्तस्य तादर्थ्यस्यासंभवेऽपि मुक्तिं प्राप्तुमित्यर्थे 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति सूत्रेण चतुर्थी संभवतीति चिन्तनीयम् ॥

शाब्दविचारकैः पण्डितैरवश्यं परिशीलनीयोऽयं प्रौढो दर्पणग्रन्थः इत्यविवादम् ॥

नैयायिकाग्रेसरैः वैयाकरणैः **कालोपनासकहरिराममहोदयैः** विरचिता **काशिका**भिधाना भूषणसारटीकास्ते । तत्रापि अतिसमीचीनया पद्धत्या मूलार्थो विशदीकृतः । सुबर्थनिर्णयावसाने, शाब्दिकमर्यादया बहूनां वाक्यानां प्रामाणिकतत्तद्ग्रन्थानुरोधेन नव्यनैयायिकसरण्या शाब्दबोधवर्णनगर्भितः स्वतन्त्रः विस्तृतो विचारः, तेषां न्यायव्याकरणयोः निरतिशयं पाण्डित्यमभिव्यनक्ति । परन्तु **हरिवल्लभवत्** नैते नैयायिकपक्षपातिनः इति बोध्यम् ॥

सर्वतन्त्रार्थतत्वज्ञाः सर्वत्र शास्त्रे निबन्धप्रणेतारः **वैयाकरणनागेशभट्टाः** महाभाष्यं मुख्यं प्रमाणं स्वीकुर्वन्तः वैयाकरणसिद्धान्तानां पेटिकामिव विस्तृतां लघुमञ्जूषां निबबन्धुः । 'अन्यत्र विस्तरः' इति मञ्जूषाग्रन्थे व्याख्यातॄणां गुरुमञ्जूषायामिति वचनात् गुरुमञ्जूषापि निर्मितेति अवगच्छामः । परन्तु सा नोपलभ्यते ।

शक्तिलक्षणाव्यञ्जनानां वृत्तीनां स्वरूपस्य, पदवाच्यस्य बौद्धार्थस्य, वाचकस्य स्फोटस्य च निरूपणेन वाच्यवाचकशक्तिनिर्णयं परिसमाप्य, वाक्यार्थबोधोपयोगिनामाकांक्षायोग्यतासत्तितात्पर्याणां विचारः प्रवर्तितः। ततः निखिलशब्दमूलस्य धातोरर्थः, निपातार्थश्च निर्णीतः। ततः तिङर्थं, सनाद्यर्थं, कृदर्थञ्च निर्णीय धात्वनुबन्धी विचारः समाप्तिं नीतः। ततः प्रातिपदिकस्य, तत्प्रकृतिकसुब्विभक्तीनाञ्चार्थं विचार्य, सुबन्तप्रकृतिकसमासादिवृत्तीनामर्थनिरूपणेन मञ्जूषाग्रन्थमुपसमाहार्षुः।

महर्षिपतञ्जलिभक्ताश्चैते स्वेन निरूपिते सर्वस्मिन्नर्थे महाभाष्यं प्रमाणीकुर्वन्ति। तदनु हरिविरचितं वाक्यपदीयं, कैयटग्रन्थञ्चोद्धरन्ति। बहुषु स्थलेषु आयुर्वेदीयपतञ्जलिग्रन्थमपि 'चरके पतञ्जलि:' इति प्रमाणतयोपन्यस्यन्ति। अद्वैततत्त्वविचारेऽपि पतञ्जलिबहुमानात् शेषकृतपरमार्थसारादुद्धृताः कारिकाः व्याचक्षते। महाभाष्यविरोधेनाक्षेण सर्वान् पक्षान् निराकुर्वन्ति।

वैयाकरणभूषणोदितानां सिद्धान्तानां निराकरणे महानभिनिवेशस्तेषां लक्ष्यते।

नञर्थवादे, 'निवृत्तपदार्थके नञ्' इति भाष्यस्य भूषणाभिहितार्थनिराकरणावसरे दीक्षितादीनां भ्रान्तत्वं भाष्यार्थानभिज्ञत्वञ्च वदन्ति, "यत्तु निवृत्तेति भावे क्तः, निवृत्तं—अभावः पदार्थो यस्येति एतद्भाष्यार्थः इति। तद् भ्रान्त्यैवेति स्पष्टं भाष्यविदाम्।" इति ग्रन्थेन।

वाक्यपदीयकारिकाणां भूषणाभिमतादर्थादन्यस्मिन्नर्थे तात्पर्यं वर्णयन्ति। दिङ्मात्रमुदाह्रियते।

इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।
अनादिरर्थैः शब्दानां संबन्धो योग्यता तथा॥

इति कारिका, शब्दे अनादिभूतस्य बोधकत्वस्य शक्तित्वं बोधयतीति प्राचीनाः, बोधजनकतावच्छेदकीभूतवाच्यवाचकभावाख्यातिरिक्तसंबन्धपरेयमिति मञ्जूषाकाराश्च निरूपयन्ति।

संबन्धिशब्दे संबन्धो योग्यतां प्रति योग्यता ।
समयाद्योग्यतासंविन्मातापित्रादियोग्यवत् ॥

इति कारिकां, इदमत्र योग्यमिति व्यवहारे योग्यता विषयः । अतः समयात्-तद्व्यवहारात्, योग्यतायाः-बोधकतारूपशक्तेः, संवित्-ज्ञानं भवतीति प्राचीना व्याचक्षते । अयमेतत्संबन्धीति व्यवहारे योग्यतां प्रति--बोधजनकतावच्छेदकधर्म-वत्त्वरूपयोग्यताव्यवहारनिरूपितः यः तादात्म्यलक्षणः संबन्धः स एव योग्यता-परपर्यायः विषयः । स चानादिः वृद्धव्यवहारापरपर्यायास्मदादिसमयात् निश्चीयते, न तु बोधकत्वमेव शक्तिः, एतद्बोधजननेऽयं योग्यः इति व्यवहारादिति विवृण्वन्ति मञ्जूषाकृतः । एवमन्यत्रापि बोध्यम् ।

भावप्रधानमाख्यातम् इत्यत्र आख्यातपदं धातुमभिधत्ते, आख्यायते सर्व-प्रधानीभूतोऽर्थः अनेनेति व्युत्पत्तेरिति प्राचीनाः । तिङन्तमेवाख्यातपदेन विवक्षित-मिति मञ्जूषाकाराः ।

एते चाभिनवां सरणिमाश्रयन्ते । तथाहि—

(1) इच्छतेः इच्छानुकूलज्ञानं, नशधातोः अदर्शनानुकूलव्यापारः, पतेः विभागपूर्वकसंयोगश्चार्थः इत्यादिकं वर्णयन्ति ।

(2) बाधज्ञानं न कुत्रापि ज्ञाने प्रतिबन्धकम् । तत्कालेऽपि सत्यां सामग्र्यां जायते एव ज्ञानम् । तत्र स्वस्वसामग्रीवशात् द्वयोरपि ज्ञानयोः जातयोः, यत्र ज्ञाने सदोषसामग्रीजन्यत्वग्रहः तत्राप्रामाण्यग्रहो जायते इत्येव मर्यादा ज्यायसीति व्युत्पादयन्ति ।

(3) 'आशुसञ्चारादलातचक्रं प्रत्यक्षेण दृश्यते, अनुमानाद्गम्यते नैत-दस्तीति ।' इति महाभाष्यप्रामाण्यात् बाधज्ञानकालेऽपि अनुमितिं स्वीकुर्वन्ति ।

(4) नीलमुत्पलमित्यादौ सर्वदर्शनसिद्धः अभेदः न संसर्गः संभवति द्विनिष्ठत्वाभावात् । अपितु, यथा रूपघटयोः समवायाधीनः विशेषणविशेष्यभावः न तथा नीलोत्पलयोरिति संबन्धान्तरानवच्छिन्नविशेषणविशेष्यभावमभेदस्थाने-ऽभिषिञ्चन्ति ।

(5) तार्किकादिभिरभिधीयमानं, एकविधज्ञानं प्रति अन्यादृशज्ञान-सामग्र्याः प्रतिबन्धकत्वं नैव संभवति। विभिन्नज्ञानद्वयघटितसामग्रीद्वयसमावेशे सति, तद्दशायामेकविधज्ञानस्यैव जननात् प्रबलायाः तत्सामग्र्याः प्रतिबन्ध-कत्वकल्पनेनान्यादृशज्ञानं वारणीयं स्यात्। ज्ञानानां यौगपद्यविरहेण तद्घटित-सामग्रीद्वयस्य समावेश एव न संभवति। अतः तार्किकाणां तथा प्रतिबन्धकत्व-कथनमसंगतमेव। एवं, एतादृशप्रतिबन्धकताज्ञानस्यानुपयुक्तत्वात्, शाब्दस्याधिक-विषयत्वाभ्युपगमे, भिन्नविषयकप्रत्यक्षे शाब्दसामग्रीप्रतिबन्धकताकल्पनालाघवो-पन्यासः काकदन्तपरीक्षावन्निरर्थकः इति घोषयन्ति।

(6) यजेत स्वर्गकामः इति वाक्यजन्यशाब्दबोधानन्तरं स्वर्गमनुभवामीति प्रत्ययाभावात् शाब्दबोधस्य नानुभवरूपता। शाब्दत्वं ज्ञानत्वव्याप्यधर्मः इत्युल्लि वन्ति।

(7) प्राचीनमार्गविलक्षणमार्गेण स्फोटं प्रतिपादयन्ति।

अपिच, स्वसिद्धान्तस्य नव्यनैयायिकैरनङ्गीकृतत्वेऽपि न्यायसूत्र—तद्भाष्य-वार्तिकादिप्राचीनन्यायग्रन्थारूढत्वमस्तीति प्रतिपादने महानभिनिवेशस्तेषा लक्ष्यते। तथाहि—

(1) 'ते विभक्त्यन्ताः पदम्' इति न्यायसूत्रे वर्णानामेव पदत्वोक्त्या स्फोटो नास्तीति प्रतिपादिन न्यायवार्तिकतात्पर्यटीकायाम्। अथापि वाक्य-स्फोटस्य वाक्यार्थबोधकतायां, न्यायभाष्यवचनमेव प्रमाणतया ग्रन्थोपक्रमे निरूप-यन्ति। "तत्र वाक्यस्फोटो मुख्य.। लोके तस्यैवार्थबोधकत्वात्, तेनैवार्थ-समाप्तेश्च। तदुक्तं न्यायभाष्यकृता—पदसमूहो वाक्यमर्थपरिसमाप्तौ इति।" इति लघुमञ्जूषाग्रन्थः।

(2) असत्कार्यवादव्यवस्थापनावसरे किञ्चिच्छङ्कोत्तरदानाय प्रवृत्त 'बुद्धि-सिद्धं तु तदसत्' इति न्यायसूत्रं स्वाभिमतबोधार्थे प्रमाणतया योजयन्ति।

(3) नव्यनैयायिकानभिमतमपि अपभ्रंशानां वाचकत्वं न्यायसूत्र-भाष्यकारयोरभिमतमेव। 'आप्तोपदेशः शब्दः' इति न्यायसूत्रे प्रमाणशब्दसामान्यं

लक्षितम् । तत्र आप्तत्वं ऋष्यार्यम्लेच्छानां समानमिति भाष्ये निरूपितम् । म्लेच्छः अपभ्रंशवक्ता । 'सामयिकत्वादर्थसंप्रत्ययस्य' इति सूत्रे, प्रमाणतया लक्षितशब्दसामान्यजन्यप्रत्ययस्य तुल्यमेव सामयिकत्वं प्रतिपादितमिति अपभ्रंशानां वाचकत्वं सूत्रभाष्याभिमतमिति निरूपयन्ति ।

(4) तिङर्थस्य कारकस्य धात्वर्थे विशेषणत्वमिति पक्षे साधकतया अपार्थक-निग्रहस्थानलक्षणसूत्रभाष्ये स्थितं 'क्रियाकालयोगाभिधायि आख्यातं, धात्वर्थ-मात्रं च कालाभिधानविशिष्टम् ।' इति वाक्यमुपन्यस्य, शाब्दबोधे प्रथमान्तार्थस्य मुख्यविशेष्यत्वमिति नव्यानां कल्पना कुकल्पनेति वदन्ति, "प्रथमान्तविशेष्यको बोधः इत्यर्वाचां शुष्कलाघवतर्कैकशरणानां कुकल्पनाविलसितमिति स्पष्टमेव ।" इति ग्रन्थेन ॥ एवमेव मीमांसाधिकरणानि स्वसिद्धान्तानुसारेण योजयन्ति ।

स्फोटनिरूपणप्रसङ्गेन वेदान्तिनां मते काञ्चनाभिनवां सरणिं कल्पयन्ति। भ्रमस्थले अनिर्वचनीयपदार्थः नोत्पद्यते । अनिर्वचनीयमित्यस्य सदसद्विलक्षणत्वं नार्थः। सांख्यसूत्रोक्तरीत्या आरोपितं सत्त्वमसत्त्वञ्चेत्युभयवदित्यर्थः। मिथ्याज्ञान-मेव अविद्या स्थूला । तत्संस्कारः सूक्ष्माविद्या । संस्कारसमुदायातिरिक्ता वास-नाश्रयीभूता दण्डायमाना अविद्या नास्ति इत्येवं, व्याससूत्राणि शांकरभाष्य-वाक्यानि परमार्थसारकारिकाश्च प्रमाणीकृत्य निरूपयन्ति ।

सांख्यमतानुसारेण यागीयहिंसायाः अधर्मत्वं महताभिनिवेशेन स्थापयन्ति। वत्समालभेत इत्यत्रेव पशुमालभेत इत्यत्रापि आलम्भनं स्पर्श एव। ततश्च यागीय-हिंसा न विहिता, अपितु आर्षी इति वदन्ति ।

मीमांसावार्तिकसरणिवैलक्षण्येन, अपत्नीकस्य नैष्ठिकस्यापि भीष्मस्य अग्निहोत्राधिकारं बह्वृचब्राह्मणप्रमाणोपन्यासेन दर्शयन्ति ।

मासमधीते इति वाक्यार्थनिरूपणे व्युत्पत्तिवादोक्तस्य सारार्थं वर्णयन्ति ।

ग्रन्थावसाने,

दृष्टस्तर्केऽस्य नाभ्यास इति चिन्त्यं न पण्डितैः ।
दृषदोऽपि हि संतीर्णाः पयोधौ रामयोगतः ॥

इति श्लोकेन, रामरामभट्टाचार्यादधीतं न्यायशास्त्रं मया, न मम तर्के दृढोऽभ्यासः इति पण्डितैर्न मन्तव्यमित्यभिधानात्, सर्वतन्त्रेषु अप्रतिहतमतीनां नूतनसरणिप्रदर्शकानामेषां मेधाविशेषमसहमानैः मत्सरिपण्डितैरभियोगः आसीदिति गम्यते। दृश्यते चेदृशो वृत्तान्तः चिरात् मेधाविनां विषये।

सर्वथा शाब्दबोधोपयोगिबहुप्रमेयव्युत्पादकः प्रौढो लघुमञ्जूषाग्रन्थः पण्डितरूपैरास्वादनीयः इति ध्येयम्॥

मञ्जूषा कुञ्चिका कला इति व्याख्याद्वयेन भूषिता। आद्या अपरिपूर्णा। द्वितीया पूर्णा पायुगुण्डे वैद्यनाथमहोदयनिर्मिता। कलाकाराः तिङर्थनिरूपणावसरे स्वयं खण्डनयुक्तिभिः भेदप्रपञ्चस्य मायिकत्वं विस्तरेण निरूप्य, अद्वैततत्त्वं निरूपयन्ति। परन्तु भूषणसारस्य व्याख्याद्वयमिव नेदं व्याख्यानद्वयमुत्कर्षपदवीमारोहति।

भूषणसारव्याख्यायां काशिकायां, शाब्दिकरत्नाकरः, तार्किकरत्नाकरः, तर्करत्नाकरः, कारकवादः इत्येते बोधग्रन्था उद्धृताः। परन्तु एते न मुद्रिताः समुपलभ्यन्ते। मथुरानाथीयात् आख्यातवाददीधितिव्याख्यानात् तत्कृतं सुबर्थविचाराभिधानं बोधग्रन्थं, विश्वनाथन्यायपञ्चाननविरचितन्यायसूत्रवृत्तितः तत्कृतं सुबर्थतत्त्वालोकनामकञ्च बोधग्रन्थमवगच्छामः।

अलंकारशास्त्रे पण्डितराजनिर्मिते रसगङ्गाधरे सन्दर्भः रूपकपरिणामोपमादिस्थलेषु नव्यनैयायिकरीत्या शाब्दबोधविचारः अतीव हृदयङ्गमो विलसति।

एवं पदवाक्यप्रमाणविद्भिः विद्वत्प्रेसरैः सागरैरिवायं शाब्दबोधविचारमहाम्बुधिरतिगभीरः संवर्धितो विजयते। तत्र महोदधाववगाहं कर्तुमपारयमाणोऽहं तद्वेलासञ्चारी समीपागतकतिपयतरङ्गान् संकलय्य काञ्चनाल्पीयसीं तरङ्गिणीं निर्माय तत्रैव विचारमहोदधौ संयोजयितुमनाः शाब्दतरङ्गिण्यभिधानामभिनवां कृतिमिमां व्यरचयम्।

परोक्तं वाक्यं शृण्वन्तः तदर्थमवगम्य तत्र तत्र कार्ये प्रवर्तन्ते प्रेक्षावन्तः। वाक्यार्थावगम एव अन्वयबोधः, शाब्दबोधः इति चाख्यायते।

तत्र श्रूयमाणपदैरभिव्यक्तः स्फोटः वाक्यार्थबोधं जनयतीति वैयाकरणा मन्यन्ते। पाकानुकूलां ज्वालां काष्ठानीव श्रूयमाणपदानि वाक्यार्थावगमानुकूलं पदार्थावगमं जनयन्ति। पदाभिहिताः पदार्थाः सामर्थ्यात् तेषामन्वयबोधं जनयन्ति इति अभिहितान्वयवादिनः मीमांसावार्तिककारभट्टमतानुयायिनः प्रतिपन्नाः। व्यवहारेण पदानामितरान्वितेऽर्थे शक्तेरवधारणात् अन्वितशक्तानि श्रूयमाणपदानि, शिबिकावाहकाः एकं वहनकर्मेव, वाक्यार्थबोधमेकं जनयन्तीति अन्विताभिधानवादिनो गुरुमतानुयायिनो मीमांसकाः संगिरन्ते। व्यवहारेण पदानामेव वाक्यार्थावगमकारणतावधारणात् पदान्येव शाब्दबोधमुत्पादयन्ति। परन्तु आकांक्षालभ्यः अन्वयः (संसर्गः) न पदशक्यः। वृत्त्या स्वजन्यपदार्थोपस्थितिद्वारा आकांक्षादिसहकारेण पदानां वाक्यार्थावगमहेतुतेति नैयायिकाः प्रतिपादयन्ति।

पदेन पदार्थस्मृतिजनने उपयुज्यमानः पदतदर्थयोः संबन्धः वृत्तिः। सा—मुख्या जघन्या चेति द्विविधा। आद्या शक्तिरित्यभिधीयते। शक्तिश्च पदतदर्थयोः स्वाभाविकः नित्यः संबन्धः इति जैमिनीया वदन्ति। शब्दार्थयोस्तादात्म्येनोपकृतः वाच्यवाचकभावाख्यः अतिरिक्तः संबन्धः इति नव्यवैयाकरणाः संगिरन्ते। प्राचीना वैयाकरणास्तु बोधकत्वमेव शक्तिं मन्यन्ते। सर्वमतेऽपि अवश्यं ज्ञेयः संकेत एव समयापरपर्यायः शक्तिः। सा च अस्मात्पदादयमर्थो बोद्धव्यः इतीश्वरसंकेतरूपेति नैयायिका विवेचयन्ति।

अत पदार्थनिष्ठ लक्षणाव्यापार पदे आरोप्यते इति केचन वदन्ति। अशक्ये तात्पर्यं, शक्यादशक्योपस्थिति, शक्यमन्त्रयेन प्रतिपादक वक्त विभिन्ना प्रवधार लक्षणा मन्यते। योध्यसम्बन्धो लक्षणेति मीमांसका। शक्यसम्बन्धो लक्षणा। गङ्गात्वेन तीरस्य शाब्दबोध इत्याल्कारिका प्रतिपन्ना। शक्यसम्बन्ध साक्षात्परम्परासाधारण लक्षणा। गङ्गापदात् तीरत्वेन लक्षणया स्मृतस्य तीरत्वेनैव शाब्दबोध इति नैयायिका निष्कर्षयन्ति।

व्यञ्जना नाम वृत्ति न स्वीकरणीया। शब्दशक्तिमूलध्वनिविषयस्य शब्दशक्त्यैव बोधसम्भवात्, अर्थशक्तिमूलध्वनिविषयस्य मानसबोधसम्भवात्, प्रयोजनस्य शैत्यादे लक्षणयैव प्रतीतिसम्भवादिति नैयायिका सगिरन्ते। काव्यजीवातुरसस्य वाच्यत्वासम्भवात् तत्प्रतीते व्यञ्जनाव्यापारेणैव निर्वाहात् व्यञ्जनावृत्तिरावश्यकीति रसिका वर्णयन्ति।

एव पदार्थस्मृतिद्वारा पदैर्जायमान वाक्यार्थबोध मुख्यविशेष्यतया आख्यातार्थभावना विषयीकरोति। तिङन्त विना वाक्यपरिसमाप्तेरभावात् सुबन्तापेक्षया तिङन्तस्य प्राधान्यम्। तत्रापि प्रकृतिभूतधातोरर्थापेक्षया प्रत्ययार्थभावनाया प्राधान्यमिति, 'तद्भूताना क्रियार्थेन समाम्नाय' इति सूत्रसिद्ध भावनामुख्यविशेष्यको बोध जायते इति मीमांसका प्रतिपादयन्ति। 'क्रियाप्रधानमाख्यातम्' इति **महाभाष्यात्**, 'भावप्रधानमाख्यातम्', 'यत्रोभे भावप्रधाने भवत' इत्यादि**निरुक्तवाक्याच्च** महर्षिसमत धात्वर्थमुख्यविशेष्यक एव बोध समुचित, न प्रथमान्तार्थविशेष्यक। तथा सति पश्य मृगो धावतीत्यत्र एकवाक्यतानुपपत्तेरिति वैयाकरणा वदन्ति। क्रियापद विनापि पण्डितश्चैत्र इत्यादौ प्रथमान्तार्थविशेष्यकबोधस्य क्लृप्तत्वात्, चैत्र पचतीत्यादावपि सख्यातिरिक्तार्थशून्यप्रथमाप्रकृत्यर्थस्य निर्व्यापारत्वेन व्यापाराकाङ्क्षणात्, आख्यातार्थकृतिरूपव्यापारस्य व्यापार्याकाङ्क्षणात्, उभयाकाङ्क्षया आख्यातार्थस्य प्रथमान्तार्थेऽन्वयस्य युक्तत्वात्, प्रयाति पुरुष तस्य पादयोरभिवादय इत्यत्र प्रकृतप्रधानवाचकतच्छब्देन प्रथमान्तार्थपुरुषस्य परामर्शाच्चानुभवसिद्ध प्रथमान्तार्थमुख्यविशेष्यक एव बोध स्वीकर्तुमुचित इति नैयायिका व्युत्पादयन्ति।

वक्तव्यबाहुल्यात् गहनं स्फोटवादं विहायान्ये दार्शनिकानां निरुक्ताः सिद्धान्तभेदाः स्वमतिशोधनं परमं प्रयोजनमभिसन्धाय पक्षान्तरनिराकरणपूर्वकं विवेचिताः शाब्दतरङ्गिण्याम् । प्रयतितश्च न्यायवासनया यथामति, न्यायसिद्धान्ते वैयाकरणमीमांसकादिभिरुदीरितावद्यानां दूरीकरणे । अत्र स्थितं दोषजातं दूरीकृत्य, स्याच्चेद्गुणलेशः तदनुमोदनेनानुग्राह्योऽयं जनः इति सहृदयान् पण्डितप्रकाण्डानभ्यर्थये ।

सर्वदार्शनिकादृतायां रमणीयायां शाब्दसरणौ तत्तद्विषयविचारेणाप्रतिबद्धसञ्चारे लेखने च विशेषतोऽभिरुचिं निरन्तरप्रश्नोत्तरधोरण्या महतीमापादितवन्तः इदंग्रन्थप्रणयननिदानभूताः प्रियसुहृदः गोश्रीमहाराजाश्रिताः पण्डितराज-सहृदयतिलक-बिरुदभूषिताः रामपिषारकमहोदयाः दिवं गता अपि मदीयहार्दधन्यवादानर्हन्ति ।

एतन्निबन्धप्रमेयजातं लेखद्वारा समक्षं च येषां साधुवादेन परिशुद्धमभूत्, यैश्चैवं प्रमेयसंकलनेन ग्रन्थप्रणयने प्रोत्साहितोऽयं जनः, प्रतिभाप्रसरविस्मापितनिखिलान्तर्वाणिकुलाः मादृशविद्वज्जनवत्सलाः ते गोश्रीजनपदेश्वराः श्रीपरीक्षिन्महाराजाः दिवमलंकुर्वाणाः मदीयं ग्रन्थमिमं प्रकाशितं बुध्वा निर्भरानन्दभरिता भवेयुरिति दृढो मे विस्रम्भः ।

आबाल्यात् जनमिमं सर्वथा रक्षन्तः पादचरिणो महेश्वरमूर्तयः श्रीकाञ्चीकामकोटिपीठाधिपाः जगद्गुरवः परमहंसपरिव्राजकाचार्य-शङ्कराचार्यश्रीचरणाः मयैतत्प्रबन्धप्रकाशनानुग्रहकरणायाभ्यर्थिताः स्वीयापाङ्गसंवर्धितेन मद्रपुरी-संस्कृतसमाजेन तत्प्रकाशनं विधाय, कृपया श्रीमुखञ्च प्रदाय मामन्वगृह्णन् । तेषामुदारचरितानां परमाचार्याणां चरणकमलयोः पादपातैः प्रणामपरम्परां वितनोमि ।

भूमिकालेखनेन ग्रन्थमिमं महीकृतवतां, शास्त्ररक्षकाणां, अध्यात्मदर्शनार्थविचारसुखानुभवनिरतानां, अण्णामलै-विश्वविद्यालयाद्विश्रान्तं मां स्वकीयसंस्कृतकलाशालायामध्यापकपदे नियोजनेन शारीरकार्थविचारकुतूहलिनं कृतवतां, मद्रपुरी-संस्कृतसमाजाध्यक्षाणां ब्रह्मश्रीसंपन्नानां पद्मभूषण-के. बालसुब्रह्मण्यार्यवर्याणां संनिधौ नैकान् नमोवाकान् सप्रश्रयं समर्पयामि ।

महतादरेण लिबर्टिमुद्रणालये मुद्राप्य ग्रन्थस्यास्य प्रकाशनेन बहूपकृतवद्भ्यः, संस्कृतसमाजसामाजिकेभ्यः परमाचार्यकैङ्कर्यनिरतेभ्यः ब्रह्मश्रीयुत-के. नीलकण्ठार्येभ्यः मदीया कृतज्ञता निवेदयामि ।

संस्कृतसमाजाय, विशिष्य प्रस्तावनापरिशीलनादिना प्रकाशने बहूपकृतवद्भ्यः पद्मभूषण-डाक्टर्-वे. राघवमहोदयेभ्यः, विना विलम्बं ग्रन्थस्यास्य समाजेन प्रकटीकरणे बद्धपरिकरेभ्यः संस्कृतसमाजकार्यदर्शिभ्य. ब्रह्मश्रीयुत - टि. वि. विश्वनाथार्यवर्येभ्यश्च हार्दाननेकान् धन्यवादान् समर्पयामि ।

फ्रूफ (Proof)-पत्रशोधकेषु दुर्लभायाः शास्त्रीयव्युत्पत्तेर्बलेन सावधानं पत्राणि परिशोध्य मुद्रापणस्य शोभनतामापादितवद्भ्यः का. श्री श्रीनिवासाचार्येभ्यः मदीयानि हार्दाभिनन्दनानि वितरामि ।

इदंग्रन्थप्रकाशने परमनिदानभूतानां जगद्गुरूणां चरणनलिनयोः पुनः साष्टाङ्गप्रणामपरम्परां विधाय विरमति लेखनदैर्घ्यकरणात् ।

संस्कृतकलाशाला
मद्रपुरी
18—4—1969

सुधीजनविधेयः,
वि. सुब्रह्मण्यशास्त्री

श्रीगुरुभ्यो नमः

# शब्दविचारोपयोगिनां मौलिकानां शास्त्रार्थानां तत्तन्मतभेदसूची

| 1 | 2 | | 3 | | 4 | 5 |
|---|---|---|---|---|---|---|
| | वैयाकरणाः | | मीमांसकाः | | नैयायिकाः | इतरे |
| शास्त्रार्थः | प्राचीनाः | नवीनाः | भाट्टाः | प्राभाकराः | | |
| 1. वाक्यार्थ-बोधे करणम् | स्फोटः | स्फोटः | पदैरभिहिताः पदार्थाः । | अन्विताार्थे शक्तानि पदानि । | तत्त्वार्थे शक्तानि पदानि आकाङ्क्षादिसहकारेण पदार्थस्मृतिद्वारा वाक्यार्थबोधे करणम् । | |
| 2. शक्तिः (अभिधा) | शब्दगतमनादिबोधकत्वं बोधजनकतावच्छेदविषयिताकत्वपर्यवसितम् | शब्दार्थतादात्म्येनोपकृतः वाच्यवाचकभावाख्यः अतिरिक्तः संबन्धः । तादात्म्यमपि शक्त्युपकारकत्वात् | पदपदार्थयोः स्वाभाविकः संबन्धः नित्यः । | पदानामर्थबोधे सामर्थ्यम्। पदानां स्वार्थे जातौ स्मारकशक्तिः । अन्वितेऽर्थे आनुभाविकी शक्तिः। | अवश्यज्ञेयः समयः संकेतः । नित्यः ईश्वरसंकेतः शक्तिः । अनित्यः आधुनिकसंकेतः परिभाषा। संकेतः-इच्छा । | बोधानुकूलशक्तिमत्पदस्य ज्ञानं संस्कारो वा अभिधा इति **काव्यप्रदीपकाराः।** शक्त्या प्रतिपादकत्वमभिधेति **वृत्तिवार्तिककृतः।** |

| 1 | 2 | | 3 | | 4 | 5 |
|---|---|---|---|---|---|---|
| शास्त्रार्थः | वैयाकरणाः | | मीमांसकाः | | नैयायिकाः | इतरे |
| | प्राचीनाः | नवीनाः | भाट्टाः | प्राभाकराः | | |
| | | शक्तिरिति व्यपदिश्यते । | | | | |
| 3. एकार्थीभावः | समासे विशिष्टार्थे शक्तिः । | समासे अजहत्स्वार्था वृत्तिः । | वाक्ये इव समासेऽपि व्यपेक्षैव, नैकार्थीभावः । | — | शक्तिः पदमात्रवृत्तिः, समासे पदसमुदाये न शक्तिः । | — |
| 4. लक्षणा | सर्वे सर्वार्थवाचकाः। लक्षणावृत्तिर्नास्ति । प्रयोगप्राचुर्यं तदभावाभ्यां शक्तिरिति लक्षणेति च व्यवहारः । | सर्वेषां शब्दानां सर्वार्थवाचकत्वात् शक्यत्वेन प्रसिद्धान्यबोधोपयिकः व्यक्तिविशेषबोधोपयिकश्च शक्तिविशेषः । | वाक्यार्थबोधानुकूलः पदार्थसंबन्धः । अन्वयनिष्ठं पदार्थप्रतियोगिकत्वं लक्षणेति, वाक्यार्थः लक्ष्यः इत्युच्यते । | वाक्यार्थान्वयिगतपदार्थसंबन्धः । वाक्येऽपि लक्षणास्ति । | शक्यसंबन्धः । पदमात्रवृत्तिः । | अर्थगतः बोधानुकूलः शब्दे आरोप्यते। लक्षणा आरोपिता क्रिया इति काव्यप्रकाशकाराः। मुख्यार्थसंबन्धेन प्रतिपादकत्वमिति वृत्तिवार्तिककाराः। |

| 1 | 2 | | 3 | | 4 | 5 |
|---|---|---|---|---|---|---|
| शास्त्रार्थः | वैयाकरणाः | | मीमांसकाः | | नैयायिकाः | इतरे |
| | प्राचीनाः | नवीनाः | भाट्टाः | प्राभाकराः | | |
| | | | | | | शक्यादशक्योपस्थितिरिति अशक्ये तात्पर्यमिति च नैयायिकैकदेशिनः। |
| 5. लाक्षणिकबोधः | — | शक्यतावच्छेदकगङ्गात्वादिरूपेण लक्ष्यतीरादिबोधः आहार्यारोपः। | — | — | पदात् लक्ष्यतावच्छेदकः रूपेणोपस्थितस्य तेनैव रूपेण शाब्दबोधः। | लक्षणया तीरत्वेनोपस्थितस्य गङ्गात्वेन शाब्दबोधः इति **रसगङ्गाधरकाराः**। |
| 6. व्यञ्जना | — | शब्दतदर्थादिसाधारणः व्यापारविशेषः। | — | व्यङ्ग्याभिमतेऽपि शब्दस्याभिधैव इषोरिव दीर्घदीर्घतरो व्यापारः | शक्त्या, लक्षणया, मनसा वा व्यङ्ग्याभिमतस्यार्थस्य प्रतीतिः। | काव्यजीवातुरसप्रतीतये शब्दार्थसाधारणी व्यञ्जना नआवश्यकीति |

| 1 | 2 | | 3 | | 4 | 5 |
|---|---|---|---|---|---|---|
| शास्त्रार्थ. | वैयाकरणा | | मीमांसका | | नैयायिका | इतरे |
| | प्राचीना | नवीना. | भाट्टा | प्राभाकरा | | |
| | | | | न व्यञ्जना । | व्यञ्जनावृत्तिरस्ति । | आलङ्कारिका· । |
| 7. सुवर्थः | आश्रय, अवधि, उद्देश्य, सवन्धश्च । अभेदेन प्रकृत्यर्थान्वित सुवर्थं धात्वर्थे ऽन्वेति । शक्तिपक्षे आश्रयत्वादिक सुवर्थं । | अखण्डकर्मत्वादिमान् विशेषणविशेष्यभावश्च द्वितीयादिद्योत्य । पञ्चक प्रातिपदिकार्थं । कर्मीभूतग्रामादि सुबन्तार्थं धात्वर्थान्वयी। | अखण्ड कर्मत्वादिक सुवर्थं । तत्रैव सुवर्थसख्या अन्वेति। सुवर्थ परम्परासवन्धेन भावनायामन्वेति। | — | कर्मत्वमाधेयत्व - पर्यवसित द्वितीयार्थं साक्षात्सवन्धेन धात्वर्थफलान्वयी । सुवर्थसख्या प्रकृत्यर्थे विशेषणम्। | — |
| 8. धात्वर्थ | फल व्यापारश्च सर्वधातूनामर्थं । | कृतिपर्यन्तव्यापारो धात्वर्थं फलावच्छिन्नव्यापार, व्यापारा- | फलावच्छिन्नव्यापार धात्वर्थ कृति न धात्वर्थान्तर्भूता । | — | सकर्मकधातूना फलावच्छिन्नव्यापारोऽर्थ । फल व्यापारश्चार्थ | फलमात्र धात्वर्थ इति मण्डलमिश्रा । व्यापारमात्र धात्वर्थ इति प्राचीन- |

| 1 | 2 | | 3 | | 4 | 5 |
|---|---|---|---|---|---|---|
| शास्त्रार्थः | वैयाकरणाः | | मीमांसकाः | | नैयायिकाः | इतरे |
| | प्राचीनाः | नवीनाः | भाट्टाः | प्राभाकराः | | |
| | | वच्छिन्न फलञ्च धात्वर्थः । | | | इति खण्डशक्ति-पक्षः । कृतिः न धात्वर्थः । अकर्म-काणां व्यापार-मात्रमर्थः । | नैयायिकाः । |
| 9. तिङर्थः | आश्रयः । धात्वर्थे विशेषणम् । | अखण्डकर्तृत्वकर्म-त्वादिमान् । | कृतिः - भावना धात्वर्थस्य विशे-ष्यभूता । निरूढ-लक्ष्यः अखण्ड-कर्तृत्वादिमानपि भावनायामन्वेति। | — | कृतिः शक्यार्थः । आश्रयत्वं प्रतियो-गित्वञ्च निरूढ-लक्ष्यः प्रथमान्ता-र्थे विशेषणम् । | व्यापारः इति मण्डनमिश्राः । |
| 10. लकारार्थ-कालः | धात्वर्थान्वयी । | — | तिङर्थभावना-न्वयी । | — | तिङर्थकृतौ, आश्र-यत्वादेः तिङर्थ-तास्थले धात्वर्थे चान्वेति । | — |

| 1 | 2 | | 3 | | 4 | 5 |
|---|---|---|---|---|---|---|
| शास्त्रार्थः | वैयाकरणाः | | मीमांसकाः | | नैयायिकाः | इतरे |
| | प्राचीनाः | नवीनाः | भाट्टाः | प्राभाकराः | | |
| 11. लिङर्थः | इष्टसाधनत्वम् । | प्रेरणात्वरूपाखण्डधर्मवान् । | प्रवृत्त्यनुकूलो व्यापारः प्रवर्तना। | नियोगः । | बलवदनिष्टाननुबन्धित्वसहितमिष्टसाधनत्वं, कृतिसाध्यत्वञ्च । | — |
| 12. वाक्यार्थबोधे मुख्यविशेष्यः | धात्वर्थो व्यापारः सोऽपि नञ्समभिव्याहारे, नञर्थाभावे विशेषणम् । | धात्वर्थः । कर्त्राख्याते व्यापारः, कर्माख्याते फलञ्च विशेष्यतया भासते । | आख्यातार्थभावना । | — | प्रायः प्रथमान्तार्थः, क्वचित् निपातार्थः, अन्यत्र धात्वर्थः, अपरत्र आख्यातार्थश्च । | — |

श्रीगुरुभ्यो नमः

शाब्दतरङ्गिण्याः

# विषयानुक्रमणिका

## CONTENTS

विषय: पुटसंख्या

शिवमस्तु

श्रीगुरुभ्यो नमः

# सांकेतिकाविवरणम्

## LIST OF ABBREVIATIONS

(1) क. त. — कल्पतरुः

(2) का. सू. — कातन्त्रसूत्रम्

(3) का. वा. — कात्यायनवार्तिकम्

(4) का. प्र. — काव्यप्रकाशः

(5) काव्या. — काव्यादर्शः

(6) छा. — छान्दोग्योपनिषत्

(7) ध्वन्या. — ध्वन्यालोकः

(8) न्या. सू. — न्यायसूत्रम्

(9) न्या. वा. — न्यायरत्नमालावाक्यार्थनिर्णयः

(10) प. वा. र. — पदवाक्यरत्नाकरः

(11) पा. सू. — पाणिनिसूत्रम्

(12) पू. सू. — पूर्वमीमांसासूत्रम्

(13) वृ. टी. — वृहट्टीका

(14) भ. वा. — भट्टवार्तिकम्

(15) भू. का. — भूषणसारकारिका

(16) वा. मा. — वाक्यार्थमातृका

(17) वा मा स — वाक्यार्थमातृकासग्रहश्लोकः
(18) श व्या वि — शब्दव्यापारविचार.
(19) शा भा — शाबरभाष्यम्
(20) श्लो वा — श्लोकवार्तिकम्
(21) स शा — सक्षेपशारीरकम्
(22) ह का — हरिकारिका

शुभ भूयात्

---

श्रीः

श्रीगुरुभ्यो नमः

# शाब्दतरङ्गिणी

## प्रथमस्तरङ्गः

श्रीगणेशाय नमः

विद्याधिपं विश्वगुरुं विश्वाराध्यं महेश्वरम् ।
ब्रह्मविद्यासमाश्लिष्टं कलये हृदि सन्ततम् ॥ १ ॥

गभीरे शाब्दविज्ञानविचारणमहाम्बुधौ ।
सर्वतीर्थकरैर्धीरैः सादरं सुनिषेविते ॥ २ ॥

स्रवन्तीं चापलात् स्वैरमिमां शाब्दतरङ्गिणीम् ।
संयोजयितुमिच्छामि बालभावसमुत्सुकः ॥ ३ ॥

अन्तर्वाणिकुलं याचे सह्यतां साहसं मम ।
स्नेहपूरितया दृष्ट्या मत्कृतिश्च विभाव्यताम् ॥ ४ ॥

इह खलु सर्वे स्वानधिगतमर्थं परेभ्यो बुध्वा समीहितसाधने प्रवर्तन्ते, अनिष्टसाधनाच्च निवर्तन्ते । लौकिकाः परीक्षकाश्च बुभुत्सितं श्रोतृपुरुषानवगतमर्थमवगमयितुमनसः वाक्यमुच्चारयन्ति । प्रतिपित्सितञ्च प्रमेयं पृच्छन्ति बोद्धारः । एवं लोकयात्रां निर्वर्तयति शब्दः । अत एव शब्दः सर्वार्थप्रकाशकत्वात् ज्योतिरित्यभिधीयते ।

यदाह आचार्यदण्डी—

इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥ इति ॥

न हि भूयो भूयः समधिगतं पदार्थमात्रं बुभुत्सन्ते बोद्धारः; न वा प्रतिपादयन्ति

प्रेक्षावन्तः। तथा सति अबुभुत्सितावबोधने अनवधेयवचनतया ते न लौकिकाः नापि परीक्षकाः इत्युन्मत्तवदुपेक्षणीया भवेयुः। अतः अनधिगतं वाक्यार्थमेव बुभुत्सन्ते बोधयन्ति च। वाक्यार्थश्च पदार्थानां संसर्गः, अनेकगुणभूतपदार्थ-विशिष्टः एकः प्रधानपदार्थो वा, पदार्थानामन्वितावस्था वा। तद्बोधः वाक्यार्थ-बोधः, अन्वयबोधः, शाब्दबोधः इति चाख्यायते। स च शाब्दबोधः केन करणेन कैः सहकारिभिः किमाकारो जायते इत्यत्र विविच्यते।

तत्र वाक्यार्थो लाक्षणिक इति व्यवस्थापयन्तः मीमांसावार्तिककारमिश्राः तदनुयायिनश्च "पदानि स्वं स्वमर्थमभिधाय निवृत्तव्यापाराणि; अथेदानीं पदार्था अवगताः सन्तः वाक्यार्थमवगमयन्ति" (शा. भा. १-१-२५) इति वाक्यविदा वचनं प्रमाणीकुर्वन्तः, पदसमुदायात्मकवाक्यघटकपदेभ्यः अभिहितैः पदार्थैः आकाङ्क्षादिसहकृतैः वाक्यार्थबोधो जायते, न पदं वाक्यार्थबोधे कारण-मिति स्वीकुर्वन्तः, अभिहितेन पदार्थेन करणेन अन्वयः संसर्गबोधः इत्यभिहि-तान्वयवादमुररीकुर्वन्ति।

तेषामयमभिसन्धिः—

पदकदम्बश्रवणानन्तरमपि व्युत्पत्तिग्रहाभावरूपान्मानसापराधादविदित-पदार्थः कोऽपि न वाक्यार्थमधिगच्छति, अधिगच्छति तु पदकदम्बजनितस्वार्थोप-स्थित्यनन्तरम्। अतोऽन्वयव्यतिरेकाभ्यां पदार्थज्ञानस्य ज्ञायमानपदार्थस्यैव वा वाक्यार्थबुद्धौ कारणता स्वीकरणीया।

ननु गुणभूतपदार्थान्तरान्वितप्रधानपदार्थो वाक्यार्थः। तञ्च वाक्यार्थं पदान्येवावगमयितुं शक्तानि। पदानामितरान्वितस्वार्थे शक्तत्वात्। आकाङ्क्षिता-सन्नयोग्यार्थान्तरान्वितार्थाभिधायीनि पदानि वाक्यमिति तद्वाक्यार्थबोधजनकम्।

तदुक्तम्—

पदान्याकांक्षितासन्नयोग्यार्थान्तरसंगतान्।
स्वार्थानभिदधन्तीह वाक्यं वाक्यार्थगोचरम्॥ इति।

तथा च पदानामेव वाक्यार्थबुद्धिकारणता स्वीकर्तुमुचितेति चेत्—

न—वाक्यघटकानां सर्वेषां पदानामितरान्विताथाभिधानशक्तिस्वीकारे, पदस्य जातिरर्थः, अस्य द्रव्यं, अस्य गुणः, अस्य क्रिया अर्थः इति र्थविभाग एव दुरधिगमः स्यात्, सर्वस्मात् पदात् कदम्बाकारार्थप्रतीतेः। ाभिनवविरचितश्लोकाद्वाक्यार्थप्रतीतिर्न स्यात्, तत्रान्वितपदार्थे व्युत्पत्तेः तुमशक्यत्वात्।

किञ्च, वाक्यघटकपदानां सर्वेषामपि इतरान्विताथाभिधायकत्वात् यावन्ति ानि तावन्तो वाक्यार्थाः संपन्ना इति सर्वत्र वाक्यभेदः प्रसज्येत।

अपि च, पदं किमनभिहितेनार्थान्तरेणान्वितमर्थमभिधत्ते, उताभिहितेन। द्ये पदान्तरवैयर्थ्यम्। वाक्यघटकेनैकेन पदेन पदार्थान्तरान्वितार्थरूपवाक्यार्थ- धनात्। द्वितीये, तण्डुलं पचतीत्यत्र तण्डुलपदं पचतिपदाभिहितपाकक्रिया- वततण्डुलाभिधायकं, पचतिपदञ्च तण्डुलपदाभिहितार्थान्वितपाकक्रियाभिधायक- त्यायातम्। तथा च तण्डुलपदेन अन्वितस्वार्थाभिधानं पचतिपदेनाभिधान- पेक्षते पचतिपदेनान्विताथाभिधानं च तण्डुलपदेनार्थाभिधानमपेक्षते इत्यन्योन्या- श्रयो दोषः।

न च—अभिधानं स्मरणादन्यदेव, तण्डुलादिपदं श्रवणवेलायां न पाकान्वितं तण्डुलमभिधत्ते, अन्वयप्रतियोगिपाकस्यानुपस्थितेः। अपि तु साहचर्यात् तण्डुलस्वरूपं स्मारयति न पदशक्त्या। ततश्च तत्तत्पदार्थस्वरूपस्मरणे सति अन्वयप्रतियोगिज्ञानसंभवात् तण्डुलादिपदं इतरान्वितं स्वार्थमभिधत्ते इति नान्यो- न्याश्रय इति शङ्क्यम्।

स्मरणं हि स्वकारणानुभवसमानाकारमेव जायते। पदार्थमात्रेण पुरुष- प्रवृत्त्यादिव्यवहारानिर्वर्तनात् इतरान्वितार्थ एव गामानयेत्यादिवाक्यप्रयोगः दृश्यते। तस्मात् गोशब्दस्यानयनान्वितगोरूपार्थेन सहचरितत्वात् गां पश्येत्यत्रापि गोशब्दः आनयनान्वितगामेव स्मारयेत् न गोमात्रम्। एवञ्च स्मृतानयनान्वयेनैव शान्ताकांक्षत्वात् गोपदं न पश्यपदेनान्वियात्। एवं पश्येति पदमपि प्रासादं पश्येत्यत्र प्रासादान्वितदर्शनसहचरितमिति प्रासादान्वितदर्शनमेव स्मारयेदिति

स्मृतप्रासादान्वयेन शान्ताकाङ्क्ष पश्येति पदं गामिति पदेन नान्वियात् । तथा च सर्वत्र वाक्यार्थप्रतीतिरेव दुर्लभा भवेत् ।

न च गां पश्येत्यत्र गोपदं गामेव स्मारयति न त्वानयनादिकमपि, गा बधानेत्यादौ आनयनाप्रतीत्या व्यभिचारात्, गा बधान, गामानय इत्यादिषु गोपदघटितवाक्येषु प्रयुक्तेषु गोरूपार्थो नियमेन भासते इत्यव्यभिचाराद्गोपद गामेव स्मारयति नानयनान्वितगामिति वाच्यम् ।

[1]पटुत्वभ्यासादरप्रत्ययाहिता हि भावना प्रबोधवती स्मृतिहेतु संगीयते । भावनायाश्च प्रबोधाख्य उद्बोधः [2]प्रणिधानसूत्रोक्तैः प्रणिधानादिभिर्भवति । न चाव्यभिचारे सत्येव भावना स्मृतिं जनयतीति नियमोऽस्ति । तथा च साहचर्याधीनोद्बोधवती भावना आनयनान्वितगामेव स्मारयेदिति निराकाङ्क्ष गोपद न पश्येति पदेनान्वियादिति वाक्यार्थबुद्धिरेव नोन्मेष लभते ।

किञ्च—पदानामितरान्विते शक्तिवादिना पदशक्तेरन्वयमात्रविषयत्वे तस्याविशेषात् सर्वशब्दानां पर्यायताप्रसङ्गः ।

न च—अन्वितगवादिरूपार्थवाचक गवादिपद मान्वयस्य वाचकम् । व्यक्तेरवाचकेऽ जातिवाचकगवादिपदे जातौ बुध्यमानायां व्यक्तिरपि बुध्यते । व्यक्तिं विना जातेर्भानासभवात् जातिज्ञान व्यक्तिमपि विषयीकरोति । तथैव अन्वितार्थज्ञानमन्वयमपि विषयीकरोति । अन्वितार्थानाञ्च स्वरूपतो भेदान्न सर्वपदानां पर्यायतापत्तिरिति वाच्यम् ।

---

टिप्पणी—

[1] पटुप्रत्ययेन अभ्यासप्रत्ययेन आदरप्रत्ययेन च संस्कारो भावनाख्यः जायते । स च उद्बोधवान् उद्बुद्ध स्मृतिं जनयति । आश्चर्यदर्शनं पटुप्रत्यय , शास्त्राधिगमादिविद्या अभ्यासप्रत्ययः; अपूर्वमर्थं दिदृक्षमाणस्य विशिष्य मन चक्षुषि स्थापयितु यदपूर्वदर्शन जायते स आदरप्रत्यय.॥

[2] प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसबन्धानन्तर्यवियोगैककार्यविरोधातिशयप्राप्तिव्यवधानसुखदु खेच्छाद्वेषभयार्थित्व - क्रियारागधर्माधर्मनिमित्तेभ्यः ॥ (न्या सू ३-२-४२ )

न—अन्विताभिधानमतेऽपि शक्तित्रयकल्पनायास्तुल्यत्वात्। पदेन हि स्वार्थः स्मार्यते। निर्विभक्तिकघटादिपदादपि घटत्वस्मरणमङ्गीक्रियते। अन्त्यपदोच्चारणानन्तरं तावत्पदविषयकमेकं स्मरणं जायते। तादृशस्मरणविषयीभूतानि पदानि अन्वितार्थमवगमयन्ति। एवञ्च पदानां पदार्थज्ञानजननशक्तिरेका, अन्वितार्थप्रतिपादनशक्तिरपरा, सकलपदविषयकस्मरणविषयीकृतस्यैव पदकदम्बस्य अन्वितार्थप्रतिपादनसामर्थ्यमिति पदगतान्वितार्थप्रतिपादनशक्त्याधानशक्तिरन्या तावत्पदविषयकस्मरणे कल्पनीया। तथा च न शक्तिकल्पनागौरवमस्मन्मते इति बोध्यम्।

अपि च पदार्थानामेव परस्परान्वयार्हत्वात्तेषु परस्परान्वयरूपवाक्यार्थबोधसामर्थ्यं क्लृप्तमेव। परन्तु नियतान्वयप्रतीतिः एकवाक्यताबलेन कल्पनीयेति नियममात्रं कल्पनीयम्। पदानान्तु अन्वितार्थप्रतिपादनशक्तिरत्यन्ताक्लृप्ता कल्पनीया। तथा च धर्मिकल्पनातो धर्मकल्पनाया लघीयस्त्वात् पदार्थानामेव वाक्यार्थावगमहेतुतोचिता।

किञ्च—पदानां पदार्थानाञ्चोभयेषामपि वाक्यार्थावगमसामर्थ्यमपूर्वमेव कल्पनीयमित्यङ्गीकारेऽपि पदार्थे एव तत्कल्पनमुचितं लाघवात्। यद्यपि यत्र एकं पदं एकश्च पदार्थः तत्र 'घटवद्भूतल'मित्यादौ अन्विताभिधानवादे अभिहितान्वयवादे च शक्तिकल्पनं तुल्यम्। अन्विताभिधानवादे प्रागुक्तसरण्या घटपदस्य अन्वये अन्विते च शक्तिद्वयम्, अभिहितान्वये च घटपदे अर्थाभिधानशक्तिः पदार्थे वाक्यार्थावगमशक्तिरिति शक्तिद्वयं कल्पनीयम्। एवं यत्र एकस्य पदस्य त्रयोऽर्थाः, यथा अक्षपदस्य इन्द्रियं विभीतकं विदेवनञ्चार्थः, 'अक्षैः पश्यती'त्यत्रेन्द्रियाणां, 'अक्षमारोहती'त्यत्र विभीतकस्य, 'अक्षैर्दीव्यती'त्यत्र विदेवनस्य च बोधात्, तत्रापि स्थले अक्षशब्दस्य प्रत्यर्थं अन्वये अन्विते च शक्तिकल्पनाच्छक्तिषट्कमन्विताभिधानमते। अभिहितान्वयमतेऽपि अक्षशब्दस्य त्रिषु अर्थेषु शक्तित्रयं त्रयाणां पदार्थानां वाक्यार्थबुद्धिशक्तित्रयमिति शक्तिषट्कमिति शक्तिकल्पनं तुल्यमेव। तथापि यत्र नानाशब्दानामेकोऽर्थः, यथा—पाणिकरहस्तशब्दानांत्रयो-

सह भासते इति वाच्यम्। व्यक्तिप्रतीतिर्न हि सम्भवति कारणाभावात्। न तावच्छब्द कारणं, शब्दस्य व्यक्तावशक्तत्वात्। जातिप्रतीति कारणमिति चेत्, तस्या पूर्वमभावात् कथं व्यक्तिं प्रतीयात्, अप्रतीयमानया च व्यक्तया सह कथं जातिः प्रतीयात्, तस्मात् शब्दाज्जातेरेव प्रतीतिर्भवति, तत आक्षेपात् आनयनकर्मत्वा-द्यनुपपत्त्या व्यक्तिर्भासते इति न व्यक्तिः शाब्दबोधविषयः इत्येवाङ्गीकर्तव्यम्। तस्मादभिधेये शक्तिः नान्वयपर्यन्तेति अन्वये पदार्थे च शक्तिद्वयं कल्पनीयमिति गौरवमापतति। पदानां स्वार्थमात्रे शक्तिकल्पनायां लाघवञ्च भवति।

– तस्मात् पदैः पदार्था अभिधीयन्ते। ते चाकाङ्क्षादिसहकृताः परस्पर-मन्वयमवगमयन्तीति युक्तम्।

ननु पदाभिहितानामर्थानां वाक्यार्थज्ञानकारणतास्वीकारे शक्तित्रयकल्पनागौरवमापतति। एका पदानां पदार्थाभिधानशक्तिः, अन्या पदार्थानां वाक्यार्थावगमशक्तिः, अपरा पदानां पदार्थेषु वाक्यार्थावगमशक्त्याधानशक्तिः कल्पनीया। शब्दान्येन प्रत्यक्षादिप्रमाणेनोपस्थितानां परस्परान्वयबोधजनकता न दृश्यते। अतः शब्दाभिधेयानां पदार्थानां वाक्यार्थावगमशक्तिः कल्पनीया। पदार्थेषु तादृशशक्त्युत्पत्तौ च शब्दसंबन्ध एव हेतुरित्याश्रयणीयम्। शब्दो हि विशिष्टार्थ-प्रतिपत्तिपरतया लोके प्रयुज्यमानो दृश्यते। तदाहुः मण्डनमिश्राः—'विशिष्टार्थ-प्रयुक्ता हि समभिव्याहृतिर्जने' इति। शब्दश्च साक्षाद्वाक्यार्थप्रतिपादने न समर्थ इति पदार्थानवान्तरव्यापारीकरोति। ते च पदार्था यदा योग्यान्वयबोधनसमर्था तदैव तेषां व्यापारता स्यादिति विशिष्टार्थबोधतात्पर्यकशब्दबोध्यत्वादेव पदार्थानां वाक्यार्थावगमशक्तिराविर्भवति। इत्यञ्च शक्तित्रयकल्पनया गौरवं भवति।

तदाहुः —

किं तु तेषामदृष्टैषा शक्तिर्मानान्तरोद्गतौ।
कल्प्या विशिष्टार्थपरपदसंस्पर्शभाविता॥ (वा मा)॥ इति॥

पदानामेव वाक्यार्थेऽन्वयशक्तिवादिमते तु पदानामन्वितार्थे एकैव शक्तिः कल्पनीया। पूर्वोक्तदिशा शक्तिद्वयं वा कल्पनीयमिति लाघवमिति चेत्—

न—अन्विताभिधानमतेऽपि शक्तित्रयकल्पनायास्तुल्यत्वात् । पदेन हि स्वार्थः स्मार्यते । निर्विभक्तिकघटादिपदादपि घटत्वस्मरणमङ्गीक्रियते । अन्त्यपदोच्चारणानन्तरं तावत्पदविषयकमेकं स्मरणं जायते । तादृशस्मरणविषयीभूतानि पदानि अन्वितार्थमवगमयन्ति । एवञ्च पदानां पदार्थज्ञानजननशक्तिरेका, अन्वितार्थप्रतिपादनशक्तिरपरा, सकलपदविषयकस्मरणविषयीकृतस्यैव पदकदम्बस्य अन्वितार्थप्रतिपादनसामर्थ्यमिति पदगतान्वितार्थप्रतिपादनशक्त्याधानशक्तिरन्या तावत्पदविषयकस्मरणे कल्पनीया । तथा च न शक्तिकल्पनागौरवमस्मन्मते इति बोध्यम् ।

अपि च पदार्थानामेव परस्परान्वयार्हत्वात्तेषु परस्परान्वयरूपवाक्यार्थबोधसामर्थ्यं क्लृप्तमेव । परन्तु नियतान्वयप्रतीतिः एकवाक्यताबलेन कल्पनीयेति नियममात्रं कल्पनीयम् । पदानान्तु अन्वितार्थप्रतिपादनशक्तिरत्यन्ताक्लृप्ता कल्पनीया । तथा च धर्मिकल्पनातो धर्मकल्पनाया लघीयस्त्वात् पदार्थानामेव वाक्यार्थावगमहेतुतोचिता ।

किञ्च—पदानां पदार्थानाञ्चोभयेषामपि वाक्यार्थावगमसामर्थ्यमपूर्वमेव कल्पनीयमित्यङ्गीकारेऽपि पदार्थे एव तत्कल्पनमुचितं लाघवात् । यद्यपि यत्र एकं पदं एकश्च पदार्थः तत्र 'घटवद्भूतल'मित्यादौ अन्विताभिधानवादे अभिहितान्वयवादे च शक्तिकल्पनं तुल्यम् । अन्विताभिधानवादे प्रागुक्तसरण्या घटपदस्य अन्वये अन्विते च शक्तिद्वयम्, अभिहितान्वये च घटपदे अर्थाभिधानशक्तिः पदार्थे वाक्यार्थावगमशक्तिरिति शक्तिद्वयं कल्पनीयम् । एवं यत्र एकस्य पदस्य त्रयोऽर्थाः, यथा अक्षपदस्य इन्द्रियं विभीतकं विदेवनञ्चार्थाः, 'अक्षैः पश्यती'त्यत्रेन्द्रियाणां, 'अक्षमारोहती'त्यत्र विभीतकस्य, 'अक्षैर्दीव्यती'त्यत्र विदेवनस्य च बोधात्, तत्रापि स्थले अक्षशब्दस्य प्रत्यर्थं अन्वये अन्विते च शक्तिकल्पनाच्छक्तिषट्कमन्विताभिधानमते । अभिहितान्वयमतेऽपि अक्षशब्दस्य त्रिषु अर्थेषु शक्तित्रयं त्रयाणां पदार्थानां वाक्यार्थबुद्धिशक्तित्रयमिति शक्तिषट्कमिति शक्तिकल्पनं तुल्यमेव । तथापि यत्र नानाशब्दानामेकोऽर्थः, यथा—पाणिकरहस्तशब्दानां

ऽप्येकार्थबोधकाः, तत्रान्विताभिधानमते त्रिष्वपि शब्देषु प्रत्येकमन्वितान्वयभेदेन शक्तिद्वयकल्पनेन आहत्य शक्तिषट्कं कल्पनीयम्। अभिहितान्वयवादे तु त्रयाणां शब्दानां एकार्थबोधनशक्तित्रयं अर्थत्रयस्य वाक्यार्थबोधशक्तिरिति चतस्र एव शक्तयः कल्पनीया इति शक्तिकल्पनालाघवमभ्युपगमेन।

अपि च—विनापि पदं पदार्थमात्रात् वाक्यार्थबुद्धिरुदेति। स्वयमुत्प्रेक्षितमर्थं कवयः काव्ये निबध्नन्ति। वाक्यरचनायां वाक्यार्थज्ञानं हेतुः। अर्थं बुद्ध्वा शब्दरचना इति हि वदन्ति। काव्यहेतुवाक्यार्थज्ञानं कवेः पदानि जनयन्तीति न युज्यते। परन्तु चिन्तावशेनोपस्थिताः पदार्था एव परस्परमन्वयरूपवाक्यार्थमवगमयन्तीति वक्तव्यम्। एवं येन पुरुषेण अज्ञाताश्वं श्वैत्यं प्रतिपन्नं, हेषारवेण अज्ञातरूपोऽश्वोऽनुमितः, खुरपदनिक्षेपशब्देन अज्ञातकर्तृकं धावनमनुमितं, तस्य पुरुषस्य श्वेतोऽश्वो धावतीति वाक्यार्थबुद्धिरुदेति। न च तत्र पदं श्रूयते। तस्मादुपस्थिताः पदार्था एवान्वयमवगमयन्तीत्यनुमानेनापि अङ्गीकरणीयम्।

अत एव वार्तिककाराः—

वाक्यार्थः प्रतीयते इति सार्वजनीनमेतत् । तस्मात् दृष्टानुगुण्यात् पदार्थनिमित्तक एव वाक्यार्थबोधः न पदनिमित्तकः ।

यदाहुः—

पदार्थानाञ्च सामर्थ्यं गम्यमानमपह्नुतम् ।
आनन्तर्याद्धि वाक्यार्थस्तद्धेतुत्वं न मुञ्चति ॥ इति ।

अत्र वाक्यार्थपदं तदवगमपरं तद्धेतुत्वपदञ्च पदार्थहेतुकत्वपरं बोध्यम् ।

किञ्चान्यत्, अन्विताभिधानवादिनापि पदार्थनिमित्तकः वाक्यार्थावगमः इति स्वीकरणीयमेव । ते किल कार्यान्विते पदानां शक्तिमभ्युपगच्छन्ति । कार्यतास्मारकलिङादिघटितवाक्यादेव कार्यान्वितविषयकः शाब्दबोधो जायते । कुतूहलप्रश्नप्रतिवचनरूपाण्यपि वाक्यानि प्रयुज्यन्ते । कोऽयं गच्छति इति प्रश्ने, राजाऽसौ गच्छति इत्युत्तरम् । एवमेव कवीनामर्थविशेषवर्णनारूपः वाक्यसन्दर्भोऽपि दृश्यते—

'नीलोत्पलवनेष्वद्य चरन्तश्चारुसंरवाः ।
रामाः कौशेयसंवीताः प्रनृत्यन्तीव सारसाः ॥'

'अस्ति किल ब्रह्मगिरिनामा गिरिवरः ।
त्रैय्यम्बकजटाजूटकलनाय विनिर्मिता ।
पाण्डरेव पटी भाति यत्र गोदावरी नदी ॥' इत्यादिः ।

इदं लाक्षणिकमिति तेषां समयः । अत्रापि पदार्थानामन्योन्यसंसर्गप्रत्ययो भवत्येव । न च पदानामन्वितार्थाभिधायिता शक्या वक्तुम् । कार्यतावाचिपदाभावेन कार्यान्विताभिधायकताया असंभवात् । तस्मादत्र राजा गच्छतीत्यादौ राजपदस्मारितराजपदार्थात् गच्छतिपदस्मारितात् गमनपदार्थाच्च आकांक्षादिसहकृतात् राजगमनयोः संसर्गावगाहिबुद्धिरुदेति इत्यकामेनापि स्वीकरणीयम् । तथा च पदार्थस्य वाक्यार्थावगमनिमित्तत्वे सिद्धे सर्वत्रापि तस्यैव निमित्तत्वकल्पनमुचितमिति पदानामन्विताभिधायकत्वमनुचितम् । यदि च—सिद्धार्थबोधकवाक्येषु पदेन

पदार्थेन वा नान्वयावगतिः, परन्त्वनुमानेन। आप्तवाक्यरचना पौरुषेयी विशिष्टार्थ-विवक्षापूर्विका विवक्षामनुमापयति, विवक्षा च स्वकारणं विशिष्टज्ञानम्, तेन स्वविषयीभूतार्थानुमानसिद्धिरिति न पदार्थानामन्वितप्रतिपादनसामर्थ्यं कल्प्यते इत्युच्यते; तदा गामानयेत्यादावपि पूर्वोक्तानुमानपरम्परया विशिष्टार्थावगतेः पदानामन्विताभिधायित्वं न कल्पनीयमित्यन्विताभिधानं न सिद्ध्येत्। यदि च तत्र संसर्गग्रह एव न जायते परन्त्वसंसर्गाग्रह एवेत्युच्यते; तदा अनुभवापलापः। गामानयेत्यत्रापि संसर्गावगमस्वीकारो व्यर्थः, असंसर्गाग्रहसंभवात्।

अपि च, पदानामन्विताभिधायित्वं व्यवहारात्किल व्यवस्थापनीयम्। तन्न संभवति। गामानयेति प्रयोजकवृद्धवाक्यश्रवणानन्तरं प्रयोज्यवृद्धो गवानयने प्रवर्तते। तत्र प्रयोज्यवृद्धस्य वाक्यश्रवणानन्तरमन्वितार्थज्ञानमुत्पन्नमित्यत्र न किमपि प्रमाणं, येन शब्दस्यान्वितार्थाभिधायकता सिद्ध्येत्। न चानुमानेन प्रयोज्यवृद्धस्यान्वितप्रतीतिरवगम्यत इति वाच्यम्। प्रवृत्त्या हि लिङ्गेन अन्वितज्ञानमनुमेयम्। न चैतत् संभवति अन्विताभिधानानुरोधिनामख्यातिवादिनाम्। शुक्तौ इदं रजतमिति ज्ञानं न शुक्तिविशेष्यकं रजतत्वप्रकारकमेकं ज्ञानम्। परन्तु इदमिति ग्रहणात्मकं ज्ञानं, रजतमिति स्मरणात्मकम्। दोषमहिम्ना इदमि रजतभेदो विद्यमानोऽपि न गृह्यते। रजतार्थी पुरुषः पुरोवर्तिनि इष्टरजताभेदज्ञानविरहेऽपि इष्टरजतभेदग्रहाभावमात्रात् पुरोवर्तिनि प्रवर्तते इति ते मन्यन्ते। एवञ्च गामानयेत्यत्र गोपदेन द्वितीयाविभक्त्या धातुना विधिप्रत्ययेन च तत्तदर्थेषु अभिहितेषु सत्सु तेषामन्वयेऽगृहीतेऽपि तदनन्वयाग्रहादपि प्रवृत्तिः संभवति। तस्मात् मध्यमवृद्धः विशिष्टार्थावगमवान् प्रवृत्तिमत्त्वादित्यनुमानं न संभवति, विनापि विशिष्टज्ञानं प्रवृत्तेः तन्मते संभवेन व्यभिचारात्। न च—भेदाग्रहनिबन्धना प्रवृत्तिः विसंवादिनी दृष्टा शुक्तिरजतादिस्थले, गामानयेत्यादिवाक्यप्रयोगस्थले मध्यमवृद्धस्य प्रवृत्तिः संवादिनी दृश्यते, इत्यञ्च संवादिप्रवृत्तेः विशिष्टज्ञानाव्यभिचारात् तया विशिष्टज्ञानानुमानं संभवतीति वाच्यम्। विवेकाग्रहणनिबन्धनोऽपि व्यवहारः अविसंवादी दृश्यते। यथा उष्णं जलमिति व्यवहारः। जले उष्णभेदाग्रह एव, न तूष्णाभेदग्रहः, भ्रमस्वीकारापत्तेः। तत्प्रयुक्तोऽपि व्यवहारः अविसंवाद्येवानुभूयते।

किञ्च यस्मिन् देशे विनाऽपि धूममग्निरस्ति तदुपरिदेशे बाष्पोद्गमो भवति तञ्च बाष्पं धूमं मत्वा तेन तत्र देशे वह्निमनुमाय वह्न्यर्थी प्रवर्तते लभते च वह्निम्; वह्निव्याप्यधूमवानयमितिज्ञानं न तत्र देशे धूमसंसर्गमवगाहते भ्रमस्वीकारापत्तेः। अपि तु धूमासंसर्गाग्रह एव। तत्प्रयुक्ता प्रवृत्तिः सफला भवति। वस्तुतः तत्र वह्नेः सत्त्वात्। तथा च अग्रहणनिबन्धनाया अपि सफलप्रवृत्तेः दर्शनात् न संवादित्वविशेषणदानेनापि व्यभिचारवारणसंभवः। तस्मादन्विताभिधायित्वमेव तन्मते न सिद्धयति।

ननु पदानां विशिष्टार्थान्वयप्रतिपत्तितात्पर्यकत्वात् साक्षादन्वितार्थवाचकत्वमभ्युपगन्तुं युक्तमिति चेत्—

न—तथा सति गङ्गायां घोषः इत्यत्र गङ्गापदस्यापि तीराभिधायित्वं स्यात्, तीरतात्पर्यवत्वात्। यदि च, गङ्गापदेनोपस्थितः प्रवाहः स्वसंबन्धितीरं लक्षयतीति पदस्मारितार्थसंसर्गेणापि तीरप्रतीतेरुपपत्तेः तीरपरस्यापि गङ्गापदस्य न तीराभिधायित्वमिति मन्यते; तदा शब्दस्यापि स्वबोधितपदार्थसंसर्गेण वाक्यार्थप्रतीतेरुपपत्तेः वाक्यार्थपरत्वसंभवात् अन्विताभिधायित्वं न सिद्धयति। तत्कार्यतात्पर्यवत्वं न तत्र शक्तत्वव्याप्यम्। पाकपराण्यपि काष्ठानि न साक्षात् पाकसमर्थानि, अपि तु ज्वलन एव, तद्द्वारा तु पाके उपयुज्यन्ते। काष्ठवदेव पदानि स्वार्थानभिदधति, ते त्वर्था वाक्यार्थमवगमयन्ति। पदार्थप्रतिपादनं काष्ठानां ज्वालास्थानीयम्।

यदाहुः—

साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम्।
वर्णास्तथापि नैतस्मिन् पर्यवस्यन्ति निष्फले॥
वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम्।
पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम्॥ इति।

पूर्वमीमांसासूत्रकारोऽपि 'अर्थस्य तन्निमित्तत्वात्' (१-१-१५) इति स्पष्टमेव पदार्थस्य वाक्यार्थावगमहेतुतामाचष्टे।

ननु 'प्रातिपदिकादुच्चरन्ती द्वितीयाविभक्तिः प्रातिपदिकार्थो विशेषक इत्याह' इति भाष्ये प्रत्ययस्य प्रकृत्यर्थान्विताभिधायित्वमुक्तम्। एवञ्च किं प्रत्ययमात्रस्यान्विताभिधायित्वस्वीकारेणार्धजरतीयन्यायविषयेण, सर्वेषामपि पदानामन्विताभिधायित्वमेव स्वीक्रियताम् इति चेत्—

नेदं भाष्यं प्रत्ययस्य प्रकृत्यर्थान्वितार्थाभिधायकत्वमभिधत्ते। यथा—सोऽयं देवदत्त इति प्रत्यभिज्ञानं ग्रहणस्मरणात्मकम्, स्मृतित्वानुभवत्वादीनां जातित्वानङ्गीकारेण तत्साङ्कर्येऽप्यदोषात्, तत्र अयं देवदत्त इति ग्रहणांशः इन्द्रियनिमित्तकः स इति स्मरणांशः संस्कारनिमित्तकः इति विविच्यते; यथा वा—घटाभाववद्भूतलमितिज्ञानेन घटाभावविशिष्टे भूतले गृह्यमाणे सति विशेष्यस्य भावांशस्य भूतलस्य प्रत्यक्षविषयता, विशेषणस्याभावांशस्यानुपलब्धिप्रमाणविषयता च विविच्यते; तथा प्रत्ययेन स्वार्थोऽभिधीयमानः प्रथमावगतप्रकृत्यर्थसंबद्ध एवावगम्यते, तत्रान्वयव्यतिरेकाभ्यां प्रकृतेः प्रत्ययस्य च स्वस्वार्थांशे निमित्तत्वं पदान्तरसमभिव्याहारस्य पदार्थान्तरसंसर्ग इव प्रकृतिप्रत्ययसमभिव्याहारस्य प्रकृत्यर्थप्रत्ययार्थयोः संसर्गांशे निमित्तत्वं च विविच्यते। प्रकृतिप्रत्ययसमभिव्याहारादेव संबन्धांशस्य प्रतीतिसिद्धेः न प्रत्ययस्य तदभिधायकत्वम्।

यदाहुः—

पाकन्तु पचिरेवाह कर्तारं प्रत्ययोऽप्यकः।
पाकयुक्तः पुनः कर्ता वाच्यो नैकस्य कस्यचित्॥ इति।

तथा च न प्रत्ययस्यान्विताभिधायित्वमिति नार्धजरतीयदोषः।

तत् सिद्धं वाक्यार्थावबोधाव्यवधानात्, अव्यभिचारात्, क्लृप्तवाक्यार्थावगमसामर्थ्यत्वात्, शक्तिकल्पनालाघवाच्च पदाभिहिताः पदार्था एव वाक्यार्थमवगमयन्ति इति॥

पदञ्च शुद्धं पदार्थस्वरूपमभिधत्ते। तावता पदं चरितार्थम्। घटादिपदाज्जायमानं घटत्वादिरूपाभिधेयज्ञानं स्मरणरूपं, ज्ञातपदार्थमात्रविषयत्वेनाविगतार्थगोचरत्वात्।

अत एव—

भावनावचनस्तावत्तां स्मारयति लोकवत् ।
पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते ॥

तेऽपि नैवास्मृता यस्माद्वाक्यार्थं गमयन्ति नः ।
तस्मात्तत्स्मरणेष्वेव संगतेषु प्रमाणता ॥ इति वार्तिककारा निरूपयन्ति । आचार्यवाचस्पतिमिश्राश्च अभिहितान्वयप्रस्तावे "तदमूषामेव (मानसीनां) स्वार्थस्मृतीनां आकांक्षायोग्यतासत्तिसहकारिणीनां कारणत्वं वाक्यार्थप्रत्ययं प्रत्यध्यवस्यामः" इति ग्रन्थे वाक्यार्थप्रत्ययकारणं पदजन्यपदार्थज्ञानं स्मृतिपदेन व्यवहरन्ति । युक्तश्चैतत्—प्रमाणसंशयविपर्ययस्मृतिषु पदाज्जायमाना पदार्थप्रतिपत्तिः कतमेति पर्यालोचनायां, न तावदियं प्रमाणज्ञानम् । अनधिगतार्थविषयकं हि प्रमाणम्, पदार्थश्च व्युत्पत्तिसंवेदनसमय एवाधिगत इति तद्गोचरेयं प्रतिपत्तिः न प्रमाणज्ञानं भवितुमर्हति । संशयविपर्ययहेतुत्वं शब्दस्य दूरापेतम् । पञ्चमी च ज्ञानविधा नास्तीति पदार्थज्ञानं स्मृतिरेव । अर्थसंस्कारस्य पदमुद्बोधकमिति ।

वस्तुतस्तु, पदजन्यं पदार्थज्ञानं स्मृत्यनुभवविलक्षणमेव स्वीक्रियते । न हि पदात् पदार्थस्य स्मृतिरिति वक्तुं शक्यते । हस्तिहस्तिपालकयोः संयोगादिसंबन्धे सति एकस्य संबन्धिनो हस्तिनः ज्ञानमपरसंबन्धिनो हस्तिपालकस्य स्मरणं जनयति इति संबन्धापेक्षं स्मारकत्वं लोके दृश्यते । तथा अत्र पदस्य पदार्थेन संयोगादिकस्य संबन्धस्याभावात् पदस्यार्थस्मारकत्वं न संभवति । न च अर्थान्वयानुभावकत्वं पदेऽर्थस्य संबन्धोऽस्तीति वाच्यम् । पदेऽन्वितार्थावगमहेतुत्वस्यानङ्गीकारात् । न च स्मारकत्वमेव संबन्धोऽस्तीति शङ्कनीयम् । लोके स्मारकत्वातिरिक्तेनैव संयोगादिना स्मारकत्वं दृष्टमिति स्मारकत्वातिरिक्तस्यैव संबन्धस्यापेक्षणात् । न चार्थाभिधायकत्वमेव संबन्धोऽस्तीति वाच्यम् । तथा सति पदेनार्थाभिधानसंभवात् स्मृतिजनकत्वं पदस्य न संभवति ।

किञ्च, स घटः इति तत्तावगाहि स्मरणं जायते इत्यनुभवसिद्धम्। न हि पदादुत्पद्यमानं घटत्वादिज्ञानं तत्तामवगाहते। तस्मान्न स्मरणं तत्। न च तत्तांशे प्रमोषकल्पनात् प्रमुष्टतत्ताकमेव पदार्थस्मरणं जायते इति वाच्यम्। सर्वत्र प्रमोषकल्पनाया महागौरवात्। पदार्थमात्रावगाहि च ज्ञानमज्ञातविषयत्वा-भावान्नानुभवरूपम्। परन्तु स्मृत्यनुभवविलक्षणं प्रमाणत्वादङ्गीक्रियते। न च तर्हि वार्तिकादौ पदार्थज्ञाने स्मरणव्यवहारः तत्र तत्र कथमुपपद्यत इति वाच्यम्। गृहीतग्राहित्वेन स्मरणाविशिष्टत्वात् 'भावनावचनस्तावत्तां स्मारयति लोकवत्' इति व्यवहार औपचारिको बोध्यः। अत एव 'पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते' इति स्मारकादविशेष उक्त, न तु स्मारकत्वैवाभिहिता। न च ज्ञातपदार्थमात्रविषयकज्ञानमात्रजनकस्य शब्दस्य अनधिगतार्थगोचरप्रमात्मकज्ञान-जनकत्वरूपं प्रमाणत्वं न स्यादिति वाच्यम्। यतः प्रमाकरणत्वाभावेऽपि प्रमा-प्रयोजकत्वलक्षणं प्रमाणत्वमस्त्येव शब्दस्य।

पदजनिताभिधाननामकविलक्षणज्ञानविषयीभूताः पदार्था अभिहिता इत्यु-च्यन्ते। ते च परस्परान्वयानुभवं जनयन्ति। न च नलो राजासीदित्यादौ पदार्थ-स्यातीतस्य नलादेः इदानीमसत्त्वेन ससर्गानुभवकारणत्वं न संगच्छते इति वाच्यम्। आकृत्यधिकरणन्यायेन जातेरेव पदार्थत्वात् तस्याश्च नित्यत्वात् न शाब्दानुभव-कारणत्वे विरोधः। पदजन्यानुभवस्य वाक्यार्थानुभवहेतुत्वात् तद्विषयतया पदार्थेषु करणत्वव्यवहार इत्यपि बोध्यम्।

पदजन्यश्च पदार्थस्वरूपमात्रविषयकं ज्ञानं निर्विकल्पकं भवति। सांसर्गिक-विषयत्वानिरूपिततन्निष्ठविषयताशालिबोधं प्रति पदज्ञानस्य कारणत्वं बोध्यम्। पदजन्यमभिधानमेव ससर्गावगाहिशाब्दबोधहेतुरासत्तिः। आकाशपदादाश्रयाश्रयि-भावसम्बन्धेनाकाशोपस्थितौ सत्यामाकाशमेकमिति बोधो न जायते। अतः वृत्त्या सानाक्षपदजन्यं ज्ञानं हेतुरिति वक्तव्यम्। वृत्त्या तादृशपदजन्यत्वञ्च तदर्थ-वृत्तिज्ञानजन्यसंस्कारसहकृतपदजन्यत्वम्। तथा चोक्तसंस्कारपदाभ्यां जनितस्य पदार्थज्ञानस्य वाक्यार्थबुद्धिहेतुता पर्यवसिता बोध्या॥

एवमभिहिताः पदार्थाः स्वसंबन्धिनीमन्वितावस्थां लक्षयन्ति । एवञ्चानन्यलभ्यः शब्दार्थः इति न्यायात् लक्षणया बुध्यमानवाक्यार्थस्य न शब्दार्थता युक्तेति पदानामन्विते शक्तिर्न सिद्ध्यति । अत एवाख्यातस्यापि कर्ता न वाच्यः तस्याक्षेपलभ्यत्वेनानन्यलभ्यत्वाभावादिति वदन्ति । सर्वावस्थानां सामान्यात्मनि पदार्थस्वरूपे पदेनाभिहिते आकांक्षादिसहकारिबलेन तत एवान्वितरूपावस्था-विशेषप्रतीतिः सिद्ध्यति ।

तदुक्तम्—

**स्यात् स्वरूपाभिधानेऽपि धीर्विशिष्टार्थगोचरा ।**
**विशेषधीर्हि सामान्यादनायासेन सिद्ध्यति ॥** इति ।

यथा गङ्गायां घोषः इत्यत्र गङ्गापदस्मृतेन प्रवाहेण तीरं स्मार्यते इति तीरं लक्ष्यमित्युच्यते तथा पदजन्याभिधानविषयेण पदार्थेनान्वयोऽनुभूयते इति अन्वयरूपः वाक्यार्थः लक्ष्य इत्युच्यते । पदबोध्यः शक्यः, पदार्थबोध्यो लक्ष्यः, इति तान्त्रिकमर्यादा । इयांस्तु विशेषः—गङ्गायां घोषः इत्यत्र लाक्षणिकं तीरं स्मृति-विषयः, वाक्यार्थस्तु लाक्षणिकः अनुभवविषय इति ।

एतेन—पदानामन्विते शक्तिकल्पनामपेक्ष्य अभिहितान्वयवादे पदे अर्थ-बोधनशक्तेः पदार्थे वाक्यार्थबोधनशक्तेश्च कल्पनया गौरवमित्यपास्तम्। वाक्यार्थस्य लक्ष्यत्वाभ्युपगमात् ।

यदाहुः—

**न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेऽपि पदानि नः ।**
**वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति नः स्थितिः ॥** इति ।

अत्र वाक्यार्थबोधप्रयोजकत्वरूपमेव सामर्थ्यं विवक्षितं बोध्यम् ।

ननु वाक्यार्थे लक्षणाभिधानमसंगतम्; गङ्गायां घोषः इत्यादौ गङ्गापदलक्ष्ये तीरे शक्यार्थप्रवाहस्य प्रवेशो नास्ति, अत्र तु पदार्थसंसर्गरूपलक्ष्ये शक्यस्य पदार्थस्य प्रवेशोऽस्ति, अतो नात्र लक्षणा। यदि च— सर्वत्र लक्षणास्थले न शक्यार्थपरित्यागः, जहल्लक्षणायामेव तत्स्वीकारात्, छत्रिणो यान्तीत्यत्र छत्रिपदस्य

वस्तुतस्तु इयं लक्षणैव। पूर्वोक्तलक्षणालक्षणं चाव्याप्तं भवति। न हि सर्वत्र लक्षणास्थले वाच्यार्थान्वयानुपपत्तिरस्ति। काकेभ्यो दधि रक्ष्यतामित्यादौ वाच्यार्थान्वयानुपपत्तेरभावात्। एवं वेदेऽपि वायुर्वै क्षेपिष्ठा देवता इत्यादेरर्थवादस्य प्राशस्त्ये लक्षणा सर्वसंप्रतिपन्ना। न च तत्र वायुक्षेपिष्ठत्वादीनामन्वये काचनानुपपत्तिरस्ति। वाच्यार्थसंबन्धवशप्राप्तस्य वाक्यार्थे अन्वयोऽपि न सार्वत्रिकः। शत्रुगृहभोजननिवृत्तिपरं विषं भुङ्क्ष्व इति वाक्यं प्रयुज्यते, तत्र वाक्यलक्ष्यस्य शत्रुगृहभोजननिवृत्तिरूपस्य पुनः वाच्यार्थे वा अन्यत्र वाऽन्वयो न दृश्यते। तस्मात् अनुपपत्तितः वाच्यसंबन्धवशप्राप्तस्य प्रतीतौ लक्षणा इत्येव सर्वलक्षणानुगतं लक्षणम्। **तदुक्तमाचार्यवाचस्पतिमिश्रैः—"मृष्यामहे वाच्यानुपपत्तित इति, संबन्धवशप्राप्तस्य इति च, न पुनः वाक्यार्थे संबन्धेति, अन्वयादिति च"** इति।

न हि केवलं ज्ञातचरपदार्थमात्रबुबोधयिषया पदानि समभिव्याहरन्ति प्रेक्षावन्तः, बोद्धारो वा पदार्थमात्रं बुभुत्सन्ते। अपि तु अनधिगतपदार्थसंसर्गबुबोधयिषया पदानि प्रयुञ्जते, अनवगतसंसर्गं च बुभुत्सन्ते बोद्धारः। तस्मात् पदानामनधिगतार्थप्रत्यायनप्रयुक्तः समभिव्याहारः संसर्गप्रत्यायनमन्तरेणानुपपद्यमानः स्वाभिधेयसंबन्धिनीमन्वितावस्थां लक्षयति। संसर्गाबोधने अनधिगतार्थबोधकत्वलक्षणप्रामाण्यानुपपत्त्या लक्षणा आक्षिप्यते। इयञ्चानुपपत्तिः सर्वलाक्षणिकानुगता। 'वायुर्वै क्षेपिष्ठा देवता' इत्यादौ वाच्यार्थानुपपत्त्यभावेऽपि, तत्र कैमर्थ्याकांक्षायाः सत्त्वात्, निष्प्रयोजनार्थबोधकत्वे अज्ञातप्रयोजनवदर्थबोधकत्वलक्षणप्रामाण्यानुपपत्त्या प्राशस्त्ये लक्षणाङ्गीक्रियते। गङ्गायां घोषः इत्यादौ प्रवाहबोधकत्वे घोषे प्रवाहवृत्तित्वस्य बाधितत्वेन अबाधितार्थबोधकत्वलक्षणप्रामाण्यानुपपत्तिरस्त्येव। काकेभ्यो दधि रक्ष्यतामित्यत्र तात्पर्यविषयान्वयप्रतिपादकत्वरूपप्रामाण्यानुपपत्त्या काकपदस्य दध्युपघातके लक्षणा।

यद्यपि 'गङ्गायां घोषः' इत्यादौ तीरे गङ्गापदशक्यसंबन्धज्ञानमपेक्ष्यते। यद्वा गङ्गापदात् प्रवाहोपस्थित्यनन्तरं तदधीनतीरोपस्थितिरपेक्ष्यते। न चात्र तथा

पदार्थसंसर्गे पदार्थप्रतियोगिकत्वरूपसंबन्धज्ञानं वा पदार्थप्रतीत्यधीनसंसर्गोप-स्थितिर्वा वाक्यार्थावगमात् पूर्वमस्ति।

तथापि यत्र बोध्यप्रमापूर्वं बोध्योपस्थितिरपेक्ष्यते तत्रैव बोध्यबोधकसंबन्ध-ज्ञानं कारणम्। तीरादिसंबन्धावगाहिशाब्दबुद्धौ तीरोपस्थितेर्हेतुत्वात्। *तस्याश्च* गङ्गापदबोध्यप्रवाहेण तीरस्य संबन्धज्ञानं विना असंभवात्। यत्र तु बोध्यप्रमापूर्वं बोध्योपस्थितिर्नापेक्ष्यते, तत्र बोध्यबोधकसंबन्धज्ञानं न कारणम्। यथा रूपचाक्षुष-प्रमायां बोध्यरूपस्योपस्थितिर्नापेक्षिता, तत्र बोध्यस्य रूपस्य बोधकस्य चक्षुषश्च संबन्धज्ञानं न कारणम्। अपि तु स्वरूपसन्नेव चक्षुस्संयुक्तसमवायसंबन्धः अपेक्ष्यते। एवमत्र वाक्यार्थः संसर्गरूपः अपूर्वः। अतः तद्विषयकशाब्दप्रमायां तस्य संसर्गस्योपस्थितिर्नापेक्ष्यते। अतश्च बोध्यसंसर्गे बोधकपदार्थस्य संबन्धज्ञानं नापेक्षितम्। किन्तु स्वरूपसन्नेव पदार्थप्रतियोगिकत्वरूपः संबन्धः प्रयोजकः। अन्यथा शाब्दबुद्धेः प्रमात्वानुपपत्तेः।

तदयं निष्कर्षः — शब्दार्थधीबोध्यनिष्ठः शब्दार्थप्रतियोगिकः संबन्धो लक्षणा। 'गङ्गायां घोषः' इत्यादौ गङ्गाशब्दार्थप्रवाहधीबोध्यतीरनिष्ठः प्रवाह-प्रतियोगिकः संयोगादिः संबन्धो लक्षणा। प्रकृते च शब्दार्थज्ञानबोध्यसंसर्ग-(वाक्यार्थ) निष्ठः शब्दार्थप्रतियोगिकः निरूपकत्वादिः संबन्धो लक्षणा। शाब्दधी-प्रयोजकः बोध्यबोधकसंबन्धो वृत्तिः। वाक्यार्थे लक्षणा स्वरूपसती उपयुज्यते इति। संसर्गनिष्ठाया लक्षणायाः पदार्थप्रतियोगिकत्वात्मकसंबन्धरूपाया अज्ञा-तायाः संसर्गबोधे प्रमाणप्रमेयसंबन्धविधया प्रयोजकत्वम्। भूतले घटवदित्या-कारके घटप्रकारके संयोगसंसर्गके प्रत्यक्षे संयोगगतस्य इन्द्रियसंयुक्तसमवायस्य संबन्धस्यापेक्षणात् सामान्यतः प्रमेयबोधे प्रमाणप्रमेयसंबन्धस्य प्रयोजकत्वात्।

यदि तु लक्षणाज्ञानमावश्यकं शाब्दधीनियतासामान्यस्य वृत्तिज्ञानविषयता-प्रयोज्यत्वनियमादिति मन्यते, तदापि न क्षतिः। घटप्रतियोगिकत्वसंसर्गनिष्ठ-संबन्धविशेषत्वेन संबन्धस्याभानेऽपि तात्पर्यज्ञान इव लक्षणाज्ञानेऽपि घटादिपदार्थ-त्वादिना घटादिपदार्थभानसंभवात्। अज्ञाताया लक्षणायाः संसर्गशाब्दबोधप्रयो-जकत्वस्वीकारादस्मन्मते अज्ञातपदं उक्तविशेषरूपेणाज्ञातार्थकं बोध्यम्।

नन्तु वाक्यार्थावगमं प्रति अभिधीयमानपदार्थस्य करणत्वे पदार्थस्याति-रिक्तप्रमाणत्वापत्तिः। एवं वाक्यार्थज्ञानस्य शब्दजन्यत्वाभावात् वाक्यार्थस्य शाब्दत्वं न स्यादिति चेत्—

न—पदार्थस्य शब्दप्रमाण एवान्तर्भावान्नातिरिक्तप्रमाणाभ्युपगमापातः। अङ्गताग्राहकाणि श्रुतिलिङ्गादीनि। तत्र श्रुतिः वाक्यं समाख्या च शब्दरूपत्वा-च्छब्दप्रमाणेऽन्तर्भवति। लिङ्गं प्रकरणं स्थानं च श्रुतिकल्पनयैवाङ्गतां ग्राहयन्तीति शब्दप्रमाण एवान्तर्भवन्ति। तथैव पदाभिहितानां पदार्थानां अन्वयबोधकत्वेऽपि शब्दप्रमाण एवान्तर्भावो मन्तव्यः। अन्वयप्रतीतेः शब्दजन्यत्वभावेऽपि शब्दाव-गतपदार्थजन्यत्वाच्छाब्दत्वं, तद्विषयत्वात् वाक्यार्थस्यापि शाब्दत्वं सिद्ध्यति। न च शब्दावगतपदार्थजन्यत्वादन्वयज्ञानस्य शाब्दतास्वीकारे चक्षुरिन्द्रियावगत-धूमरूपानुमानप्रमाणजन्यायाः पर्वतो वह्निमानित्यनुमितेरपि चाक्षुषत्वं स्यादिति वाच्यम्। वाक्यार्थावगमपराणि पदानि पदार्थज्ञानमवान्तरव्यापारीकृत्य अन्वयाव-गमं जनयन्ति।

यथोक्तं—'**पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम्**' इति। न च तथा चक्षुषः लिङ्गज्ञानमवान्तरव्यापारः। चक्षुषा लिङ्गे अवगतेऽपि अविना-भावज्ञानानुदये वह्निज्ञानानुदयात्, विनाऽपि चक्षुषा धूमज्ञानं व्याप्तिज्ञानेनानु-मित्युत्पत्तेश्च। तथा च वैषम्यात् न चक्षुरवगतधूमजन्यवह्निज्ञानस्य चाक्षुषत्व-मापादयितुं शक्यते।

अभिहितेन पदार्थेन करणेन अन्वयः पदार्थसंसर्गरूपान्वयधीः इति अभिहितान्वयशब्दार्थघटना बोध्या॥

अत्र वादे पक्षत्रयं विद्यते।

तत्र घटमानयेत्यादौ घटपदेन घटत्वं अंपदेन कर्मत्वं चानुभाव्यते, प्रकृति-प्रत्ययजन्यानुभवाभ्यां प्रकृतिप्रत्ययार्थयोः संसर्गशब्दधीर्जायते, न तु प्रकृति-प्रत्ययाभ्याम्, घटत्वनिष्ठकर्मत्वप्रतीत्या आनयनक्रियायां घटत्वनिष्ठकर्मत्वस्य

निरूपकत्वरूपसंसर्गविषयकः क्रियाकारकसंबन्धावगाहिशाब्दबोधो जायते इत्याद्यः पक्षः। प्रत्ययपूर्ववृत्तित्वविशिष्टप्रकृतेः कर्मत्वविशिष्टघटत्वानुभावकत्वमिति द्वितीयः पक्षः। प्रकृत्युत्तरत्वविशिष्टप्रत्ययस्य घटत्वविशिष्टकर्मत्वानुभावकत्वमिति तृतीयः पक्षः। दध्नेन्द्रियकामस्य जुहुयादित्यत्र द्वितीयपक्षावलम्बनेन करणत्वविशिष्टं दधि विधीयते इति, तृतीयपक्षमवलम्ब्य दधिकरणत्वं विधीयते इति च, प्रामाणिका व्यवहरन्ति।

द्वितीय-तृतीयपक्षवादिनामयमाशयः—

प्रथमपक्षे हि पदात् पदार्थस्वरूपमात्रविषयकनिर्विकल्पकज्ञानं जायते। तच्च नागृहीतग्राहीति शब्दस्य प्रमाणस्य अगृहीतग्राहिधीजनकत्वभङ्गः। न च प्रमाणत्वावच्छेदेन अगृहीतग्राहिधीप्रयोजकत्वनियम एव नागृहीतग्राहिधीजनकत्वनियमः, शब्दे च पदार्थजन्यागृहीतग्राहिवाक्यार्थानुभवप्रयोजकत्वं वर्तते इति वाच्यम्। साक्षात्तद्धीजनकत्वसंभवे परम्परया तज्जनकत्वाकल्पनात्।

न च प्रमाणजन्यज्ञाने अगृहीतविषयकत्वनियमे मानाभाव इति वाच्यम्। प्रमाणेन हि विषयो व्यवस्थाप्यते। अतः प्रमाणजन्यज्ञानस्य विषयव्यवस्थापकत्वमावश्यकम्। तत्त्वं च स्वविशेष्ये विशेषणाभावज्ञानाभावप्रयोजकत्वम्। ज्ञानान्तरेण विशेष्ये विशेषणस्य पूर्वं गृहीतत्वे ज्ञानान्तरस्य विपरीतज्ञानाभावप्रयोजकतया क्लृप्तत्वेन तत्र ज्ञाने तत्कल्पने मानाभाव इति अगृहीतग्राहिज्ञानस्यैव विषयव्यवस्थापकत्वमिति प्रमाणजन्यज्ञानस्यागृहीतग्राहित्वमवश्याभ्युपेयम्। तस्मादगृहीतसंसर्गविषयकज्ञानस्य शब्दजन्यता सिद्ध्यति। पदेन पदार्थविषयकनिर्विकल्पकं जन्यते इत्यपि न समञ्जसम्। निर्विकल्पकस्य शाब्दत्वे मानाभावात्। परन्तु घटपदेन घटत्वस्य द्वितीयया कर्मत्वस्य च स्मृतिर्जायते। पदे स्मरणप्रयोजकसंबन्धः स्मारकत्वातिरिक्तः पदार्थसंसर्गानुभावकत्वरूपः। घटत्वनिष्ठतुरीयविषयताशालिशाब्दं प्रति घटपदस्य कारणत्वाङ्गीकारे, घटत्वांशे निर्विकल्पकप्रत्यक्षात्मकवाक्याजन्यं श्वेतोऽश्वो धावतीत्याकारकं शाब्दज्ञानं पदं विनापि जायते इति व्यतिरेकव्यभिचारः स्यात्। प्रत्यक्षत्वशाब्दत्वादेः जातित्वानङ्गीकारेण ग्रहणस्मरणात्मकस्य

प्रत्यभिज्ञानस्येव आंशिकप्रत्यक्षात्मकस्यापि शाब्दस्य संभवात्। अतस्तद्वारणाय घटत्वनिष्ठतुरीयविषयत्वावच्छिन्नशाब्दत्वविशिष्टं प्रति घटपदस्य कारणता स्वीकरणीया। सा च न संभवति, अनधिगतविशेषणविशेष्यसंबन्धविषयताया एव शाब्दत्वावच्छेदकत्वेन अधिगतपदार्थविषयतायाः शाब्दत्वावच्छेदकत्वाभावात्। 'कर्मतायां घटत्वं शृणोमि' 'घटत्वविशिष्टं कर्मत्वं शाब्दयामि' इत्येवानुभव उदेति। अनुमानस्थलेऽपि 'पर्वते वह्निसंबन्धमनुमिनोमि' इत्येवानुभवः न तु 'पर्वतमनुमिनोमि' इति, 'वह्निसंयोगमनुमिनोमि' इति वा अनुभवः। अतस्तत्र पक्षसाध्यसंसर्गविषयतैवानुमितित्वावच्छेदिका भवति। तस्मादज्ञातस्य विशेषणविशेष्यसंसर्गस्य विषयतैव प्रमाणप्रयोज्या भवतीति न प्रमाणजन्यं ज्ञानं ज्ञातपदार्थस्वरूपमात्रगोचरं भवितुमर्हति। तथा च निर्विकल्पके शाब्दत्वस्याप्रामाणिकत्वेन पदार्थसंसर्गानुभावकत्वस्यैव पदानामुचितत्वात् स्मृत्यनुभवविलक्षणानन्तबोधकल्पनापेक्षया स्मृतिद्वारकसंसर्गानुभावकल्पनस्यैव लघुत्वात्, भवन्मतेऽपि निर्विभक्तिकघटादिपदात् घटत्वस्मृतेः स्वीकारेण घटपदे स्मारकत्वस्य क्लृप्तत्वेन तुरीयविषयत्वावच्छिन्नशाब्दत्वविशिष्टं प्रति शब्दस्य हेतुत्वकल्पनवैयर्थ्यात् पदार्थद्वयविषयतानिरूपितसंसर्गविषयत्वावच्छिन्नशाब्दत्वविशिष्टं प्रत्येव पदानां कारणत्वस्वीकरणमुचितमिति॥

एतत्पक्षे घटमित्यत्र घटपदाद्घटत्वस्य अम्पदात्कर्मत्वस्य च स्मृतिर्जायते। स्मरणद्वारा घटमिति पदं घटत्वनिष्ठं कर्मत्वं इत्याकारकं संसर्गबोधं जनयति। प्रकृत्यर्थान्वितकारकविभक्त्यर्थस्य आनयनरूपक्रियायां निरूपकत्वरूपसंबन्धस्तु घटमितिपदबोध्येन घटत्वनिष्ठकर्मत्वेन लक्ष्यते। अमुमेव पक्षमभिप्रेत्य **सर्वज्ञात्ममुनिभिः संक्षेपशारीरके**—

**प्रत्ययप्रकृतिशब्दतो बहिर्विद्यतेऽभिहितसंगतिश्च नः।**
**प्रत्ययप्रकृतिशब्दयोः पुनर्नित्यमन्वितधियो निमित्तता॥**

इति पद्येनाभिहितान्वयसरणिः प्रत्यपादि।

शब्दार्थधीबोध्यनिष्ठः शब्दार्थप्रतियोगिकः संबन्धो लक्षणा। अत्र शब्दार्थघटत्वकर्मत्वधीबोध्ये आनयनक्रियानिष्ठे संसर्गे विद्यमानः शब्दार्थघटत्वकर्मत्वप्रति-

योगिताकत्वरूपः संबन्धो लक्षणा। शब्दार्थस्य प्रवाहस्य लक्षकत्वं तीरस्मरणद्वारा लक्ष्यतीरशाब्दबोधजनकज्ञानविषयत्वम्। घटत्वकर्मत्वस्य तु लक्ष्यक्रियानिष्ठ-संसर्गानुभवं प्रति साक्षाज्जनकज्ञानविषयत्वरूपं लक्षकत्वं बोध्यम्। घटमिति पदार्थ-बोधानन्तरमेव क्रियाकारकसंसर्गावगाहिबोधजननात् महावाक्यार्थबोधः विशिष्ट-वैशिष्ट्यावगाह्येव जायते, विशेषणतावच्छेदकप्रकारकज्ञानरूपकारणस्य संपत्तेः। अस्मिन् पक्षे, अभिहितेन घटमिति पदार्थेन घटत्वनिष्ठकर्मत्वादिना अन्वयः क्रियाकारकसंबन्धबोधः इति अभिहितान्वयशब्दयोजना वेदितव्या। तस्माद्वाक्यार्थः लक्ष्य एवेति ॥

इत्यभिहितान्वयवादनिरूपणम्।

---

गुरुमतानुयायिनस्तु—

पदानामन्विताभिधानमाचक्षते। तथाहि—दीप इव व्युत्पत्तिनिरपेक्षः शब्दः नार्थमवगमयति। व्युत्पत्तिश्च वृद्धव्यवहाराद्भवति। वृद्धाश्च संसृष्टार्थविव-क्षया वाक्यं प्रयुञ्जते। श्रोतारोऽपि संसृष्टार्थमेव बुध्यन्ते। वाक्यं च पदान्येव नातिरिक्तम्। पदार्थ एव गुणभूतानेकपदार्थविशिष्टो वाक्यार्थः। यथा शिबिकाया उद्वन्तारः सर्वे शिबिकामुद्यच्छन्ति, यथा वा प्रयोऽपि ग्रावाणः उखां बिभ्रति, तथा वाक्यघटकानि सर्वाणि पदानि वाक्यार्थमवगमयन्ति। पदानामर्थान्तरा-न्वितस्वार्थे शक्तिः। प्रथमं व्युत्पत्तिमह इत्थं जायते। उत्तमवृद्धः गामानयेति वाक्यं प्रयुङ्क्ते। ततो मध्यमवृद्धः गवानयने प्रवर्तते। तदानीं तटस्थो व्युत्पित्सुरेवं मन्यते। अस्य पुरुषस्य प्रवृत्तिः ज्ञानजन्या प्रवृत्तित्वात् मदीयप्रवृत्तिवत्; तच्च प्रवृत्तिजनकं ज्ञानं गामानयेतिशब्दजन्यं तदनन्तरभावित्वादिति। एवमसकृत्प्रयोगेन गामानयेति वाक्यस्य गोकर्मकानयने वाक्यार्थे व्युत्पत्तिः संमुग्धा जायते। ततः कदाचित् अश्वमानयेतिप्रयोगे अश्वानयनप्रवृत्तौ सत्यां अश्वपदावापे गोपदोद्वापे तदर्थान्वयात् अश्वपदस्यार्थान्तरान्वितहयरूपार्थे गोपदस्यार्थान्तरान्वितसास्नादि-मति च प्रत्येकं शक्तिं गृह्णाति। इत्थं शक्तिग्राहकप्रमाणमूर्धन्येन व्यवहारेण

पदानामितरान्वितार्थे शक्तिः इतरान्वितार्थानुभवजनकत्वरूपा सिद्ध्यति। इयमेव पदानामानुभाविकी शक्तिरित्युच्यते।

न च—गुरूणां मते न सर्वत्र ज्ञानपूर्वको व्यवहारः, अख्यातिवादिभिरेतैः इदं रजतमितिभ्रमस्थले इदंविशेष्यकरजतत्वप्रकारकज्ञानास्वीकारेण इष्टरजतभेदाग्रहेणैव व्यवहारसमर्थनात। एवञ्च व्यवहारेण न तत्कारणं संसृष्टार्थज्ञानमनुमातुं शक्यते इति वाच्यम्। गवानयनप्रवृत्त्या मध्यमवृद्धस्य संसृष्टार्थज्ञानमनुमिनोति तटस्थः। विसंवादिप्रवृत्तावेवेष्टभेदाग्रहणं कारणम्। संवादिप्रवृत्तौ संसृष्टार्थज्ञानमेव कारणम्। मध्यमवृद्धप्रवृत्तिश्च संवादिनीति तया संसृष्टार्थज्ञानमनुमातुं शक्यत एव, अनैकान्तिकताविरहात।

न च—वस्तुतो वह्निमति देशे धूमरहिते अपरिदृश्यमानवाष्पं धूमं मत्वा वह्निमनुमाय वह्न्यर्थी तत्र प्रवर्तमानो न विसंवदते। पर्वते तत्र न धूमवैशिष्ट्यज्ञानं गुरुमते, भ्रमस्वीकारापत्तेः, किन्तु धूमासंसर्गाग्रहणमेव। तथा च संवादिप्रवृत्तिरपि अग्रहणनिबन्धना दृष्टेति व्यभिचारस्तदवस्थ इति वाच्यम्। यतः पुरोवर्तिदेशे वह्निमनुमायैव वह्न्यर्थी प्रवर्तते। तस्य च पुरोवर्तिदेशे वह्निसंसृष्टत्वज्ञानमनुमितिरूपमस्त्येव। तच्च प्रमात्मकमेव, पुरोवर्तिदेशे वह्निसंबन्धस्याबाधितत्वात्। तादृशानुमितिकारणं न धूमसंसृष्टत्वज्ञानम्। तथा च निरुक्तसंवादिप्रवृत्तौ संसृष्टज्ञानपूर्वकत्वमस्त्येवेति न व्यभिचार उद्भावयितुं शक्यते। तस्मात् व्यवहारात् अर्थान्तरान्वितार्थे पदानां शक्तिः सिद्ध्यति।

न च व्युत्पित्सुः अर्थान्तरान्वितार्थज्ञानं पदप्रयोज्यमवगच्छतीति पदाभिहितानां पदार्थानामेवान्वयबोधशक्तिः कल्प्यतामिति वाच्यम्। प्रथमभावीनि पदान्यतिलंघ्य पदार्थेषु वाक्यार्थबोधनशक्तिस्वीकारस्यायुक्तत्वात्। पदेषु अन्वितार्थबोधकारणत्वग्रहस्योत्सर्गसिद्धत्वेन पदेषु बोधप्रयोजकत्वग्रह एवोत्पद्यते इत्यत्र मानाभावात।

किञ्च—पदार्थाः वाक्यार्थमनुभावयन्तीति वादिभिरपि पदानामभिधानशक्तिः संप्रतिपन्ना वर्तते। तस्या अन्वयपर्यन्ततामात्रं कल्पनीयमस्माभिः। पदार्थानां

वाक्यार्थावगमशक्तिस्वीकारे शक्तिरेव कल्पनीया। तस्मात् धर्मिकल्पनातो धर्मकल्पनाया लघीयस्त्वात् पदार्थेषु शक्तिकल्पनापेक्षया पदनिष्ठाभिधानशक्तेः क्लृप्तायाः अन्वयपर्यन्तताकल्पनमेवोचितम्।

अपिच, यदि पदानि घटादिस्वरूपमात्रविषयिणीं बुद्धिं जनयेयुः तदा पदानां स्वाभिमताभिधायकता हीयेत। पदार्थबुद्धेरुद्बुद्धसंस्कारप्रभवत्वेन स्मृतित्वात्। तस्मात् पूर्वानवगतान्वितार्थबोधजनकत्वाभ्युपगम एव पदानामभिधायकता सिद्ध्यतीति पदानामभिधातृत्वमङ्गीकुर्वता अन्विताभिधायकता अवश्यं स्वीकरणीया।

यदि—

'पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते।'

'भावनावचनस्तावच्चां स्मारयति लोकवत्।' इत्यादिभट्टाचार्यवार्तिकदर्शनात् पदानां पदार्थस्मारकत्वमेवाभिधायकत्वमिति मन्यते, तदापि पदानामन्वितार्थबोधनशक्तिरङ्गीकरणीया। वाक्यस्य वाक्यार्थप्रतिपत्तौ तात्पर्यमावश्यकम्। अन्यथा वाक्यार्थस्य शाब्दत्वमेव न स्यात्। परम्परया शब्दावगतपदार्थजन्यज्ञानविषयत्वेन शब्दप्रयोज्यत्वाद्यदि शाब्दत्वं वाक्यार्थस्येष्यते, तदा शब्दग्राहकश्रोत्रस्यापि वाक्यार्थबुद्धिप्रयोजकत्वाद्वाक्यार्थस्य श्रौत्रत्वमपि व्यवह्रियेत। तथा च वाक्यार्थप्रतिपत्तितात्पर्यवत्वस्वीकारे पदानां साक्षाद्वाक्यार्थबोधजनकत्वशक्तिरेवोचिता। न परम्पराश्रयण युज्येत।

यदाहुः—

प्राथम्यादभिधातृत्वात्तात्पर्योपगमादपि।
पदानामेव सा शक्तिर्वरमभ्युपगम्यताम्॥ इति।

पदानामेवेत्यत्र एवेन पदार्थानां व्यवच्छेदः।

पदानां न स्मारकत्वमपि त्वभिधायकत्वमिति मते तु, पदानां पदार्थाभिधानशक्तिः, पदार्थानां वाक्यार्थावगमशक्तिः, पदानां पदार्थगतवाक्यार्थावगमशक्त्याधान-

शक्तिश्चेति शक्तित्रयकल्पनया गौरवम्। अस्मन्मते तु पदानामन्वितार्थे एकैव शक्तिः कल्प्यत इति लाघवमित्यतोऽपि अन्विताभिधानं युज्यते।

नच—अन्विताभिधानेऽपि शक्तित्रयकल्पनमस्ति। एका पदानां स्वार्थस्मारकशक्तिः, अन्या तेषामन्वितानुभवजननशक्तिः, एकस्मृत्यारूढानामेव सर्वेषां पदानामन्वितानुभवजनकत्वेन पदगतान्विताभिधानशक्त्याधानशक्तिः तावत्पदविषयकस्मरणे अपरा इत्युक्तमिति वाच्यम्। एकस्मादेव पदाद्वाक्यार्थबोधं न कोऽपि मन्यते। तत्र निर्विभक्तिकघटादिपदात् घटत्वस्मरणमेव जायते। तदुक्तं लघुचन्द्रिकायां अभिहितान्वयवादद्वितीयतृतीयपक्षवादिनामाशयनिरूपणावसरे ब्रह्मानन्दसरस्वतीभिः "त्वयाऽपि हि निर्विभक्तिकघटादिपदात् घटत्वादिस्मृतिः स्वीक्रियत एव" इति। तत्र युष्मच्छब्देन प्रथमपक्षावलम्बी अभिहितान्वयवादी परामृश्यते। अभिहितान्वयवादिनोऽपि यावत्पदान्तरमर्थान्तरं नोपस्थापयति, तावदन्वयावगमो नास्ति। अन्वयावबोधजनकस्य पदार्थस्य पदार्थान्तरापेक्षणात् अन्वयस्य प्रतियोगिसापेक्षत्वात्। एवञ्च तन्मतेऽपि सर्वपदैरनन्वितस्वार्था अभिधीयन्ते। ततः तावत्पदार्थविषयकस्मरणं जायते। एकस्मृत्यारूढेभ्यः सर्वेभ्यः पदाभिहितेभ्यः पदार्थेभ्यो वाक्यार्थप्रतिपत्तिरङ्गीकरणीया। तथा च वार्तिकम्—

**तेऽपि नैवास्मृता यस्माद्वाक्यार्थं गमयन्ति नः।**
**तस्मात्तत्स्मरणेष्वेव संहतेषु प्रमाणता॥** इति॥

ते इत्यस्य पदार्था इत्यर्थः। तथा च पदे (1) स्वार्थाभिधानशक्तिः, (2) स्वार्थस्मरणशक्तिः, (3) पदार्थगतवाक्यार्थावगमशक्त्याधानशक्तिः, (4) पदार्थे वाक्यार्थावगमशक्तिः, (5) एकस्मृत्यारूढानामेव पदार्थानामन्वयबोधकत्वात् तावत्पदार्थविषयकस्मरणे पदार्थगतवाक्यार्थावगमशक्त्याधानशक्तिरिति शक्तिपञ्चकमभिहितान्वयवादे कल्पनीयम्। अन्विताभिधाने तु शङ्कितदिशा शक्तित्रयमेवेति शक्तिकल्पनालाघवमक्षुण्णमेव॥

ननु पदेषु न पदार्थगतवाक्यार्थावगमशक्त्याधानशक्तिः पदार्थेषु वाक्यार्थावगमशक्तिश्च कल्पनीया। पदगन्धं विनाऽपि केवलं पदार्थैः वाक्यार्थावगमदर्शनेन पदार्थेषु वाक्यार्थावगमशक्तेः सिद्धत्वात्। पदाभिहितैरेव पदार्थैः अन्वयोऽवगम्यते इति नियमाभावात् पदेषु पदार्थगतशक्त्याधानशक्तिरपि न कल्पनीया। अनवधारिताश्रयविशेषस्य श्वैत्यस्य प्रत्यक्षदृष्टस्य, हेषाशब्दानुमितस्याश्वत्वानवगतगुणविशेषस्य, पदविक्षेपशब्दानुमितस्य अज्ञातकर्तृविशेषस्य धावनस्य चार्थस्य, श्वेतोऽश्वो धावतीति वाक्यार्थावगमकत्वदर्शनात्। काव्यरचनाहेतुभूतवाक्यार्थावगमं प्रति चिन्तोपनीतपदार्थमात्रे कारणत्वस्य दर्शनात्, पदार्थानां संसर्गयोग्यत्वेन संसर्गावगमसामर्थ्यस्य क्लृप्तत्वाच्चेति चेत्——

न——न तावत्पदं विना पदार्थमात्रेण श्वेतोऽश्वो धावतीति अन्वयधीर्भवितुमर्हति। तत्र यदि श्वैत्याधिकरणे हेषाध्वनिः खुरविक्षेपशब्दश्चावगतः, तदानुमानेनैवाश्वप्रतीतिः, श्वेतोऽयमश्वः हेषाशब्दवत्वादिति लिङ्गसामर्थ्यजन्य एवावगमः न पदार्थसामर्थ्यजः। यदि श्वैत्यं हेषाशब्दः खुरविक्षेपशब्दश्च स्वरूपत एवावसिताः, न तेषां सामानाधिकरण्यमप्यवगतम्, तदा तत्र स्थले अश्वातिरिक्तद्रव्यस्याभावनिश्चये, देवदत्तस्य गृहाभावज्ञानात् बहिस्सत्त्वज्ञानमिव अर्थापत्तिप्रमाणजन्या श्वेतोऽश्वो धावतीति प्रतिपत्तिः। यदि च द्रव्यान्तराभावनिश्चयो न जातः, तदा नोदेष्यत्येव तादृशधीः। किञ्च श्वेतोऽश्वो धावतीति धीः यदि पदार्थसामर्थ्यादेव जायते, तदा अस्य कस्मिन् प्रमाणेऽन्तर्भावः? न तावच्छब्दे, शब्दस्यैवाभावात्। नापि प्रमाणान्तरं, प्रमाणपरिगणनावसरे भाष्यकारादिभिरनुक्तत्वात्। तथात्वे प्रमाणान्तरत्वे शब्दावगतपदार्थस्थलेऽपि शब्दप्रामाण्यविलोपप्रसङ्गात्। अपि च नायमवगमः शाब्दः। तदनन्तरं धावन्तं श्वेतमश्वं शृणोमि इति शाब्दयामि इति वा अनुव्यवसायाभावात्। न हि पदार्थसंसर्गावगाहि ज्ञानं सर्वमपि शाब्दमिति वक्तुं युक्तम्।

तन्न बुध्यामहे। पर्वतस्य वह्नेश्च संबन्धयोग्यत्वात् वह्निपर्वतयोः संसर्गाव-गाहिन्यां पर्वतो वह्निमानित्याकारिकायामनुमितौ कारणत्वं न हि कश्चिदुपैति। प्रत्यक्षरूपे तु संसर्गज्ञाने विषयविधया वह्निपर्वतयोः कारणत्वं संभवति। अतः पदार्थानां संसर्गयोग्यत्वादन्वयानुभावकत्वं क्लृप्तमिति रिक्तं वचः।

न च को गच्छति राजा गच्छतीत्यादौ कविकृतस्वभाववर्णनादौ च पदार्थानां अन्वयबोधजननसामर्थ्यं क्लृप्तम्। न हि तत्र पदानामन्विनानुभावकता संभवति, कार्यतावाचकलिङादिपदाभावेन कार्यान्वितार्थबोधजनकताया अभावादिति वाच्यम्।

शक्तिग्राहकप्रमाणमूर्धन्येन व्यवहारेण कार्यान्वित एवार्थे पदानां शक्तेरवधारणात् उपजीव्यविरोधेन कार्यांशस्यात्यागात् कार्यान्वितार्थविषयक एव सर्वत्र वाक्यार्थबोधः। यत्र कार्यवाचिपदं न श्रूयते तत्रापि लिङादिपदमध्याहृत्यैव बोधः। चैत्र पुत्रस्ते जातः इत्यत्र तं पश्येत्यध्याहारेणान्वयबोधः। जातो मृतश्चेत्युक्तौ पश्येति क्रियाध्याहारासंभवेऽपि जानीहि इति योग्यक्रियाध्याहारसंभवात्। यत्र पुराणे भारतादिपाठे फलश्रुतिर्वर्तते, तत्रापि अर्थवादकल्पितविधिशेषतया प्रवृत्तिपरतया अतिपरम्परयापि कार्यान्वितार्थानुभवजनकत्वमेव स्वीक्रियते। तस्मात् पूर्वोक्तस्थलेष्वपि जानीहि इति योग्यक्रियाध्याहारेण कार्यान्वितार्थानुभवस्यैवोपगमात् पदानामेव सामर्थ्यमिति न क्वचिदपि पदार्थानां वाक्यार्थावगमसामर्थ्यं क्लृप्तमिति बोध्यम्।

तथा च पदार्थेषु वाक्यार्थावगमशक्तिः, पदाभिहितैरेव पदार्थैः वाक्यार्थावगमात् पदेषु पदार्थगतवाक्यार्थावगमशक्त्याधानशक्तिश्च कल्पनीयैवेति गौरवमेवाभिहितान्वयवादिनाम्।

ननु वाक्यार्थो लाक्षणिकः पदार्थबोध्यत्वात्। पदबोध्यः शक्यः, पदार्थबोध्यः लक्ष्यः। गङ्गायां घोषः इत्यत्र गङ्गापदार्थप्रवाहेण तीरं स्मार्यते। पदार्थेन तु संसर्गरूपो वाक्यार्थोऽनुभाव्यते। तथा च वाक्यार्थो लक्ष्यः न पदशक्यः अन्यलभ्यत्वात्। लक्षणास्थले वाच्यार्थपरित्यागनियमो नास्ति। काकेभ्यो

दधि रक्ष्यतामित्यत्र काकपदस्य दध्युपघातके लक्षणायामपि शक्यकाकस्यापरित्यागात्। नापि वाच्यार्थसंबन्धानुपपत्तिः सर्वत्रापेक्षिता। उक्तस्थल एव तदभावात्। वाक्यप्रामाण्यानुपपत्तिरेव सर्वानुगता लक्षणाक्षेपिका। नापि लक्ष्यस्य वाक्यार्थेऽन्वयः सर्वत्रापेक्ष्यते। विषं भुङ्क्ष्वेतिवाक्यलक्ष्यस्य शत्रुगृहभोजनाकर्तव्यत्वस्यान्वयान्तराभावात्। पदार्थनिष्ठ पदवोध्यप्रतियोगिकः सम्बन्धो लक्षणा। तथा च पदार्थे नान्वयानुभवशक्तिः कल्प्यते इति चेत्—

न—शक्यसम्बन्धिनो लक्ष्यस्य वाक्यार्थेऽन्वयोऽपेक्ष्यते। न ह्यत्र लक्ष्यस्य ससर्गस्याम्योऽन्वयोऽस्ति। विषं भुङ्क्ष्वेत्यत्रापि एकपदस्य द्विपदन्नभोजने, अपरपदस्य अकर्तव्यत्वे - अनिष्टसाधनत्वे लक्षणा। तयोः ससर्गो बोध्यते इति लक्ष्यस्यान्वितत्वमेव वर्तते। अद्वैतसिद्धावखण्डार्थवादे, अपर्यायशब्दाना पदवृत्तिस्मरितातिरिक्तागोचरप्रमाजनकत्वमित्यखण्डार्थत्वलक्षणस्य द्विषदन्नभोजननिषेधके विषं भुङ्क्ष्व इति वाक्ये शङ्किताया अतिव्याप्तेः 'नापि द्विषदन्नभोजननिषेधकेऽतिव्याप्तिः, तत्रानिष्टसाधनत्वसंसर्गस्य पदद्वयस्मारितस्य प्रतिपाद्यत्वात्' इति ग्रन्थेनाभिहितः परिहारोऽप्यमुमर्थमुपोद्बलयति।

शाब्दबोधानुकूलस्मारकत्वप्रयोजकमूलसम्बन्धो वृत्तिः। पदवृत्तिः शक्तिः। पदार्थवृत्तिर्लक्षणा। पदे अनुभावकत्वम्। पदार्थे शक्यरूपे लक्ष्यार्थसंबन्धः। पदार्थनिष्ठस्य अपूर्ववाक्यार्थसम्बन्धस्य स्मारकत्वप्रयोजकत्वाभावान्न निरुक्तलक्षणाया वृत्तित्वमुपपद्यते। तस्माद्वाक्यार्थे लक्षणेत्युक्तिरुपचरितार्थैव मन्तव्या।

—किञ्च—अभिहितान्वयवादे सर्वाण्यपि पदानि लाक्षणिकानि। पदसमूहरूपवाक्यज्ञानञ्च एकपदसमभिव्याहृतपदान्तरत्वरूपाकाङ्क्षाज्ञानविधया अनुभावकम्। एवञ्च लाक्षणिकमप्यनुभावकमित्यायातम्। अत एव वेदान्तिनोऽपि अभिहितान्वयवादे लाक्षणिकानामनुभावकत्वस्वीकारात् 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यत्र सर्वपदानां लाक्षणिकत्वेऽपि नान्वयानुभावकत्वानुपपत्तिरिति वदन्ति। अनुभवजननसामर्थ्यमेव शक्तिः। यदि लाक्षणिकस्यापि अन्वयानुभावकत्वं स्वीक्रियते, तदा लाक्षणिकस्यापि शक्तिमत्त्वात् मुख्यजघन्यविभागो न स्यात्। तथा च लिङ्गाविवरणविरोधः। तत्र हि बर्हिर्देवसदनं दामीतिमन्त्राणां मुख्ये

जघन्ये चार्थे लिङ्गादिविनियोगः उत मुख्य एवेति संशय्य, शाब्दत्वादुभयत्रापि विनियोग इति पूर्वपक्षे, मुख्य एव विनियोग इति सिद्धान्तितम्। मुख्यसंभवे लक्षणा नोपादेया इति सर्वतन्त्रसिद्धान्तः। तस्माल्लाक्षणिके अनुभावकत्वस्वीकारस्यायुक्तत्वाद्वाक्यार्थः लक्ष्यते इत्युक्तिः न साधीयसी।

इत्थञ्च पदानामन्वितार्थे शक्तिः स्वीकर्तुमुचिता। अन्वये शक्तेरस्वीकारे अन्वयविशेषजिज्ञासा जायमाना कथं घटेत, सामान्यज्ञानरूपकारणाभावात्।

अपि च—प्रमेये प्रमाणस्य संबन्धोऽपेक्षितः, प्रमाणानां स्वप्रमेयसंबद्धानामेव प्रमेयावभासकत्वात्। भूतलं घटवदित्याकारकभूतलविशेष्यकसंयोगसंसर्गकघटप्रकारकप्रत्यक्षप्रमेयानां भूतलादीनां चक्षुरादिप्रमाणेन संबन्धोऽस्ति। घटभूतलयोः संयोगस्य तयोः संयोगे संयुक्तसमवायस्य च संबन्धस्य सत्त्वात्। तस्माद्वाक्यार्थे प्रमेये शब्दरूपप्रमाणस्य संबन्धः अनुभावकत्वरूप आवश्यक एव। तस्मादन्वित एव पदानां शक्तिः सिद्ध्यति।

ननु अन्वयत्वानन्वित उच्यते। अन्वयो विशेषणमितरस्तु विशेष्यः। एवञ्चान्विते शक्तिरित्युक्तौ विशेषणे विशेष्ये चोभयत्र शक्तिरवर्जनीयेति गौरवमिति चेत्—

न—अन्वयवत्त्वैवान्वितत्वम्। नान्वयमन्तरेणान्वितत्वस्य पृथगात्मलाभः। यथा घटमन्तरेण पटः पृथगवतिष्ठते न तथाऽन्वयमन्तरेणान्वितत्वं पृथगवतिष्ठते। तस्मादन्वयमन्तरेणान्वितत्वस्य प्रत्येतुमशक्यत्वादन्वयप्रतीतौ च तत्प्रतीतेः एकैव शक्तिरन्वयपर्यन्ता। यथा जातिशक्तात्पदाज्जातौ प्रतीयमानायां व्यक्तिरपि भासते व्यक्तिं विना जातेरप्रतीतेः। जातिर्हि व्यक्तेराकारः। न ह्याकारिणं विनाकारस्य प्रतीतिः संभवति। तदाहुः—

अन्वितेषु पदैरेव बोध्यमानेषु शक्तिभिः।
अन्वयोऽर्थगृहीतत्वान्नान्यां शक्तिमपेक्षते॥
प्रतीयन्नन्वयं यस्मात् प्रतीयादन्वितं पुमान्।
व्यक्तिं जातिमिवार्थोऽसाविति संपरिकीर्त्यते॥ इति।

अन्वयं विनापि पदार्थस्वरूपमात्र प्रतीयते । तथापि तन्नान्वितम् । अत एवान्वय विना अन्वितत्वस्य न पृथगात्मलाभ न वा प्रतीतिरित्युक्तम् ।

एतेन—विनाप्यन्वय पदार्थस्वरूप प्रतीयत एव । अन्वय विना स्वरूपस्यानवस्थानादन्वयाविनाभावादर्थस्य अन्वयोऽपि प्रतीयत इत्युक्तौ, तर्हि विना धूमस्यानवस्थानात् धूमज्ञानमेव वह्निमपि गोचरयेदिति अनुमानप्रामाण्यविलोपप्रसङ्गः इति,—परास्तम् ।

न च—व्यक्तिवदिति दृष्टान्तो न सगच्छते, व्यक्ते पदानभिधेयत्वादन्वयस्य च पदाभिधेयत्वात् । एव व्यक्तिमन्तरेण जातेरप्रतीते जातिगोचरा शक्ति व्यक्तिमप्यनुप्रविशेत् अन्वितगोचरा शक्तिरन्वयमिवेति—वाच्यम् ।

अन्वयवत्त्वैवान्वितस्वरूपम् । तस्मादन्वितगोचरा शक्तिरन्वय गोचरयति । जातिस्वरूपं न व्यक्तिमत्तेव । व्यक्ते पृथग्भूता तदाकारभूता जाति । तस्मान्न जातिशक्ति व्यक्तिं गोचरयति । तर्हि व्यक्तिवदिति दृष्टान्त कथ संगच्छते इति चेत्—इत्थम्—शक्तिं विना जातिस्वभावात् व्यक्तया सह जातिर्भासते । अन्यलभ्यत्वेन व्यक्तिर्न शक्या । तत्प्रतीतावेव तत्प्रतीति तदप्रतीतौ तदप्रतीतिरित्यशमादाय दृष्टान्त सगच्छते । दृष्टान्तश्च न सर्वसाम्यमपेक्षते ।

न च—दृष्टान्त एवासंगत रूपिण विनापि रूपस्य प्रतीतेर्दर्शनात् । गन्धाश्रयपुष्पमविषयीकृत्यापि गन्धमात्रस्य घ्राणेन ग्रहणादिति—वाच्यम् ।

न हि गन्ध पुष्पस्याकार, उत्पत्तिक्षणे गन्ध विनापि पुष्पस्य द्रव्यस्यावस्थानात् । न हि गन्धवत्त्वमेव पुष्पस्वरूप, येन गन्ध, सह पुष्पेण प्रतीयात । तस्मात् स्वरूपतो जातिभाने व्यक्तिरवश्य भासते निरवच्छिन्नजातिविषयताया व्यक्तिविषयतानिरूपितत्वनियमात् । जातिभासिका सामग्री व्यक्तिं भासयति । व्यक्तिज्ञाने च जातिभानप्रयोजकजातिशक्तिज्ञानादिकमेव सामग्री न तु जातिज्ञानमिति जातौ भासमानाया व्यक्तिरपि भासते ।

एतेन—कारणाभावान्न व्यक्तिप्रतीति संभवति । शब्दस्तत्र न कारण, तस्य व्यक्तावशक्तत्वात् । जातिप्रतीतिरेव कारणमिति चेत्, तस्या पूर्वमभावात्

कथं व्यक्तिः प्रतीयेत। अप्रतीयमानया च व्यक्त्या कथं जातिः प्रतीयादिति—निरस्तम्। जातिस्वभावपर्यालोचनया जातिभासकसामग्र्या एव व्यक्तिज्ञान-जनकत्वाङ्गीकारात् कारणाभावोक्तेरसंगतत्वात्।

अपि च, नैयायिकैः घटत्वविशिष्टे घटपदस्य शक्तिः स्वीक्रियते। घटत्व-तदाश्रयवैशिष्ट्येषु त्रिषु एका शक्तिरिति विवृण्वन्ति नैयायिकाः। स्पष्टश्चैतच्छक्ति-वादे गदाधरीये। तथैवान्वयविशिष्टे शक्तिस्वीकारे अन्वये पृथक् शक्तिर्नावश्यकी।

तस्मात् पदानामन्विते शक्तिः अन्वयपर्यन्ता भवतीति सिद्धम्।

एतेन—यत्र पदस्यैकोऽर्थः तत्र शक्तिकल्पनाया अभिहितान्वयवादान्विताभिधानवादयोस्तुल्यत्वेऽपि, यत्र त्रयाणां पाणिहस्तकरशब्दानामेकोऽर्थः तत्र अभिहितान्वयवादे त्रयाणां शब्दानां कररूपार्थे तिस्रः शक्तयः एकस्यार्थस्य वाक्यार्थावगमशक्तिरिति चतस्रः शक्तयः कल्पनीयाः, अन्विताभिधानवादे तु त्रयाणां पदानां अन्वितस्वार्थे अन्वये च पृथक् शक्तिद्वयमिति षट् शक्तयः कल्पनीया इति गौरवमिति—परास्तम्।

अन्विते एकस्या एव शक्तेः स्थापितत्वेन अन्वयांशे पृथक्शक्तेरकल्पनात् त्रयाणां पदानां अन्वितार्थे तिस्र एव शक्तयः कल्पनीया इत्यन्विताभिधानवादे शक्तिकल्पनालाघवस्यैव स्फुटं प्रतिभासात्। तृणारणिमणिषु त्रिष्वपि दाहानुकूला एका शक्तिः स्वीक्रियते। तथा पर्यायशब्देषु त्रिष्वपि एकैव करानुभावकत्वशक्तिरभिहितान्वयमते। एवमन्विताभिधानमतेऽपि पदानामन्वये अर्थे च न पृथक्शक्तिः, अर्थं विनान्वयमात्रस्य अन्वयं विनाऽर्थमात्रस्य च पदादननुभवेन अन्वितार्थानुभव-रूपकार्यस्यैकत्वेन तदनुकूलशक्तिरप्येकैव इति श्रीब्रह्मानन्दसरस्वत्यः मतद्वयतत्त्वं स्फुटीकुर्वन्ति।

ननु अन्विताभिधानं न सिद्ध्यति। अन्वयप्रतियोगिनामानन्त्यादन्वयस्यानन्तत्वम्। ततश्चान्वितानामप्यानन्त्यात् तेषु पदानां संबन्धग्रहणमेव दुश्शकम्। सामान्यतः अन्वयाभिधानं नाशङ्कितुमप्यर्हम्; वाक्यात् विशेषान्वयस्यैवावगमात्। किञ्च पदं किं पदान्तरानभिहितेनान्वितमर्थमभिधत्ते, उत पदान्तरेणाभिहितार्था-

न्वितमर्थम्। आद्ये पदान्तरवैयर्थ्यम्, एकेनैव पदेन सर्वान्वयप्रतीतिसंभवात्। द्वितीये अन्योन्याश्रय। प्रथमपदमन्वितस्वार्थाभिधानाय द्वितीयपदाभिधानमपेक्षते। द्वितीयपदमपि अन्वितस्वार्थाभिधानाय प्रथमपदाभिधानमपेक्षते। किञ्च सर्वेषां पदानामितरान्वितवाचकत्वे पदभेदेन वाक्यार्थभेदात् सर्वत्र वाक्यभेदापत्तिरिति चेत्——न——

आकाङ्क्षासन्निधियोग्यताना व्युत्पत्तावुपलक्षणत्वमङ्गीक्रियते। आकाङ्क्षित सन्निहित योग्य पदार्थान्तर तदन्विते शक्तिग्रहण सम्भवति। अयमेति पुत्रो राज्ञ पुरुषोऽपसार्यतामित्यत्र राजपुरुषयोर्नान्वय। अन्वयप्रतियोगिजिज्ञासा आकाङ्क्षा। सन्निधि न शब्देनैवापेक्षित। अध्याहृतेनाप्यन्विताभिधानसंभवात्। अन्विताभिधानानुपपत्तिवशात्खलु अध्याहार। सा चानुपपत्ति योग्यप्रतियोग्यर्थोपस्थापनेन शान्तेति न शब्दकल्पनायां प्रमाणमस्ति। अत एव घटेन जलमाहरेत्यत्र छिद्रेतरत्वस्यापि शाब्दबोधे भान स्वीक्रियते। योग्यत्व सबन्धार्हत्वम्। यस्य योग्यत्वमवधारित तेनान्वय। अत एव वह्निना सिञ्चतीत्यत्र वह्निसेकयोर्नान्वयबोध।

तदुक्तम्——

आकांक्षासन्निधिप्राप्तयोग्यार्थान्तरसंगतान्।
स्वार्थानाहुः पदानीति व्युत्पत्तिः संश्रिता मया॥
आनन्त्यव्यभिचाराभ्यां तथा दोषो न कश्चन। इति।

एक पद नान्विताभिधायकं, प्रतियोगिन अनुपस्थापनात्। प्रतियोग्यपेक्षत्वादन्विताभिधानस्य। अत पदश्रवणे प्रथम अनन्वितस्वार्थस्मरण जायते। न च व्यवहारेण संसृष्टे एव शक्तिग्रहात् संसृष्टस्यैव स्मरण स्यान्न केवलस्वार्थस्य, अव्यभिचारस्य स्मरणानियामकत्वादिति वाच्यम्। अन्वितार्थे अनन्वितांशस्यापि विद्यमानत्वात्तत्स्मरणमुपपद्यते। विशिष्टानुभवादपि कश्चित्कारणवशात् विशेष्यमात्रस्मरण लोके बहुल दृश्यते। अभ्यासातिशय संस्कारातिशयमा धत्ते। स च स्मृतिरियवेदुद्ध- स्फुटतर स्मरण जनयति। गवादिपदस्य स्वार्थेन गोत्वादिना साहचर्यानुभव यथाभ्यासवान् न तथाऽर्थान्तरेण साहचर्यानुभवोऽभ्यासवान्

दृश्यते । तथाच अभ्यासातिशयप्रयुक्तसंस्कारातिशयरूपकारणवशात् स्वार्थ-स्वरूपमात्रस्मरणमुपपद्यते । स्वार्थेन सह पदस्य स्वार्थान्वयानुभावकत्वं स्मरण-प्रयोजकमूलसंबन्धः इति श्रीब्रह्मानन्दसरस्वत्यो निरूपयन्ति । एवञ्च एकैकपद-श्रवणानन्तरमनन्वितत्तत्तदर्थोपस्थितौ सत्यां एकस्मृत्यारूढेभ्यः पदेभ्यः आकांक्षित-योग्यसंनिहितार्थान्तरान्वितप्रतीतिर्जायते इति नान्योन्याश्रयः । तदुक्तम्—

स्मृतिसंनिहितैरेवमर्थैरन्वितमात्मनः ।
अर्थमाह पदं सर्वमिति नान्योन्यसंश्रयः ॥ इति ।

न च घटमानयेत्यत्र वाक्यभेदापत्तिः घटपदेनानयनान्वितघटस्य आनयपदेन घटान्वितानयनस्य च विशेष्यविशेषणभावभेदभिन्नस्य बोधादिति वाच्यम् । यत्र एकस्मिन् वाक्यार्थे पर्यवसन्ने वाक्यार्थान्तरबोधः तत्रैव वाक्यभेदः । प्रकृते तु न तथा । विशेष्यविशेषणमात्रभेदेऽपि घटानयनात्मकस्यार्थस्याभेदात् न वाक्यभेदः । न चाकांक्षादिकस्योपलक्षणस्याश्रयणे गौरवमिति शङ्क्यम् । अभिहितान्वयवादेऽपि नियतान्वयसिद्ध्यर्थं तेषामङ्गीकारात् ।

ननु उपलक्षणपक्षेऽपि उपलक्षितानामानन्त्यात् गामानय, बधान, मुञ्च इत्यादावेकस्यैव गोपदस्यानन्ताः शक्तयः स्युः । अभिहितान्वयवादे तु गोपदस्य स्वार्थे एकस्मिन्नेव शक्तिरिति लाघवमिति चेत्—

न—यथा चक्षुः एकयैव रूपरूपत्वरूपवद्द्रव्यत्वादिगोचरया दर्शनशक्त्या प्रतियोगिभेदभिन्नतत्तद्दर्शनकार्यभेदहेतुः, तथा शब्दोऽपि एकयैव आकांक्षितसंनि-हितयोग्यप्रतियोगिगोचरया शक्त्या प्रतियोगिभेदेऽपि तत्तत्प्रतियोगिबोधनकार्यभेदे हेतुः । अन्वितघटत्वादिविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति घटपदं कारणमिति कार्यकारणभावः । शाब्दत्वावच्छेदकविशेष्यतानिरूपितसंसर्गतानिरूपितघटत्वप्रका-

---

टिप्पणी—

पदानामन्विते आनुभाविकी शक्तिः । स्वार्थे स्मारकशक्तिः । संकेत एव स्मारकशक्तिरिति गीयते इति अन्विताभिधाननिरूपणावसरे मथुरा-नाथभट्टाचार्या वर्णयन्ति । तत्र संकेतस्य स्मारकशक्तित्वं मीमांसकसंगतं न वेति विचारणीयम् ।

रताशालित्वं घटपदकार्यतावच्छेदकम् । अज्ञातज्ञापकत्वात् प्रमाणस्य अज्ञातविषयतैव प्रमाणप्रयुक्ता वाच्या । प्रमाणप्रयुक्तत्वञ्च तत्कार्यतावच्छेदकत्वम् । घटत्वनिष्ठप्रकारतानिरूपितसंसर्गतानिरूपितविशेष्यताशालिशाब्दबोध प्रति घटपदं कारणमित्युक्तौ, घटत्वीयकर्मत्वांशे अनुमित्यात्मकस्य पटत्वकरणत्वांशे शाब्दस्य घटपदं विनाप्युत्पत्तेर्व्यभिचारः । मीमांसकमते जातिः अनुगतसंस्थानमात्रव्यङ्ग्या । अवयवसंयोगविशेष एवावयवसंस्थानमित्युच्यते । तच्च द्रव्य एव संभवति न गुणादौ । अतः ज्ञानगतं प्रत्यक्षत्वानुमितित्वादिकं न जातिः । अपित्वखण्डो धर्मः विषयताविशेषो वा । अतः पूर्वोक्तानुमित्यात्मकशाब्दबोधः जायते इति व्यभिचारः । तद्वारणाय विषयतायां शाब्दत्वावच्छेदकत्वं विशेषणमुपात्तम् । घटत्वकर्मतां शाब्दयामीत्यनुभवात् घटत्वान्वितविषयताया शाब्दत्वावच्छेदकत्वं स्वीक्रियते । निरुक्तज्ञानीयपटकरणत्वीयविषयतायाः शाब्दत्वावच्छेदकत्वम् । न घटत्वान्वितकर्मत्वविषयतायाः । तत्र तामनुमिनोमीत्यनुव्यवसायात् अनुमितित्वावच्छेदकताया एव स्वीकारात् । इत्थञ्च घटत्वान्वितकर्मत्वादिविषयतावच्छिन्नशाब्दत्व घटपदकार्यतावच्छेदकम् । अन्वितकर्मत्वादिविषयतावच्छिन्नशाब्दत्वं अमादिपदकार्यतावच्छेदकमिति बोध्यम् ।

ननु घटं इत्यानुपूर्वीविशेषज्ञानत्वेन घटत्वकर्मताशाब्दबोधं प्रति कारणत्वमवश्यकल्पनीयम् । अन्यथा अं घट इत्यानुपूर्वीज्ञानादपि तादृशशाब्दबोधापत्तेः । तथा च घटपदत्वेन घटत्वान्वितशाब्दबोधत्वेन च कार्यकारणभावकल्पनं व्यर्थमिति चेत्——न——घटं, घटेन इत्याद्यानुपूर्वीविशेषाणामेकस्याप्यभावे, घटत्वान्वितशाब्दसामान्याभाव उपलभ्यते । तादृशाभावे घटत्वान्वितकर्मतादिशाब्दविशेषहेतुभूतघटमित्याद्यानुपूर्वीविशेषाभावकूटस्य प्रयोजकत्वकल्पने गौरवात् । घटपदज्ञानत्वावच्छिन्नाभावस्यैकस्य तत्प्रयोजकत्वकल्पने लाघवात् । तत्कल्पनञ्च घटत्वान्वितशाब्दत्वावच्छिन्न प्रति घटपदत्वेन (घटपदज्ञानत्वेन) कारणताङ्गीकारे एव संभवति, कारणतावच्छेदकावच्छिन्नाभावस्यैव कार्यतावच्छेदकावच्छिन्नाभावे प्रयोजकत्वात् । अतः घटत्वान्वितशाब्दत्वावच्छिन्नं प्रति घटपदत्वेन कारणत्वमावश्यकम् ।

न च—निर्विभक्तिकघटादिपदश्रवणे घटत्वस्य स्मरणमात्रं जायते नान्वयानुभव इति सर्वसंप्रतिपन्नोऽर्थः। तत्र घटत्वान्वितशाब्दत्वावच्छिन्नाभावः न घटपदज्ञानसामान्याभावप्रयुक्तः घटपदस्यैव सत्त्वात्। परन्तु घटत्वान्वितकर्मत्वकरणत्वादिशाब्दविशेषहेतुभूतघटं घटेनेत्याद्यानुपूर्वीविशेषाभावकूटस्यैव प्रयोजकत्वं वक्तव्यम्। तथा च घटपदज्ञानसामान्याभावकालेऽपि उक्तानुपूर्वीविशेषाभावकूटस्यैव घटत्वान्वितशाब्दसामान्याभावप्रयोजकत्वसंभवेन निरुक्तकार्यकारणभावकल्पनं व्यर्थमिति—वाच्यम्।

निर्विभक्तिकघटादिपदज्ञानकाले घटत्वान्वितशाब्दसामान्याभावे घटादिपदज्ञानसामान्याभावस्य प्रयोजकत्वासंभवेऽपि घटपदज्ञानसामान्यशून्ये पुरुषविशेषे विद्यमानायां घटत्वान्वितशाब्दत्वावच्छिन्नाभावाधिकरणतायां स्वरूपसंबन्धरूपायां लाघवेन घटादिपदज्ञानत्वावच्छिन्नाभावस्यैकस्यैव प्रयोजकत्वकल्पनात् तदनुरोधेन निरुक्तकार्यकारणभावकल्पनाया आवश्यकत्वात्।

यद्वा, घटत्वान्वितशाब्दत्वावच्छिन्नं प्रति सविभक्तिकघटपदज्ञानत्वेन कारणता स्वीक्रियते। एवञ्च निर्विभक्तिकघटादिपदस्थलेऽपि सविभक्तिकघटादिपदज्ञानत्वावच्छिन्नाभावस्य प्रयोजकता संभवतीति बोध्यम्। परन्तु घटपदं घटत्वस्य वाचकमिति व्यवह्रियते, नान्वितघटत्वस्य वाचकमिति, न वा अन्वितघटत्वं घटपदवाच्यमिति व्यवह्रियते। यादृशार्थनिरूपितत्वेन शक्तेर्ग्रहः शाब्दबोधहेतुः स एवार्थो वाच्यतया व्यवह्रियते। क्रियाकारकसंबन्धशाब्दबोधानुकूला शक्तिः पदे स्वीक्रियते। शक्तं पदम्। तादृशशक्तिनिरूपिका घटत्वकर्मतादिविषयकशाब्दधीः। तस्यां घटत्वशाब्दधीत्वस्य सत्त्वात् घटत्वधीनिरूपितशक्तित्वेनैव शक्तिज्ञानं कारणं लाघवात् न तु संबन्धादिनिरूपितशक्तित्वेन गौरवात्। घटत्वनिरूपितत्वेन शक्तिज्ञानस्य शाब्दधीप्रयोजकत्वाद्घटत्वमेव वाच्यतया व्यवह्रियते। एवञ्चान्वयस्य नानात्वेऽपि न घटादिपदस्य नानार्थत्वापत्तिः। यत्र नानाधर्माणां प्रत्येकनिरूपितत्वेन पदे शक्तिग्रहाः शाब्दबोधहेतवः, तत्रैव पदस्य नानार्थता। यथा हर्यादिपदस्य। तत्र विष्णुत्वसूर्यत्वादिप्रत्येकनिरूपितत्वेन हरिपदे शक्तिज्ञानस्य विष्ण्वादिविषयकशाब्दबोधहेतुतास्वीकारात्। अन्वयनिरूपितत्वेन शक्तिग्रहस्य हेतुताया अनङ्गी-

कारेण तद्भेदेन नानार्थत्वापत्तेरसंभवात्। अन्यान्वितघटत्वं शक्यमिति प्रामाणिकग्रन्थस्य च शाब्दत्वावच्छेदकविशेष्यतानिरूपितसंसर्गतानिरूपितघटत्वप्रकारत्वं घटपदकार्यतावच्छेदकमित्यत्र तात्पर्यमवसेयम्। अनुभावकत्वमेव शक्तिः। गङ्गाया घोष इत्यादौ लाक्षणिकं गङ्गादिपदं न तीरानुभावकम्। गङ्गापदस्य तीरवाचकतापत्तेः। किन्तु गङ्गापदसमभिव्याहृतं शक्तं घोषपदमेवानुभावकम्। वाक्ये च न सर्वाणि पदानि लाक्षणिकानि। येन तादृशवाक्यस्थले अनुभावकविरहाच्छाब्दबोधो न स्यात्।

एतेन वाक्यघटकानां सर्वेषां पदानां लाक्षणिकत्ववादः दूरापास्तो वेदितव्यः॥

मतेऽस्मिन् नावान्तरवाक्यार्थबोधपूर्वकं महावाक्यार्थबोधः आद्यव्युत्पत्तिग्रहानुरोधेन शाब्दसामान्यस्य कार्यान्वितविषयत्वं नियतम्। घटमानयेत्यत्र घटमिति सुबन्तात् न घटनिष्ठकर्मत्वमिति शाब्दबोधः। तज्ज्ञानीयघटादिविषयताया कार्यताविषयतानिरूपितत्वाभावात्। परन्तु क्रियाकारकसंसर्गावगाही शाब्दबोधः कार्यताविषयकः। स च न विशिष्टवैशिष्ट्यावगाही। तत्कारणस्य विशेषणतावच्छेदकप्रकारकनिर्णयस्य पूर्वमभावात्। तस्मात् खलेकपोतन्यायेनैव शाब्दबोध इति बोध्यम्।

यद्यपि अभिहितान्वयवादद्वितीयतृतीयपक्षयोः घटमित्यत्र घटपदस्य घटत्वकर्मत्वादिसंसर्गानुभावकत्वं स्वीक्रियते। क्रियाकारकसंसर्गावगाहिमहावाक्यार्थबोधहेतुता पदे नाङ्गीक्रियते। अन्विताभिधानवादिनस्तु तत्स्वीकुर्वन्ति। तथापि अभिहितान्वयवादे प्रकृतिप्रत्ययार्थान्वयबोधोत्तरमेव तादृशबोधरूपकारणेन क्रियाकारकसंसर्गावगाहिशाब्दबोधो जायते इति सामग्रीसाकल्यान्महावाक्यार्थबोधः विशिष्टवैशिष्ट्यावगाह्येव भवतीति ज्ञेयम्।

ननु तथापि "पदानि स्वं स्वमर्थमभिधाय निवृत्तव्यापाराणि। अथेदानीं पदार्था अवगताः सन्तः वाक्यार्थमवगमयन्ति" इति शाबरं भाष्यं पदार्थानां वाक्यार्थावगमसामर्थ्यप्रतिपादकं कथं सङ्गच्छते इति चेत्—

इत्थम्—पदानामन्विताभिधायित्वे अन्वयस्य प्रतीतये अन्वये शक्त्यन्तरं पदानां कल्पनीयमिति शङ्कायामुत्तरं पदानीत्यादिभाष्यम्। गवादिपदानामाकृति

(जातिः) शक्या । जातिश्च व्यक्तिमन्तरा दुर्निरूपा । अतः शब्देन प्रतीयमाना जातिः व्यक्त्या सहैव प्रतीयते । शब्दस्याकृतिप्रत्यायकत्वं स्वाभाविकं तन्निमित्तकं व्यक्तिप्रत्यायकत्वमिति आकृतिप्रत्ययः व्यक्तिप्रत्ययस्य निमित्तमिति व्यवह्रियते, न तु शब्देन प्रथमं जातिप्रत्ययः तदनन्तरं व्यक्तिप्रत्यय. इति । तद्वत् अन्विताभिधायिना पदेनान्वयं विनाऽन्वितबोधनासंभवात् अन्वयो बोध्यते । स चान्वयः अन्वितार्थनिमित्तक इत्युच्यते । नान्वितबोधानन्तरमन्वयावगमः । भाष्ये वाक्यार्थपदेन अन्वयो विवक्षितः । वाक्यतात्पर्यविषयः वाक्यार्थः । पदार्थस्वरूपञ्च संगतिग्रहणसमय एव विदितम् । गां पश्येत्यादिवाक्यान्तरे च संबन्धान्तरमेव प्रतिपन्नमिति प्रकृतान्वय एव वाक्यतात्पर्यविषयः । अर्थशब्देनान्वितार्थो विवक्षितः । तथा च पदानि अन्वितमर्थमभिधाय निवृत्तव्यापाराणि भवन्ति । नान्वयं पृथगभिदधति । अथेदानीं प्रतिपन्नाः पदार्थाः अन्वितार्थाः वाक्यार्थं अन्वयमवगमयन्ति । अन्विता अन्वयमवगमयन्ति । पदानामन्वितप्रतिपादकत्वनिमित्तमन्वयप्रतिपादकत्वमिति, भाष्यस्य पर्यवसितोऽर्थः । अन्वये पृथक्शक्त्यनङ्गीकारकथनेन पृथक्शक्तिस्वीकारशङ्का परिहृता भवति । पदानामन्विताभिधायित्वस्य युक्तिभिः व्यवस्थापितत्वेनेयमेव व्याख्या शोभते । 'अर्थस्य तन्निमित्तत्वात्' (1-1-25) इति सूत्रमपि अर्थस्य-पदार्थस्य तन्निमित्तत्वं वाक्यार्थनिमित्तत्वमाचष्टे । अन्वितः पदार्थः । वाक्यार्थश्चान्वयः । तथा च निरुक्तसरण्या अन्वितार्थस्यान्वयप्रतीतिनिमित्तत्वमुक्तं भवति ।

तत्सिद्धं—

यद्यदाकांक्षितं योग्यं संनिधानं प्रपद्यते ।
तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते ॥ इति ॥

इत्यन्विताभिधानवादविवरणं समाप्तम् ।

**प्रामाणिकास्तु**—अलक्ष्यमशक्यञ्च वाक्यार्थं पदानि आकांक्षादिसहकारेण पदार्थस्मृतिद्वारा अवगमयन्तीति निरणैषुः । तेषामयमभिसन्धिः—व्युत्पत्तिग्रहविधुरो न वाक्यार्थमधिगच्छति । वाक्यार्थबोधायावश्यापेक्षितव्युत्पत्तिग्राहजनकेषु

मूर्धन्यो वृद्धव्यवहारः। अविदितकिञ्चिपदशक्तिकस्य पुंसः कर्मणि द्वितीया इत्यादिव्याकरणेन, गुणे शुक्लादयः इत्यादिकोशेन प्रसिद्धार्थकपदसांनिध्येन विवरणेन वा व्युत्पत्तिग्रहोदयासंभवात्। अतः प्राथमिकशक्तिग्रहः व्यवहाराद्भवति। व्यवहारश्च उत्तमवृद्धवाक्यश्रवणानन्तरजातप्रवृत्त्यादिः। उत्तमवृद्धोक्तं गामानयेति-वाक्यमुपश्रुत्य मध्यमवृद्ध. गामानयति। तद्दर्शी व्युत्पित्सुः यथाहं संसृष्टार्थज्ञाना-त्प्रवर्ते तथाऽयमपि मध्यमवृद्धः संसृष्टार्थज्ञानादेव प्रवर्तेत। तच्च ज्ञानमस्य वाक्ये-नैव जातं वाक्यश्रवणात्पूर्वमप्रवृत्तेः ततः परं प्रवृत्तेः कारणान्तरस्यानुपलम्भाच्च। तच्च गामानयेतिवाक्ये गोकर्मकानयनरूपार्थज्ञानजनकतामवगच्छति न प्रयोजकतां जनकत्वग्रहे बाधकाभावात्। पदानां गृहीतसंसृष्टार्थज्ञानहेतुतानुपपत्त्या अवान्तरव्यापारविधया पदार्थोपस्थितिहेतुतां कल्पयति। ततः आवापोद्वापाभ्यां गवादिपदानां गवादिरूपार्थे शक्तिं गृह्णाति। तस्मादवश्यापेक्षितव्युत्पत्तिग्रह-जनकप्रमाणमूर्धन्येन व्यवहारेण संसृष्टार्थज्ञानहेतुतायाः पदे गृहीतत्वात् पदानामेव वाक्यार्थधीजनकत्वं श्रयणं समुचितं न पदाभिहितपदार्थानाम्। यद्यप्यगृहीतपदा-र्थस्य वाक्यार्थबुद्धिर्नोदेतीति पदार्थज्ञानमवश्यापेक्षितम्, तथापि पदार्थज्ञानद्वारा पदमेव वाक्यार्थबुद्धिकारणम्।

न च वाक्यार्थबुद्ध्यव्यवहितपूर्वकाले पदार्थज्ञानमेवास्ति, न पद-ज्ञानमिति तादृशानुभवविषयपदार्थस्यैव करणत्वमुचितमानन्तर्यादिति वाच्यम्। नलो राजासीदित्यादिवाक्यार्थज्ञानोत्पत्तेः पूर्वमनुभवविषयस्य नलादिपदार्थस्यातीत-त्वेनासत्त्वात् पूर्ववृत्तित्वरूपकारणत्वस्यैवाभावेन करणत्वस्य दूरापास्तत्वात्।

न च—पदार्थकरणतावादिनामभिहितान्वयवादिनां भाट्टानां मते आकृतिरेव शब्दार्थः। गामानयेत्यादौ गोत्वकर्मकमानयनमित्येव शाब्दबोधो जायते। ततः गोत्वजात्या आक्षेपादेव व्यक्तिधीः। जातेश्च सदातनत्वेन न पदार्थानामतीता-नागतस्थले वाक्यार्थबोधानुपपत्तिरिति वाच्यम्।

गवादिपदाद्व्यक्तेर्बोध आवश्यकः। अन्यथा गौरानीयतामिति वाक्य-श्रवणानन्तरं गवानयनादौ प्रवृत्तेरनुपपत्तेः। न च गोत्वजात्या व्यक्तेराक्षेप. सम्भवति। आक्षेपो हि अनुमानमर्थापत्तिर्वा। व्याप्यतावच्छेदकप्रकारेण व्याप्य-

ज्ञानमेव व्यापकमनुमापयति । गोपदाच्च स्वरूपत एव जातिरूपस्थिता लाघवेन तादृश्यामेव शक्तिस्वीकारात् । तथा च गवादिपदात्स्वरूपतो गोत्वज्ञानेऽपि व्याप्य-तावच्छेदकगोत्वत्वादिना अनुपस्थितेः व्यक्तेरनुमानं ततो न संभवति ।

न च—गामानयेत्यत्र द्वितीयार्थकर्मत्वे गोपदार्थगोत्वस्य सामानाधिकरण्ये-नान्वयः । सामानाधिकरण्येन गोत्वविशेषितकर्मत्वेन हेतुना आनयने गोकर्म-कत्वमनुमेयम् । कर्मत्वं तु कर्मत्वत्वेनैवोपस्थितमिति वाच्यम् ।

एतादृशानुमितेः पूर्वं गोकर्मकत्वग्राहकाभावेन साध्यग्रहस्यासंभवात् ।

यदि च शब्देन गोत्वकर्मकत्वज्ञानेऽपि गवादेरुपस्थितिसहकारेण मनसा गोकर्मकत्वग्रहसंभव इत्युच्यते, तदापि गौरानीयतामिति वाक्ये गोपदार्थस्य गोपदात्स्वरूपत उपस्थितस्य गोत्वस्य विशेष्यतया भानानुपपत्तिः । बाधज्ञान-कालेऽपि निर्धर्मितावच्छेदकज्ञानस्य संभवेन गौर्नानीयतामिति वाक्यजन्यज्ञानकाले गौरानीयतामिति निर्धर्मितावच्छेदकशाब्दापत्तेः ।

न च नैयायिकमते प्रथमान्तार्थस्य वाक्यजन्यबोधमुख्यविशेष्यत्वेऽपि भाट्टमते आख्यातार्थभावनाया एव मुख्यविशेष्यत्वात् तत्र प्रथमान्तार्थस्य विशेष-णतयैव भानमिति नोक्तदोष इति वाच्यम् ।

तथापि गवादावानयनकर्मत्वं नानुमातुं शक्यते । गौः आनयनकर्मतावती, सामानाधिकरण्यसंबन्धेन आनयनकर्मताविशेषितगोत्वादित्यनुमाने हेतोः गोत्व-स्यानयनकर्मतारूपसाध्यशून्यगोवृत्तित्वेन व्यभिचारात् । सामानाधिकरण्येना-नयनकर्मताविशिष्टगोत्वस्य विशेषणाभावेनानयनकर्मताशून्यगोवृत्तित्वाभावेना-व्यभिचारेऽपि, पक्षे साध्यसन्देहदशायां पक्षे सामानाधिकरण्येनानयनकर्मता-विशिष्टगोत्वरूपहेतोर्निश्चयासंभवात् । तस्माद्गौरानीयतामिति वाक्यजन्यबोधे व्यक्तेर्भानमावश्यकमिति तदनुरोधेन व्यक्तौ गवादिपदानां शक्तिस्वीकारस्यावश्य-कतया जातिविशिष्टव्यक्तीनामेव पदार्थतया नल आसीदित्यादौ पदार्थस्य नलादि-व्यक्तेः वाक्यार्थबोधात्पूर्वमसत्त्वेन कारणत्वस्यासंभवात् ॥

न च पदार्थज्ञानमेव पूर्ववर्ति करणं, तादृशज्ञानविषयतया अभिहितानां पदार्थानां करणत्वव्यवहार इति वाच्यम्।

व्यापारवत्कारणस्यैव करणत्वेन पदार्थज्ञानस्यावान्तरव्यापाराभावेन करणत्वासम्भवात्। पदस्य तु पदार्थज्ञानमेवावान्तरव्यापार इति करणत्वमुपपद्यते।

यदि च नव्यनैयायिकैः फलायोगव्यवच्छिन्नं कारणं करणमित्यङ्गीकारात् वाक्यार्थबुद्ध्यव्यवहितपूर्ववर्तिपदार्थज्ञानस्य करणत्वं सम्भवतीति मन्यते, तदापि पदस्यान्वयानुभवं प्रति कारणत्वमावश्यकम्। आकाङ्क्षादिमत्पदज्ञान एव संसर्गधी तदभावे तदभाव इति स्वतन्त्रान्वयव्यतिरेकयो सत्त्वात्।

न चान्वयव्यतिरेकौ पदार्थस्मरणेनान्यथासिद्धाविति वाच्यम्।

पदार्थसंसर्गबुद्धौ विशेषणज्ञानविधया पदार्थज्ञानस्य हेतुत्वेऽपि, शाब्दबोधात्मकसंसर्गबुद्धिविशेषं प्रति पदस्य हेतुत्वमवश्यकल्पनीयम्। अन्यथा मानसोपनीतभानात्मकपदार्थज्ञानेऽपि शाब्दयामीत्यनुव्यवसायापत्ते। स्वीकृते च पदहेतुत्वे मानसोपनीतभानस्थले न तादृशानुव्यवसाय आपादयितुं शक्यते।

न च शाब्दसंसर्गधियं प्रति शब्दजन्यपदार्थोपस्थितिं कारणमिति निरुक्तस्थले शब्दजन्याया उपस्थितेरभावान्न शाब्दयामीत्यनुव्यवसायापत्तिरिति वाच्यम्। गौः कर्मत्वमानयनं कृतिरित्यत्र शब्दजन्यगवाद्युपस्थितेः सत्त्वेऽपि शाब्दगवादिसंसर्गबुद्धेरनुदयेन गामानयेतिपदविशेषजन्योपस्थितित्वेन हेतुत्वं वाच्यम्। एवञ्च पदविशेषस्यावश्यकत्वात् तस्यैव संसर्गशाब्दबुद्धिजनकत्वमुचितम्।

न च—वृत्त्या पदजन्यपदार्थोपस्थितिं विना पदज्ञानमात्रात् अन्वयधीर्नोदेति। अत पदजन्यार्थोपस्थितेः हेतुत्वकल्पनमावश्यकम्। क्लृप्ताया पदार्थोपस्थितिकारणताया अवच्छेदककोटौ पदविशेषस्य निवेश एवोचित। न तु स्वातन्त्र्येण पदविशेषस्यान्वयानुभवं कारणत्वं कल्पयितुं युक्तमिति वाच्यम्।

घटमानय घटमानयेत्यादिविभिन्नानुपूर्व्यवच्छिन्नशब्दविशेषजन्योपस्थितित्वेन कारणतास्वीकारे, आनुपूर्वीभेदेन, एकविधशाब्दबोधं प्रति गुरुधर्मा-

वच्छिन्नकारणतानन्त्यप्रसङ्गेन गौरवात्। तत्तदानुपूर्व्यवच्छिन्नपदविशेषस्य संसर्गबुद्धिं प्रति स्वातन्त्र्येण कारणत्वाङ्गीकारे आनुपूर्वीभेदेन कारणताभेदेऽपि गुरुधर्मावच्छिन्नकारणतानन्त्यं नास्ति। पदार्थोपस्थितेश्च विविधानुपूर्वीसाधारणशब्दजन्यपदार्थोपस्थितित्वेनैकैव कारणतेति लाघवम्। किञ्च, वृत्तिज्ञानसहकृतस्वजन्यपदार्थोपस्थितिसंबन्धेन पदविशेषस्य कारणत्वकल्पनमेवोचितं लाघवादिति बोध्यम्॥

न च एवं पदविशेषस्यैवान्वयबुद्धिहेतुत्वे, कवेः काव्यकरणप्रयोजकं संसर्गज्ञानं कथं भवेच्छब्दस्याभावात्। अतः चिन्तावशेनोपस्थितपदार्थैरेव तज्ज्ञानं स्वीकर्तुमुचितम्। एवं विनापि पदं अज्ञाताश्रयस्य श्वैत्यस्य हेषाशब्दस्य खुरविक्षेपशब्दस्य च ज्ञानेन श्वेतोऽश्वो धावतीति संसर्गधीः पदार्थकरणतां विना न युज्यते इति वाच्यम्।

उत्प्रेक्षासहकृतं मन एव चिन्तोपनीतपदार्थज्ञानावान्तरव्यापारद्वारा काव्यकरणप्रयोजकं पदार्थसंसर्गज्ञानं जनयति। मानसे च तस्मिन् संसर्गज्ञाने मन एव करणं न पदार्थः। न चोत्प्रेक्षायाः पृथक् प्रमाणत्वं स्यादिति वाच्यम्। उत्प्रेक्षया कदाचित् भ्रमस्य जननात् प्रमाजनकत्वनैयत्याभावेन प्रमाकरणतावच्छेदकानतिप्रसक्तानुगतरूपाभावात्। उत्प्रेक्षाया अवान्तरव्यापाराभावेन व्यापारवदसाधारणकारणत्वाभावेन करणत्वासंभवाच्च। परन्तु प्रमाणस्य मनसः सहकारिणी उत्प्रेक्षा। पदज्ञानं विना यद्यपि श्वेतोऽश्वो धावतीति संसर्गधीरुदेति, तथापि न सा शाब्दरूपा। पदार्थसंसर्गज्ञानमात्रस्य वाक्यार्थबुद्धित्वाभावात्। अन्यथा चक्षुषा जायमानस्य भूतलं घटवदित्याकारकस्य घटभूतलसंयोगज्ञानस्यापि वाक्यार्थबुद्धित्वापत्तेः। न चेष्टापत्तिः। तत्र भूतले घटसंबन्धं पश्यामीत्येवानुव्यवसायः, न शृणोमीति वा, शाब्दयामीति वा। अतः घटभूतलसंयोगः तत्र प्रत्यक्षार्थः, न वाक्यार्थः। ततश्च श्वेतोऽश्वो धावतीति धीर्लिङ्गजन्या। अनुमानञ्च अयं श्वेतः, अश्वः, हेषावत्त्वादिति। न च हेषायाः श्रवणेऽपि पक्षे श्वेते हेषाज्ञानं नास्तीति स्वरूपासिद्धिरिति वाच्यम्। श्रूयमाणहेषाशब्दस्यावच्छेदकरूपाश्रयविशेषाकांक्षायां उपस्थितश्वेत एव मनसा हेषावत्त्वज्ञानं संभवतीति नासिद्धिः। एतदनुमानानन्तरं,

अयं श्वेतोऽश्वः, धावति, खुरविक्षेपशब्दवत्त्वादित्यनुमितिर्भवति। अत्रापि हेतोः पक्षधर्मताज्ञानं पूर्ववद्बोध्यम्। अयं श्वेतः, धावदश्वः, हेषावत्त्वे सति खुरविक्षेपशब्दवत्त्वादित्यप्यनुमानं संभवति। क्वचित् मनसापि तादृशधीः संभवति।

एवञ्च पदं विना न क्वचिदपि वाक्यार्थबोधः इति वाक्यार्थबोधे पदविशेषस्यैव हेतुता स्वीकरणीया। पदार्थापेक्षया प्रथमगृहीतत्वादपि पदानां बोधजनकत्वमुचितम्।

अपि च, नानार्थस्थले सैन्धवमानयेत्यादौ भोजनप्रकरणे लवणान्वयबोधस्य, प्रकरणान्तरे चाश्वानयनबोधस्य चोपपत्तये शाब्दबोधे तात्पर्यज्ञानस्य कारणत्वं सर्वसंप्रतिपन्नम्। तात्पर्यं-तदर्थप्रतीतीच्छयोच्चरितत्वम्। तात्पर्यज्ञानञ्च पदविशेष्यकमिति तात्पर्यवत्त्वेन पदज्ञानस्य शाब्दबोधकारणता क्लृप्तैव।

एतेन तात्पर्यवत्त्वं न शब्दस्य वाक्यार्थबोधजनकत्वे हेतुः पाकपराणामपि काष्ठादीनां ज्वालामात्रनिष्पादकानां पाककरणत्वाभावेन व्यभिचारादिति परास्तम्।

पाकप्रयोजकज्वालाजनकत्वरूपस्य काष्ठगतपाकपरत्वस्य, वाक्यार्थप्रतीतीच्छयोच्चरितत्वरूपस्य शब्दगतवाक्यार्थपरत्वस्य चान्यादृशत्वेन काष्ठे व्यभिचारस्य दुर्निरूपत्वात्। नानार्थस्थलानुरोधेन तात्पर्यवत्त्वेन पदज्ञानहेतुताया आवश्यकत्वाच्च।

तस्मात् पदानि पदार्थप्रतिपत्तिमात्रपर्यवसायीनि, वाक्यार्थबोधस्तु अभिहितपदार्थनिमित्तक इति वादो न समीचीनः।

एवं वाक्यार्थस्य शाब्दत्वमपि तज्ज्ञानस्य शब्दजन्यतां गमयति। न च शब्दावगतपदार्थजन्यत्वादन्वयप्रतीतेः शाब्दत्वं, तद्विषयस्य च वाक्यार्थस्य शाब्दबोधविषयत्वरूपं शाब्दत्वमिति वाच्यम्। तथा सति चक्षूरूपप्रत्यक्षप्रमाणावगतधूमजन्यवह्न्यनुमितेरपि चाक्षुषत्वं, तद्विषयस्य वह्नेः चाक्षुषत्वञ्च स्यात्। ज्ञायमानलिङ्गस्यानुमितिकरणत्वे धूमलिङ्गजन्यत्वादनुमितेः। न च-चक्षुः न धूमज्ञानमवान्तरव्यापारीकरोति, व्याप्तिज्ञानाभावे धूमज्ञानादप्यनुमितेरदर्शनात्,

व्याप्तिज्ञानसत्त्वे चक्षुर्जन्यधूमज्ञानाभावेऽपि अनुमितेर्दर्शनात्। अतो नानुमितेश्चाक्षु-
षत्वम्। अत्र तु पदार्थज्ञानमवान्तरव्यापारः।

साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम्।
वर्णास्तथापि नैतस्मिन् पर्यवस्यन्ति निष्फले॥
पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम्॥

इति वार्तिकोक्तेरिति वैषम्यमिति वाच्यम्। तद्व्यायातं मार्गेण। न हि पदज्ञानस्य
वाक्यार्थबोधकारणत्वाभावे पदार्थज्ञानमवान्तरव्यापार इति संभवति, तज्जन्यत्वे
सति तज्जन्यजनकत्वस्यैव तदीयव्यापारत्वरूपत्वात्। अत एव पदार्थज्ञानेन
पदज्ञानस्य नान्यथासिद्धिः। व्यापारेण व्यापारिणो नान्यथासिद्धिरिति
न्यायात्। अन्यथा आवश्यकेनापूर्वेण स्वर्गोत्पत्तिसंभवे तज्जनकयागस्य स्वर्गं
प्रत्यन्यथासिद्धत्वापत्तेः। न च प्रमाणान्तरावगतकारणत्वनिर्वाहाय यत्र व्यापार-
कारणता स्वीक्रियते तत्रैव व्यापारेण व्यापारिणो नान्यथासिद्धिः। 'यजेत
स्वर्गकामः' इति श्रुतिप्रमाणावगतयागनिष्ठस्वर्गसाधनतानिर्वाहायापूर्वकारणतायाः
कल्पनादिति वाच्यम्। व्यवहारप्रमाणावगतपदज्ञाननिष्ठवाक्यार्थबोधकारणतानिर्वा-
हायैव पदार्थोपस्थितिकारणतायाः कल्पनेनात्रापि पदज्ञानस्यान्यथासिद्धिविरहात्।

किञ्च, प्रमाणत्वं प्रमाकरणत्वरूपमेव प्रत्यक्षादीनां क्लृप्तम्। न हि
प्रत्यक्षादिस्थलेऽपि पदार्थस्वरूपमात्रविषयकालोचनमेवेन्द्रियफलं, न तु विशिष्टज्ञान-
मिति कल्पनं युक्तम्। अनुमानस्य चानुमितिप्रमाकरणत्वमेव सर्वसंप्रतिपन्नम्।
अतः प्रमाणत्वात् शब्दस्यापि प्रमाकरणत्वमेवोचितं न तु प्रमाप्रयोजकत्वमिति
विभावनीयम्।

शब्दादमुमर्थं प्रत्येमीति प्रतीतेः बाधकाभावेन शब्दजन्यत्वावगाहितया
वाक्यार्थबुद्धेः शब्दजन्यतैव प्रामाणिकी। न च शाब्दबोधपूर्वक्षणे अविद्यमानस्य
पदज्ञानस्य कथं कारणतेति शङ्क्यम्। तदीयव्यापारस्य पदार्थज्ञानस्य सत्त्वेनैव
कारणत्वनिर्वाहात्। कार्याव्यवहितपूर्ववृत्तिस्वस्वव्यापारान्यतरकत्वस्यैव कारणता-

रूपत्वात्। अन्यथा यागस्यापि स्वर्गसाधनत्वानुपपत्तेः। फलबलेन पदानुसन्धानस्य कल्पयितुं शक्यत्वाच्च।

न च पदार्थानां संसृष्टतया संसर्गानुभवजनकत्वं क्लृप्तमिति वाच्यम्। अन्वययोग्यतामात्रेणान्वयानुभवजनकत्वस्याक्लृप्तत्वात्। अन्यथा वह्निपर्वतयोः संबन्धयोग्यत्वात् वह्न्यादीनापि संयोगानुभवरूपानुमितिहेतुता स्यात्। न हि कश्चिदभ्युपैति वह्नेरनुमितिहेतुताम्। न हि वयं कार्यान्वितशक्तिवादिनः, येन 'पाण्डुरेव पटी भाति यत्र गोदावरी नदी', 'राजाऽसौ गच्छति' इत्यादौ लिङ्गाद्यसमभिव्याहारे पदानामन्वयबोधजनकत्वासंभवेन पदार्थानामेवान्वयानुभवजनकत्वमिति शङ्कितु शक्यते। तस्मान्न पदार्थः वाक्यार्थबोधे करणम्।

किञ्च, पदार्थस्य प्रमाकरणत्वे तस्यातिरिक्तप्रमाणत्वापत्तिः। न हि मीमांसाभाष्यकारोऽपि तमतिरिक्तप्रमाणं मते। न च तस्य लिङ्गादीनामिव शब्दप्रमाणेऽन्तर्भावान्न प्रमाणान्तरतेति वाच्यम्। अङ्गताग्राहकलिङ्गादीनि श्रुतिकल्पनयाऽङ्गता बोधयन्ति। श्रुतिश्च शब्दः। स एवाङ्गतां बोधयति। लिङ्गादिकन्तु तदुत्थापकमिति लिङ्गादीनां शब्देऽन्तर्भाव. मीमांसकैर्व्यवह्रियते। एवं चेष्टा न मानान्तरं अनुमाने शब्दे वाऽन्तर्भावादिति प्रामाणिका व्यवहरन्ति। तत्र चेष्टा द्वित्वानुमापकं लिङ्गं, द्वाविति शब्दं वोपस्थापयति। अनुमानं शब्दो वा द्वित्वं बोधयति। प्रकृते यदि पदार्थः शब्दमुत्थापयेत्, उत्थापितश्च शब्दः वाक्यार्थमवगमयेत्, तदा पदार्थस्य शब्देऽन्तर्भावकथनं समञ्जसं भवेत्। नत्वेवम्। प्रत्युत शब्दोपस्थापित. अर्थ एव वाक्यार्थमवबोधयतीति शब्दस्यैव पदार्थेऽन्तर्भावः वक्तुमुचितः। न च तथैवास्त्विति शङ्कनीयम्। प्रमाणपरिगणनावसरे प्रत्यक्षानुमानोपमानशब्देति कथनस्यायुक्तत्वात्, प्रत्यक्षादितुल्यकक्षत्वेन शब्दपदस्थाने पदार्थपदस्यैव प्रयोक्तुमुचितत्वात्। पश्यतः श्वेतमारूपमित्युक्तरीत्या प्रत्यक्षाद्युपस्थितपदार्था वाक्यार्थप्रमां जनयन्ति। तथा पदोपस्थापिता अपि। अतः पदार्थ एव प्रमाणगणनाया निर्देशमर्हति। न हि वर्णपरिगणनाया ब्राह्मणराजन्यौ इतिवत्, ब्राह्मणयुधिष्ठिरौ, वसिष्ठराजन्यौ इति वा निर्दिशन्ति प्रामाणिका.। तस्मात्पदार्थस्य शब्दप्रमाणेऽन्तर्भावोक्तिर्न रमणीयेति बोध्यम्।

किञ्च, पदात् घटत्वादिपदार्थमात्रविषयकनिर्विकल्पकशाब्दबोधो जायते इत्यनुपपन्नम्। निर्विकल्पके शाब्दत्वसत्त्वे प्रमाणाभावात्। पदजन्यपदार्थज्ञानकाले हि स्मरामीत्येवानुव्यवसायो जायते न तु शाब्दयामीति। पदस्य स्मरणजनकत्वन्तु भट्टमतेऽपि स्वीकृतमेव, निर्विभक्तिकघटपदाच्छाब्दबोधाभावेन घटत्वमात्रस्मृतेरङ्गीकारात्। न च—पदे अर्थस्य स्मरणप्रयोजकः संबन्धो नास्ति, स्मारकत्वञ्च न तादृशः संबन्धः, तदतिरिक्तसंयोगादिसंबन्धस्यैव हस्तिहस्तिपालकादिस्थले स्मरणप्रयोजकत्वेन दृष्टत्वात्। तदनुभावकत्वं न संबन्धः, तदनुभावकत्वे स्मरणजनकत्वकल्पनावैयर्थ्यात्। अतो नार्थस्मरणमिति वाच्यम्। वृद्धव्यवहाराधिगतपदगततत्संसर्गानुभावकत्वस्यैव स्मरणप्रयोजकत्वसंभवात्। अन्यथा अप्रामाणिकस्मृत्यनुभवविलक्षणानन्तज्ञानकल्पनायां महागौरवात्। निर्विभक्तिकघटादिपदे घटत्वस्मरणप्रयोजकस्येव सर्वत्रापि तादृशस्य संभवात्।

वस्तुतस्तु पदपदार्थयोः संकेतस्य संबन्धताया व्यवस्थापयिष्यमाणत्वेन न स्मरणप्रयोजकसंबन्धानुपपत्तिलेशोऽपि।

अपि च, येन रूपेण विशिष्टे यद्रूपविशिष्टस्य संबन्धो गृहीतः, तद्रूपविशिष्टज्ञानेन तद्रूपविशिष्टस्यैव स्मृतिरनुभवसिद्धा। घटपदस्य घटत्वविशिष्टे संकेतरूपसंबन्धज्ञानात् घटपदेन ज्ञातेन घटत्वविशिष्टस्यैव स्मृतिर्भवति न घटत्वमात्रस्य। व्यक्तिबोधासंभवेन जातिमात्रे पदानां शक्तिर्निराकृतेति न पदान्निर्विकल्पकशाब्दबोधः प्रमाणपदवीमधिरोहति।

यदप्यभ्यधायि अन्विताभिधानदूषणावसरे, वाक्यार्थो लाक्षणिकः पदबोध्यपदार्थेन बोध्यत्वात् तीरवत्। तीरं गङ्गापदबोध्यप्रवाहेण स्मार्यते, वाक्यार्थस्तु पदबोध्येन पदार्थेनानुभाव्यते, न स्मार्यते अपूर्वत्वात्। तथा चानन्यलभ्यः शब्दार्थः इति न्यायेन, लक्षणालभ्यस्य वाक्यार्थस्य न शब्दार्थता। लक्ष्यस्य च न वाक्यार्थेऽन्वयनियमः, विषं भुङ्क्ष्वेत्यादौ लक्ष्यस्य शत्रुगृहभोजनानिष्टसाधनत्वस्यान्वयाभावात्। प्रामाण्यानुपपत्तिरेवानुगतं लक्षणाबीजम्। पदार्थबोध्यनिष्ठः पदार्थप्रतियोगिकः संबन्धो लक्षणा इति निष्कर्षः। वाक्यघटकानि सर्वाणि पदानि वाक्यार्थे लाक्षणिकानि इति।

तदपि चिन्तनीयमेव । यतः मीमांसकानामन्वयानुभवजननसामर्थ्यमेव शक्तिः । तच्चेत्सामर्थ्यं लाक्षणिकस्यापीष्यते, तदा लाक्षणिकस्यापि शक्तिमत्त्वात् मुख्यजघन्यविभागो न घटते इति लिङ्गाधिकरणविरोधः । मुख्यसंभवे लक्षणा नोपादेयेति सर्वतन्त्रसिद्धान्तश्च विरुद्धयते ।

यदि च—पदोपस्थापितेनार्थेनान्वयबोधः । गङ्गायां घोष इत्यत्र तु गङ्गापदेनोपस्थापितः प्रवाहः स्वसंबन्धितीरं स्मारयति । स्मृतेन तीरेण तीरान्वयबोधः । स्वजन्यार्थोपस्थितिमात्रद्वारकानुभावकत्वमेव शक्तिः । तद्वच्च पदं मुख्यार्थकमित्युच्यते । गङ्गापदं तु स्वजन्यप्रवाहोपस्थितिजन्यतीरोपस्थितिद्वारानुभावकमिति निरुक्तस्वजन्यार्थोपस्थितिमात्रद्वारकानुभावकत्वरूपशक्त्यभावादमुख्यार्थकमित्युच्यते इति न लिङ्गाधिकरणविरोध इति मन्यते ।

तदपि—वाक्यार्थो लक्ष्य इत्यभिधानमसमञ्जसम् ।

तथा हि । घटमानयेत्यादिवाक्यजन्यान्वयबोधे अपदार्थस्य भानाभावात् पदजन्यपदार्थोपस्थितिः शाब्दबोधहेतुः । घटपदात्समवायेनोपस्थितस्याकाशस्यान्वयबोधाभावात् वृत्त्या पदजन्यार्थोपस्थितिः अन्वयबोधहेतुरिति स्वीक्रियते । वृत्तिर्नाम पदपदार्थयोः संबन्धः । स च शक्तिलक्षणाभेदेन द्विविधः । लक्षणापि पदवृत्तिरेव । एवञ्च शक्त्या लक्षणया वा पदेनोपस्थिता अर्था भासन्ते । अत एव शाब्दबोधौपयिकस्मरणप्रयोजकपदपदार्थसंबन्धो वृत्तिरिति गीयते । पदाभिहिता अर्था अन्वयमनुभावयन्तीति पक्षे न वाक्यार्थे लक्षणा नाम वृत्तिः सम्भवति । न हि वाक्यार्थस्यान्वयस्य पदात् स्वार्थप्रतियोगिकत्वसंबन्धेन स्मृतिः, ततः शाब्दबोधश्च जायते । तस्माच्छाब्दबोधौपयिकस्मरणप्रयोजकमूलसंबन्धत्वाभावान्नेयं लक्षणा । न च—विशिष्टबुद्धौ विशेषणज्ञानस्यैव जनकत्वात् संसर्गज्ञानस्याहेतुत्वात् वाक्यार्थबोधेऽन्वयोपस्थितिर्नापेक्षिता, वाक्यार्थत्वेनापूर्वत्वात्पूर्वमुपस्थितिरसम्भविनी चेति शाब्दबोधौपयिकस्मरणप्रयोजकत्व नास्त्यान्वयनिष्ठसंबन्धस्य । परन्तु स्वव्यसनस्तस्यान्वयबोधनियामकत्वमिति वाच्यम् । तथापि निरुक्तवृत्तित्वानुपपत्तेस्तदवस्थत्वात् ।

एतेन—

वाच्यस्यार्थस्य वाक्यार्थे संबन्धानुपपत्तितः।
तत्संबन्धवशप्राप्तस्यान्वयाल्लक्षणेष्यते ॥

इत्युक्तलक्षणाभावेऽपि पदानां वाक्यार्थे अन्यादृशी वृत्तिरस्तु। तदुक्तं तत्त्वबिन्दौ, "एवञ्च न चेदियं पदवृत्तिर्लक्षणमन्वेति, भवतु तर्हि [1]चतुर्थी दृष्टत्वात्" इति—इत्यपास्तम्।

वृत्तिसामान्यलक्षणानाक्रान्तत्वेन वृत्तिविशेषत्वस्य दूरापास्तत्वात् विलक्षणवृत्तिकल्पनायां गौरवाच्च।

यदि च—शाब्दधीप्रयोजकः शाब्दधीबोध्यबोधकयोः संबन्धः वृत्तिरित्यभिधीयते। घटपदतदर्थघटयोः शक्तिरूपः संबन्धो वृत्तिः। गङ्गायां घोषः इत्यादौ गङ्गापदोपस्थापितः प्रवाहः स्वसंबन्धि तीरं स्मारयति। शाब्दधीबोध्यतीरस्य बोधकप्रवाहस्य च संबन्धः संयोगादिः लक्षणा। अत एव पदार्थवृत्तिर्लक्षणेति प्रवादः। 'शक्यादशक्योपस्थितिर्लक्षणा' इति प्राचीनतार्किकोक्तिरपि अशक्योपस्थितिप्रयोजकः शक्यनिष्ठः संबन्धो लक्षणेत्यर्थकतया व्याख्याता। लक्षणायाः पदवृत्तित्वमेवेति स्वीकारेऽपि, गङ्गापदस्य तीरे स्वशक्यार्थप्रवाहसंयोगादिः निरुक्तबोध्यबोधकसंबन्धो वृत्तिः। स च तीरस्मृतिद्वारा तीरान्वयबोधप्रयोजकः। वाक्यार्थे अन्वये बोध्ये बोधकस्यार्थस्य संबन्धः तत्प्रतियोगिकत्वादिः वृत्तिः। स च स्वरूपसन्नेव शाब्दधीप्रयोजकः। एवञ्च शाब्दधीप्रयोजकबोध्यबोधकसंबन्धत्वरूपं वृत्तित्वमस्मदभिमतलक्षणायामुपपन्नमेवेति मन्यते।

तदापि नेयं लक्षणा। तीरस्येव लक्ष्यत्वाभिमतस्य वाक्यार्थस्यान्वयान्तराभावात्।

---

[1] मीमांसकानां मते, शक्तिः लक्षणा गौणी चेति तिस्रो वृत्तयः स्वीकृताः। इयं चतुर्थीति तात्पर्यम्।

न च—विषं भुङ्क्ष्व इत्यादिवाक्यं शत्रुगृहभोजनानिष्टसाधनत्वे लाक्षणिकं दृश्यते। न च तत्र लक्ष्यस्यान्वयान्तरमस्ति। अतश्च लक्ष्यस्य वाक्यार्थेऽन्वयः लक्षणायामप्रयोजक इति वाच्यम्। शक्यसंबन्धो हि लक्षणा। शक्तिश्च पदानामेव न तत्समुदायस्य वाक्यस्य। ततश्च वाक्ये शक्यभावेन शक्यसंबन्धरूपा लक्षणैव नास्ति। तस्मात् विषपदस्य शत्रुगृहभोजने क्रियापदस्यानिष्टसाधनत्वे च लक्षणां स्वीकृत्य तयोरन्वयबोधो वाच्य इति तत्रापि लक्ष्यस्यान्वयो वर्तत एव।

किञ्च, यथा वह्नितात्पर्येण प्रयुक्ते धूमोऽस्तीति वाक्ये धूमपदस्य न वह्निर्लक्ष्यः। अवगतेन धूमेन लिङ्गेन वह्नेरनुमानसंभवेनान्यलभ्यत्वात् अनन्यलभ्यः शब्दार्थः इति न्यायात्। तथाऽत्रापि शत्रुगृहभोजने प्रसक्ते आप्तेन विषं भुङ्क्ष्व इति वाक्यं प्रयुज्यते। तस्य च विषभोजने इष्टसाधनत्वमर्थः। स च मरणहेतौ तस्मिन् बाधितः। प्रयोक्तर्यात्ते विरुद्धार्थोपदेष्टृत्वेन हेतुना कोपोऽनुमीयते। कोपहेतुतया च प्रसक्तं शत्रुगृहभोजनमनुमीयते। ततः तादृशभोजनस्याकर्तव्यत्वं बलवदनिष्टानुबन्धित्वरूपमनुमिनोति इत्यनुमानपरम्परया शत्रुगृहभोजननिवृत्तितात्पर्यकत्वं, न तु लक्षणया तद्बोधकत्वं वाक्यस्य। अनन्यलभ्यः शब्दार्थ इति न्यायात्। तस्माद्वाक्यार्थे लक्षणाकथनमसमञ्जसम्॥

अपि च, विहायापि सर्वसंप्रतिपन्नलक्षणारीतिं वाक्यार्थे लक्षणाङ्गीकारे निमित्तं किमिति वक्तव्यम्। प्रमाणेन प्रमेये बोधनीये, प्रमेये प्रमाणसंबन्धः प्रयोजकः, यथा प्रत्यक्षेन प्रमाणेन घटवद्भूतलमिति ज्ञानं जायते, तत्र भूतलं विशेष्य, घटः प्रकारः, संयोगः संसर्गः, त्रिष्वपि प्रमेयेषु इन्द्रियाख्यप्रमाणसंबन्धोऽस्ति, घटभूतलयोः संयोगस्य, संयोगे संसर्गे संयुक्तसमवायस्य च संबन्धस्य सत्त्वात्, इत्यत्रान्वयबोधे संसर्गतया भासमानेऽन्वये प्रमेये प्रमाणस्य शब्दस्य संबन्ध आवश्यकः। शक्तिरूपसंबन्धश्च निराकृत इति लक्षणाख्यः संबन्धः कल्प्यते इति न मन्तव्यम्। अज्ञातकरणस्थले संसर्गादौ प्रमेये प्रमाणसंबन्धस्य सत्त्वेऽपि ज्ञातकरणस्थले संसर्गे प्रमेये प्रमाणसंबन्धानपेक्षादर्शनेन ज्ञायमानकरणेन शब्देन प्रमाणेन बोध्ये संसर्गे शब्दसंबन्धानपेक्षणात्। ज्ञायमानलिङ्गेन धूमेनानुमानप्रमाणेन पर्वतो वह्निमानित्यनुमितिर्जायते। तत्र प्रमेये वह्नौ प्रमाणेन धूमेन

व्याप्तिलक्षणः संबन्धोऽस्ति। वह्निपर्वतयोः संबन्धे संयोगे प्रमेये न प्रमाणसंबन्धोऽस्ति। न च पर्वते वह्निसंबन्धं विना हेतोः पक्षधर्मत्वमनुपपन्नमिति पक्षधर्मतावलात् संसर्गोऽनुमितौ भासते इति वाच्यम्। तथैवात्रापि आकांक्षाबलेनैव विनापि वृत्तिं संसर्गभानसंभवात्। **तदुक्तं मणौ**—"दृष्टञ्च ज्ञातकरणे सामान्यसंबन्धितया ज्ञातस्यापि विशेषबुद्ध्युपायत्वम्, यथा वह्निसामान्यव्याप्ततया गृहीतस्य धूमस्य वह्निविशेषबुद्धिजनकत्वम्" इति। "**सामान्यसंबन्धितयेति**— व्यक्तिसंबन्धितयेत्यर्थः। **विशेषबुद्धीति**— संसर्गबुद्धीत्यर्थः। **वह्निविशेषबुद्धिजनकत्वम्**—वह्निसंसर्गबुद्धिजनकत्वम्॥" इति **मथुरानाथभट्टाचार्या** मणिग्रन्थं विवृण्वन्ति।

वाक्यार्थो न शब्दशक्यः किन्त्वन्यलभ्य इति मृष्यामहे। अवश्यापेक्षिताकांक्षाभास्यत्वात्। लाक्षणिक इति तु न मृष्यामहे।

अभिहितान्वयवादद्वितीयतृतीयपक्षवादिनस्तु घटमितिसुबन्तस्य प्रकृतिप्रत्यार्थस्मरणद्वारा घटत्ववृत्तिकर्मतारूपार्थबोधजनकत्वं स्वीकुर्वन्तोऽपि क्रियाकारकयोः संसर्गरूपमहावाक्यार्थबोधः न पदकरणकः, अपि तु सुबन्तार्थघटत्ववृत्तिकर्मतारूपार्थेनानुभाव्यते इति मन्यन्ते।

तत्र यथा वृद्धव्यवहारेण पदानां वाक्यार्थबोधे हेतुता स्वीक्रियते, तथा तेनैव प्रमाणेन अवान्तरवाक्यार्थबोधद्वारा महावाक्यार्थबोधहेतुताऽपि स्वीकर्तुमुचितेति बोध्यम्।

तस्मात् पदान्येव पदार्थस्मृतिद्वाराऽन्वयबोधं जनयन्ति।

तत्रापि वृद्धव्यवहाराद्व्युत्पत्तिरिति सत्यम्। शिविकावाहकपुरुषवत् सर्वाणि पदानि अन्वयबोधे कार्ये संहत्य व्याप्रियन्ते इति च सत्यम्। परन्तु पदानां नान्विते शक्तिः, किन्तु तत्तदर्थमात्रे।

ननु वृद्धव्यवहारेण मध्यमवृद्धनिष्ठतयानुमिते संसृष्टार्थविषयके इतरान्वितज्ञाने पदानां जनकत्वमवधारयति बालः। एवञ्चेतरान्वितज्ञानस्योपस्थितत्वात्तत्रैव

पदशक्तिं गृह्णाति । न तु केवलतत्तदर्थविषयकशाब्दमात्रे । तस्यानुपस्थितत्वात् उपायान्तरेण तदुपस्थितिकल्पने गौरवात् । तथा चेतरान्वितार्थानुभवजनकत्वेन पदमवधारितमिति अन्विताभिधानमेव सपन्नमिति चेत्—

न—व्यवहारेण इतरान्वितज्ञानस्योपस्थितौ सत्यां तत्तदर्थज्ञानरूपविशेष्यस्याप्युपस्थितत्वमेव । न हि विशेष्यमविषयीकृत्य विशिष्टबुद्धिरुदेति । तथा चोपस्थिते तत्तदर्थज्ञान एव पदस्य कारणतामवधारयति, तत्तदर्थे एव शक्तिं गृह्णाति लाघवात् नत्वन्वयांशेऽपि गौरवात् इति प्राथमिकशक्तिग्रह. नान्वितविषयकः ।

अथवा, भवतु प्रथमत इतरान्वितज्ञानकारणत्वग्रह इतरान्विते शक्तिग्रहपर्यवसित । तथापि पश्चात् अन्वयस्यान्यलभ्यत्वप्रतिसन्धानात् प्रथमगृहीताया अपि अन्विते शक्तेस्त्याग. सभवति । अन्वितशक्तिवादिमते, प्रथमत गवानयनादिकार्यलिङ्गेन कार्यान्विते शक्तौ गृहीतायामपि कार्यस्य लिङादिपदलभ्यतया अन्यलभ्यकार्यांशत्यागवत् । न च कार्यस्य पदान्तरशक्यत्ववदन्वयस्य न पदान्तरशक्यत्व, तत्स्वीकारे वा विवादपर्यवसानमिति वाच्यम् । सर्वैरपि अन्वयविशेषबोधनिर्वाहायाकाङ्क्षावश्यमपेक्षणीया । स्वीकृताश्चाभिहितान्वयवादिभि अन्विताभिधानवादिभिश्चाकाङ्क्षाया वाक्यार्थबोधोपयोगित्वम । तथा च तत्तत्संसर्गविशेषविषयकशाब्दबोध प्रति तत्तत्पदसमभिव्याहारज्ञानकारणताया क्लृप्तत्वात् तादृशाकाङ्क्षयैव संसर्गलाभादन्यलभ्यत्वेन पदान्तरशक्तिलभ्यत्वानावश्यकत्वात् । तस्मात् प्रथमगृहीता अन्विते शक्ति अन्यलभ्यत्वलाघवतर्काभ्यां त्यज्यते ।

न चान्विते शक्तिग्रहस्य प्रथम जातत्वेन बलवत्त्वात् न तस्य पश्चात्तनेन तत्तदर्थशक्तिग्रहेण बाधो युज्यते इति वाच्यम् ।

न प्रथमजातत्वमात्र बलवत्त्वे अबाध्यत्वे च प्रयोजकम् । यत शुक्तौ प्रथम जातोऽपि रजतभ्रम विशेषदर्शनजन्येन पश्चात्तनेन बाध्यते । प्रत्युत अन्यलभ्यत्वलाघवतर्काभ्यामनुगृहीत तत्तदर्थे शक्तिग्रह एव युक्त्यननुगृहीतप्राथमिकशक्तिग्रहबाधक । दृष्टश्च विशेषशास्त्रत्वेन प्रबलस्यापि शास्त्रस्य तर्कानुगृहीतेन सामान्यशास्त्रेण बाध । तथाहि, कर्मफलमनित्य वा नित्य वेति विचार. ।

तत्र 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इति श्रुतिः कर्मफलविशेषस्य चातुर्मास्यफलस्याक्षय्यत्वं ब्रूते। 'तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति श्रुतिः कर्मफलसामान्यस्य नश्वरत्वं बोधयति। सामान्यशास्त्रमपि यत्कृतकं तदनित्यमिति न्यायानुगृहीतं प्रबलं सत् विशेषशास्त्रमपि 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इति श्रुतिं बाधते इति कर्मफलसामान्यस्य नश्वरत्वमेवेति वेदान्तिनः प्रतिपादयन्ति। तस्मात्तर्कावष्टब्धः शक्तिग्रह एव बलीयान्।

न च सर्वैरपि प्रथममन्वितज्ञानजनकतया प्रतीयमानत्वात् अन्विते शक्तिग्रहस्य प्राबल्यमिति वाच्यम्।

शरीरेऽहमिति प्रत्ययः कृशोऽहं, श्यामोऽहमित्यादिः सर्वेषां प्रथमतो जायते। एवं ज्योतिश्शास्त्रबोधितलक्षयोजनविस्तीर्णः अर्कः सर्वैः प्रथममल्पपरिमाणतया प्रतीयते। न हि ते प्रत्यया यथार्था इति कश्चिदुपैति। परन्तु ते पश्चात्तनेन प्रमाणेन बाध्यन्ते। तस्मान्न सर्वैः प्रथमं प्रतीयमानत्वं प्राबल्यप्रयोजकम्।

न चोपजीव्यत्वेन तस्य प्राबल्यमिति वाच्यम्।

सामग्रीसमवधानेन दैवात्प्रथममुत्पन्नत्वेऽपि उपजीव्यत्वाभावात्। तथात्वेऽपि वा उपजीव्यस्यापि प्रबलेनोपजीवकेन बाधः संभवति। तथा हि निर्णीतं पूर्वतन्त्रे तृतीयाध्याये। कुण्डपायिनामयने श्रूयते 'यो होता सोऽध्वर्युः' इति। अत्र प्रथमश्रुतः होतृशब्दो मुख्यार्थकः। चरमश्रुतः अध्वर्युशब्दः अध्वर्युकर्मलाक्षणिकः। तथा चाध्वर्युकर्मणि होता विधीयते। तेनात्र प्रकृतितः होतुरध्वर्योश्च प्राप्तौ सत्यामपि होत्रैवाध्वर्यवं कर्तव्यमिति व्यवस्था। प्रकृतौ हि यूपपरिव्याणकाले क्रियमाणानुवादी 'परिवीरसि' इति मन्त्रः अध्वर्युणा, 'युवा सुवासा' इति मन्त्रः होत्रा च प्रयोक्तव्यः। विकृतौ कुण्डपायिनामयने तयोः प्राप्तौ एकेन होत्रा एकस्मिन्नेव यूपपरिव्याणकाले द्वयोर्मन्त्रयोः प्रयोगो न संभवति। अतोऽवश्यमन्यतरस्य बाधोऽङ्गीकरणीयः। 'यो होता सोऽध्वर्युः' इति प्रत्यक्षश्रुत्या आध्वर्यवकर्मणि होतुर्विधीयमानत्वादाध्वर्यवस्य बाधायोगात्. प्रकृतिवत्कर्तव्या इति [illegible]

प्राप्तहोतृकर्मणो बाधः। अत्र 'यो होता' इति प्रत्यक्षवचनं होतृप्राप्तिमुपजीवति। अन्यथा यो होतेति सिद्धवद्धोतृनिर्देशानुपपत्तेः। विकृतौ पदार्थप्राप्तिरुपकारमुखेनैवेति होतृकर्मप्राप्तिरपि वचनस्योपजीव्या। होतृकर्मप्राप्तिश्चाविशेषेण प्रवृत्ता 'युवा सुवासा' इति मन्त्रप्रयोगमपि स्पृशति। एवमप्युपजीवकस्य प्रत्यक्षवचनत्वेन प्रबलत्वादुपजीव्यस्यैव होतृकर्मणो बाधः सिद्धान्तितः। एवमत्रोपजीवकस्य अन्यलभ्यत्वलाघवतर्कसहकृतत्वेन प्रबलत्वाचेनोपजीव्यस्यापि प्राथमिकान्वितशक्तिग्रहस्य बाधो युज्यते।

न च प्रथममन्वितार्थज्ञाने साक्षात् कारणत्वं गृहीतमिति तद्विरोध इति वाच्यम्। बालः साक्षात्परम्परासाधारणं कारणत्वमेव गृह्णाति। कारणताग्राहकान्वयव्यतिरेकादेरुभयसाधारण्यात्। ततः बाधकाभावनिश्चयसहकृतः अन्वयव्यतिरेकग्रहः साक्षात्कारणत्वनिर्णायकः। अत एव स्वतःप्रामाण्यवादिनां मीमांसकानां मते प्रामाण्यस्यौत्सर्गिकत्वेऽपि बाधाभावनिश्चयसहकृतसामान्यसामग्र्यैव प्रामाण्यनिर्णयो भवति। अतश्चोत्पन्ने ज्ञाने इदं प्रमा नवेति सन्देह उपपद्यते। बाधाभावानिर्णयेन प्रामाण्यस्य पूर्वमनिर्णीतत्वात्। इत्थञ्च बालः अन्यलभ्यत्वादेः बाधकस्याभावं न निश्चिनोति। अतश्च बाधकाभावरूपसहकाराभावात् न साक्षात्कारणतानिर्णयः पूर्वं जातः, परन्तु सामान्यतः कारणतानिर्णय एव जातः।

तस्मात्, कार्यान्वितशक्तिवादिमते, घटमानयेत्यादौ बालेन प्रथमतो गृहीतानयनकार्यविशेषान्विते शक्तिग्रहेऽपि पश्चात्कार्यविशेषे, अन्वितशक्तिवादिमते, प्रथमतः कार्यान्विते शक्तिग्रहेऽपि पश्चात् कार्यस्यान्यलभ्यत्वेन कार्यांशे च यथा शक्तेस्त्यागः, तथा प्रथमतः अन्विते शक्तिग्रहेऽपि जाते लाघवान्यलभ्यत्वप्रतिसन्धानात् पश्चात् अन्वयेऽपि शक्तिस्त्यज्यते इति पदानामन्वये न शक्तिः प्रामाणिकी॥

ननु शब्दवृत्तिविषय एव शब्दबोध्यः इति नियमः स्वीकरणीय., अन्यथा घटमानयेति वाक्याच्छब्दवृत्त्यविषयस्य पटस्यापि बोधापत्तेः। यद्यपि

ज्ञायमानकरणस्थले प्रमाणेन धूमेन लिङ्गेन संबन्धं विनापि पर्वते वह्निसंबन्धोऽनुमितौ भासते, तथापि ज्ञातकरणं शब्दः वह्निसंबन्धं शब्दवृत्तिमपेक्ष्यैव बोधयति। पर्वतो वह्निमानिति वाक्यमेव वह्निसंसर्गं बोधयति, न पर्वतो वह्निरिति वाक्यम्। स च संसर्गः मतुप्प्रत्ययशक्तिविषयः तस्य संबन्धिशक्तत्वात्। तथा च शाब्दबोधे भासमानस्य संसर्गस्य शब्दवृत्तिविषयत्वमावश्यकमित्यन्विते शक्तिरावश्यकीति चेन्न। घटः पटो नेत्यत्र पटप्रतियोगिकभेदः, घटे पटो न इत्यत्र पटप्रतियोगिकात्यन्ताभावश्च बुध्यते। समानविभक्तिकप्रतियोग्यनुयोगिवाचकपदसमभिव्याहृतनञः, अन्योन्याभावबोधकतायाः, सप्तम्यन्तानुयोगिवाचकपदसमभिव्याहृतनञः, अत्यन्ताभावबोधकतायाश्च व्युत्पत्तिसिद्धत्वात्। तत्र नञर्थे अभावे घटपदार्थः प्रतियोगितासंबन्धेनान्वेति। न च प्रतियोगित्वशक्तं किमपि पदमस्ति। तस्मात् शब्दवृत्त्यविषयस्यापि प्रतियोगिसंबन्धस्य प्रतियोगित्वस्य शाब्दबोधे भानात् शब्दवृत्तिविषयस्यैव शाब्दबोधविषयत्वमिति नियमोऽप्रामाणिकः। नाप्यतिप्रसङ्गः शङ्कनीयः, वृत्त्यविषयस्य शब्दबोध्यत्वे शक्यप्रतियोगिकान्वयत्वस्य नियामकतास्वीकारात्।

न च नञ्पदवृत्तिविषय एव प्रतियोगिसंबन्धः। तदन्यवाचि तदभाववाचि च नञ्पदम्। तदन्यशरीरे प्रतियोगिनो भेदस्य च संबन्धोऽपि प्रविष्टः। अतश्च तद्वाचिनञः शक्यकोटावपि प्रतियोगिसंबन्धः प्रविशत्येवेति वाच्यम्। घटादन्यः इत्यादौ अन्यशब्दस्य भेदवानर्थः। भेदे घटस्य संबन्धः प्रतियोगित्वं घटपदोत्तरपञ्चम्या बोध्यते नान्यशब्देन। अनन्यलभ्यः शब्दार्थः इति न्यायात्। एवमेव घटस्याभावः इत्यत्र अभावपदशक्यार्थः अभाव एव। तत्र घटीयसंबन्धस्तु घटपदोत्तरषष्ठीविभक्त्या बोध्यते। तस्मादन्याभावशब्दयोः शक्यकोटौ प्रतियोगिसंबन्धस्याप्रविष्टत्वेन तत्समानार्थकनञः शक्यकोटावपि प्रतियोगिसंबन्धस्याप्रवेशात्। न च घटादन्यः इत्यत्रान्यपदसमभिव्याहारे संबन्धबोधकपञ्चमीव, घटस्याभावः इत्यत्र संबन्धबोधकषष्ठीव च भेदार्थकनञ्प्रयोगे संबन्धबोधकपञ्चमी, अभावार्थकनञ्प्रयोगे तादृशी षष्ठी च स्यादिति, घटान्न, घटस्य न, इति प्रयोगापत्तिरिति वाच्यम्। घटान्नेति प्रयोगमापादयता केन सूत्रेण पञ्चमी भवतीति

वक्तव्यम्। न तावत् 'अन्याराद्'इति सूत्रेण। अन्यशब्दस्येतरशब्दस्य चाप्रयोगात्। न च तत्सूत्रे अन्यशब्दः अन्यार्थकपदपरः, इतरपदोपादानञ्च स्पष्टार्थमिति अन्यार्थकनञ्योगेऽपि तेन सूत्रेण पञ्चमी स्यादिति वाच्यम्। तत्रान्यशब्देनान्यार्थकपदस्य विवक्षितत्वे घटादेकः इति प्रयोगापत्तिः। एकशब्दस्यान्यार्थकत्वात्। न चैकपदस्य नान्यत्वेनान्यार्थकता। परन्तु समभिव्याहृतपदार्थान्यत्वोपलक्षितनिष्ठयत्त्वबुद्धिविषयतावच्छेदकघटत्वादिनैव। चैत्र एकमानयति मैत्रश्चापरमित्यत्र घटत्वपटत्वादिनैव आनयनकर्मत्वान्वयबोधः। न तु पटघटान्यत्वादिना, अन्यत्वान्वयिप्रतियोगिवाचकपदासमभिव्याहारात्। तथा च नैकपदसमभिव्याहारे पञ्चम्यापत्तिरिति वाच्यम्। तच्छब्दस्य बुद्धिस्थवाचकत्वेनान्यार्थकतच्छब्दयोगे घटात् सः'इति प्रयोगापत्तेर्दुर्वारत्वात्। एवञ्चान्यारादिति सूत्रे अन्यशब्दः शब्दपर एव नान्यार्थकपदपरः। इत्थमेवान्यशब्दस्य शब्दपरत्वं व्यवस्थापितं नव्यवैयाकरणैः। तस्मान्न नञ्योगे पञ्चमी अन्याराविति सूत्रेणापादयितुं शक्यते।

अन्यपदस्यार्थपरतापक्षेऽपि अन्यार्थकतदादिपदव्यावर्तकविशेषणस्यैव प्रयोगानुसारेण निपातातिरिक्तत्वस्यान्यार्थकपदे विशेषणान्न पूर्वप्रयोगातिप्रसङ्गः।

एवं घटस्य नेति प्रयोगापत्तिर्न संभवति। षष्ठ्या प्रतियोगित्वरूपसंबन्धार्थकत्वस्य क्लृप्तत्वेऽपि, प्रातिपदिकार्थविशेष्यतया संबन्धविवक्षायामेव 'षष्ठी शेषे' इति सूत्रेण षष्ठीविधानात्। न चात्र प्रतियोगित्वसंबन्धः प्रातिपदिकार्थविशेष्यतया विवक्षितः, परन्तु संसर्गतयेति नोक्तापत्तिः। न च घटविशेष्यतया प्रतियोगित्वविवक्षायां घटस्य नेति प्रयोगापत्तिरिति वाच्यम्। प्रतियोगित्वस्य नञर्थतायामपि तदेकदेशप्रतियोगित्वान्वय्याधेयत्वस्य संबन्धस्य घटप्रातिपदिकार्थविशेष्यतया विवक्षायां घटस्य न इति प्रयोगापत्तेः दुर्वारत्वात्। घटस्य विषयत्वम् इत्यादिप्रयोगेन स्वरूपसम्बन्धावच्छिन्नाधेयत्वार्थकतायाः षष्ठ्या क्लृप्तत्वात्।

यदि च घटस्य रूपमित्यादिप्रयोगेन समवायसंबन्धावच्छिन्नाधेयत्वस्य षष्ठ्यर्थतायाः क्लृप्तत्वेऽपि शाखासमवेतवृक्षतात्पर्येण 'शाखाया वृक्षः' इति न

प्रामाणिकः प्रयोगो दृश्यते पूर्वप्रयोगाभावात् । अत एवानभिधानेन बहवः प्रयोगा वार्यन्ते वैयाकरणैः । तथा च पूर्वप्रयोगाभावात् न, नञर्थैकदेशप्रतियोगित्वा-न्वय्याधेयत्वविवक्षया 'घटस्य न' इति प्रयोगापत्तिरिति मन्यते । तदा प्रति-योगित्वस्य (संबन्धस्य) नञर्थताविरहेऽपि पूर्वप्रयोगाभावेनैव घटस्य न इति प्रयोगो वारयितुं शक्यते ।

तस्मात् शब्दबोध्यस्य वृत्तिविषयत्वनियमाभावात् न तदनुरोधेनान्विते शक्तिः सिद्ध्यति ॥

न च पदश्रवणानन्तरमन्वयविशेषे जिज्ञासोदेति । विशेषजिज्ञासायाश्च सामान्यज्ञानं कारणम् । अतः सामान्यतोऽन्वयवति पदार्थे पदानां शक्तिः स्वीकरणीया । अतएव, राजपुरुषः इति वाक्यजन्यप्रत्ययानन्तरं, किं राज्ञः पुरुषः, उत राज्ञां पुरुषः इति संख्याविशेषजिज्ञासोदयात्, समासजन्यबोधे अभेदैकत्वसंख्यापि भासते इति शाब्दिका वदन्ति इति शङ्कनीयम् । पदात्पदार्थ-मात्रप्रत्ययेऽपि पदार्थत्वेनान्वयस्यानुमानसंभवेनान्वयविशेषे जिज्ञासाया उपपत्तेः नान्विते शक्तिरावश्यकी । अन्यथा आम्रादिफलविशेषदर्शनानन्तरं तत्र रस-विशेषजिज्ञासा जायते इति तत्कारणं रससामान्यविषयकं फलविषयकं चाक्षुष-ज्ञानमापद्येत । न हि फलविशेषचाक्षुषस्य रससामान्यविषयकत्वं कश्चिदभ्युपैति ।

ननु पदमन्वयतात्पर्यकतयान्वयप्रतिपादकमित्यविवादम् । तात्पर्यनिर्वा-हिका च वृत्तिः । पदतात्पर्याधीनबोधे पदवृत्तिज्ञानापेक्षाया दर्शनात् । अन्व-यांशे न गौणी वृत्तिः, नापि लक्षणा पूर्वोक्तयुक्तेः । अतस्तत्र शक्तिरेव तात्पर्य-निर्वाहिका । तथा च प्रयोगः, अन्वयः पदशक्यः, वृत्त्यन्तरं विना पदप्रति-पाद्यत्वादिति इति चेन्न ।

अवश्यकल्पनीयकारणभावेनाकांक्षाज्ञानेनैवान्वयबोधसंभवात् वृत्तिं विनापि तात्पर्यनिर्वाहेणान्वये वृत्तिर्न कल्पनीया । यदि क्वचित् तात्पर्यज्ञानाधीनबोधस्य वृत्तिज्ञाननिर्वाह्यत्वदर्शनात् सर्वत्र तथा कल्प्यते । तदा क्वचित्तात्पर्याधीनशाब्द-बोधस्य शक्तिनिर्वाह्यत्वदर्शनात् गङ्गायां घोषः इत्यत्रापि तीरतात्पर्याधीनबोध-

निर्वाहाय गङ्गापदस्य तीरे शक्ति स्यात्। यदि च शक्ति विनापि शक्यसंबन्धरूप-लक्षणया तात्पर्याधीनतीरबोधनिर्वाह इति न तीरे शक्तिरुच्यते, तदा वृत्ति विनापि आकाङ्क्षाबलेन तात्पर्यज्ञानाधीनान्वयबोधनिर्वाहात् नान्वये वृत्ति कल्प्यते। अतएव, अन्वय पदशक्य, वृत्त्यन्तर विना पदप्रतिपाद्यत्वादित्यनुमानमप्रयोजकम्॥

विनापि वृत्ति तात्पर्यज्ञानाधीनबोध बहुषु स्थलेषु दृष्ट। तथाहि, वह्नितात्पर्येण धूमोऽस्तीति वाक्य प्रयुञ्जते प्रामाणिका। तत्र धूमशाब्दबोधे जाते धूमेनानुमीयते वह्नि। न ह्यत्र धूमपदस्य वह्नौ लक्षणामभ्युपगच्छन्ति।

एव—

गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्॥

इति पद्य प्रियगमनाकर्तव्यत्वतात्पर्यकम्। अत्र तात्पर्यनिर्वाह्य गमनाकर्तव्यत्वबोध न वृत्तिज्ञाननिर्वाह्य। परन्तु, ममापि तत्र जन्म भूयादिति वाक्यजन्यबोधे वृत्ते, मरण विना पुनर्जन्माभावात् जन्मना मरणमाक्षिप्यते। तदनन्तर मरणहेतुत्वमुपस्थितस्य गमनस्य मनसा बुध्यते। तत मानसज्ञानविषयीभूतेन प्रियामरणहेतुत्वेन हेतुना गमने अकर्तव्यत्वमनुमीयते, मया गमन न कर्तव्य, प्रियामरणहेतुत्वादिति।

अवयवग्रन्थे न्यायलक्षणे न्यायस्य विशिष्टैकार्थबोधजनकत्व दूषयित्वा, "एकवाक्यताव्यवहारस्तु विशिष्टैकार्थप्रतिपत्तिपरतामात्रेण" इति ग्रन्थेन दीधितिकारा एकवाक्यताव्यवहार समर्थयन्ति। तत्र "तत्परता च तामजनयतोऽपि उत्तरोत्तरवाक्यप्रयोजिकामाकाङ्क्षामुत्पादयत प्रतिज्ञादे, इह धूम इत्यादिवचसा मानुमानिकवह्न्यादिधीपरतावन्निर्वाह्यैव तत्प्रयोजकतया।" इति श्रीगदाधरभट्टाचार्या विवृण्वन्ति। लघुचन्द्रिकाया द्वितीयमिथ्यात्वविचारे 'नेह नानास्ति किञ्चन' इति श्रुतिजन्यबोधनिरूपणावसरे "विनाशित्वदृश्यत्वावच्छेदेनाप्रातिभासिकत्व——[illegible]——निश्चयस्यानुमितिद्वारोक्तश्रुतितात्पर्य-

विषयत्वसंभवात्" इति श्रीब्रह्मानन्दसरस्वत्यो निरूपयन्ति। तथा च विनापि वृत्तिं तात्पर्यनिर्वाहस्य बहुषु स्थलेषु दृष्टत्वान्न तात्पर्यनिर्वाहायान्वये वृत्तिः कल्पयितव्या॥

ननु घटमानयेत्यत्र समवायेन घटपदादुपस्थितस्याकाशस्यान्वयबोधवारणाय तद्विषयकशाब्दबोधं प्रति वृत्तिज्ञानजन्यतदुपस्थितेः कारणत्वं वक्तव्यम्। अन्वये वृत्त्यस्वीकारे वृत्तिज्ञानजन्यतदुपस्थितेः कारणस्याभावात् तस्य शाब्दानुभवविषयता न संभवति। न च सांसर्गिकविषयताभिन्नतद्विषयताशालिशाब्दबुद्धिं प्रत्येव वृत्तिज्ञानजन्यतदुपस्थितेः कारणत्वं कल्प्यते। अन्वयविषयतायाश्च सांसर्गिकविषयतात्वान्न दोष इति वाच्यम्। कार्यतावच्छेदककोटौ सांसर्गिकविषयताभिन्नत्वनिवेशे गौरवात्। तथा चान्वयस्य शाब्दानुभवः कथमुपपद्यते इति चेन्न।

सामान्यतः तद्विषयकशाब्दबोधे वृत्तिज्ञानजन्यतदुपस्थितेः हेतुत्वस्वीकारे, यत्र पदार्थतावच्छेदकगोत्वे, पदार्थे गवि च स्वतन्त्रशक्तिज्ञानात् विशेषणविशेष्यभावानापन्नयोर्गोगोत्वयोरुपस्थितिः, तत्र गोत्वप्रकारेण गोविषयकशाब्दबोधापत्तिः। अतः तद्धर्मप्रकारेण तद्विषयकशाब्दबोधे वृत्तिज्ञानजन्यतद्धर्मावच्छिन्नतद्विषयकोपस्थितिर्हेतुरिति स्वीकरणीयम्। एवञ्च वृत्त्यनुपस्थाप्यस्यान्वयस्य बोधे न किमपि बाधकं, संसर्गांशे विशेषणस्य प्रकारताख्यविषयता न स्वीक्रियते इति तद्धर्मप्रकारकतद्विषयकबोधपदेन अन्वयविषयकस्योपादानासंभवेन वृत्तिज्ञानजन्यतद्धर्मावच्छिन्नतद्विषयकोपस्थितेरनपेक्षणात्।

न चोक्तदोषवारणाय निरुक्तविशेषकार्यकारणभावस्यावश्यकत्वेऽपि, सामान्यतः विषयतासंबन्धेन शाब्दबोधं प्रति विषयतासंबन्धेन वृत्तिज्ञानजन्योपस्थितित्वेन हेतुताया अन्वयव्यतिरेकसिद्धत्वात् अन्वयेऽपि शक्तिरावश्यकीति वाच्यम्। शक्त्योपस्थितस्येव लक्षणयोपस्थितस्यापि शाब्दबोधो जायते। शक्तिज्ञानजन्योपस्थितिरूपकारणाभावेऽपि तीरादिलक्ष्यार्थविषयकशाब्दबोधस्य, लक्षणाज्ञानजन्योपस्थित्यभावेऽपि शक्यार्थविषयकशाब्दबोधस्य चोदयेन व्यतिरेकव्यभिचार इति तद्वारणाय, तत्तद्वृत्तिज्ञानजन्योपस्थित्यव्यवहितोत्तरशाब्दबोधं प्रति तत्तद्वृत्तिज्ञानजन्योपस्थितेः हेतुत्वं वक्तव्यम्। तथाच शक्तिलक्षणारूपवृत्तिज्ञानजन्यतदु-

पस्थितत्वव्यवहितोत्तरत्वस्यान्वयविषयकबोधेऽसत्त्वेन कार्यतावच्छेदकानाक्रान्तत्वात् तत्र न वृत्तिज्ञानजन्यतदुपस्थितिरपेक्ष्यते ।

न च शक्तिलक्षणान्यतरज्ञानजन्योपस्थितित्वेनानुगतरूपेणोभयविधोपस्थिते हेतुत्व संभवतीति निरुक्तान्यवहितोत्तरत्वं न निवेशनीयमिति वाच्यम् । अन्यतरत्वस्याखण्डोपाधित्वे मानाभावात् भेदद्वयावच्छिन्नभेदरूपत्वात् शक्तिभेदविशिष्टलक्षणाभेदावच्छिन्नभेदरूपान्यतरत्वस्य कारणतावच्छेदककोटौ निवेशे, अन्यतरत्वघटकशक्तिभेदलक्षणाभेदयो मिथ विशेष्यविशेषणभावे विनिगमनाविरहेण लक्षणाभेदविशिष्टशक्तिभेदावच्छिन्नभेदरूपान्यतरत्वघटितरूपेणापि कारणतापत्त्या द्विविधगुरुधर्मावच्छिन्नकारणतापत्ति ।

न च शाब्दबोधौपयिकोपस्थितिजनकत्वेनान्यतररूपेण वृत्तित्वेन शक्तिलक्षणे अनुगमीकृत्य, तादृशधर्मप्रकारकज्ञानजन्यतदुपस्थितित्वेन कारणताङ्गीकारे न व्यभिचार इति नाव्यवहितोत्तरत्वनिवेश इति वाच्यम् । शाब्दबोधजनकत्वघटितधर्मेण शाब्दबोधजनकताङ्गीकारे आत्माश्रयात् ।

न च शक्तिविषयकज्ञानजन्यतदुपस्थितित्वेनैव शक्त्यधीनपदार्थोपस्थिते लक्षणाधीनपदार्थोपस्थितेश्चानुगम संभवति । घटशक्त घटपदमिति शक्तिज्ञानजन्योपस्थितेरिव घटसम्बन्धि पटशक्त पटपदमिति लक्षणाज्ञानजन्योपस्थितेरपि घटसम्बन्धिपटनिरूपितशक्तिविषयकनिरुक्तलक्षणाज्ञानजन्यत्वात् । इत्थञ्च न परस्परव्यभिचार इति नाव्यवहितोत्तरत्वनिवेश इति वाच्यम् । घटपाश्रयवाचकात् द्रव्यपदादश्वात्स्य घटत्वप्रकारकशाब्दबोधवारणाय तद्धर्मप्रकारकशाब्दबोधे तद्धर्मविशिष्टनिरूपितत्वेन शक्त्यवगाहिज्ञानस्योपयोगितया तद्धर्मविशिष्टनिरूपितत्वेन शक्त्यवगाहिज्ञानजन्योपस्थितित्वस्य कारणतावच्छेदकत्वात् । घटसंबन्धि पटशक्त पटपदमिति लक्षणाज्ञानस्य सबन्धिनिरूपितत्वेन शक्त्यवगाहित्वेऽपि घटत्वविशिष्टनिरूपितत्वेन शक्त्यनवगाहित्वात् तादृशशक्तिज्ञानजन्योपस्थितित्वस्य लक्षणाधीनोपस्थितिसाधारण्याभावात् ।

एव पदे अर्थवाचकत्वावगाहि, अर्थे पदवाच्यत्वावगाहि चेति द्विविधमपि शक्तिज्ञान विनिगमनाविरहात् शाब्दबोधप्रयोजकम् । शक्तिप्रतियोगित्वशक्त्या-

घटपदत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयीभूत शाब्दबोधलक्षणं ज्ञानं अन्वय-मनवगाह्य न जायते इति घटशक्तिज्ञानादेवान्वयस्य भानं संभवति । तस्मादन्वयांशे कुब्जशक्तिरस्ति । ज्ञातशक्तिकपदजन्यज्ञानविषयत्वाभावादन्वयो न वाच्यः ॥

अथवा, ज्ञानस्वप्रकाशत्ववादिनां प्राभाकरमीमांसकानां मते घटादि-पदाधीनमपि ज्ञानं मितिमातृघटादिविषयकं जायते । घटविषयकानुभवजनके घटपदे मितिमातृविषयकानुभवजनकत्वमप्यस्ति । तथापि सर्वत्र ज्ञाने स्व-स्वाश्रय-विषयकत्वनैयत्यात् मितिमातृविषयतयोः न घटपदजन्यतावच्छेदकता । परन्तु घटादिविषयताया एव । तद्विषयकत्वावच्छिन्नजन्यतानिरूपितजनकत्वमेव घटादि-पदे शक्तिः । ततश्च घटपदस्य न मितिमातृवाचकत्वमितीष्यते ।

तथैवास्माभिरपि, तद्विषयकत्वावच्छिन्नबोधनिष्ठजन्यतानिरूपितजनकता-प्रकारकेश्वरेच्छाविषयत्वमेव तद्वाचकत्वं, तत्पदजन्यतावच्छेदकविषयत्वप्रकारतानिरू-पितभगवदिच्छाविशेष्यत्वमेव तत्पदवाच्यत्वमिति स्वीक्रियते । यद्यपि अन्वयविषयक पदार्थबोधं जनयति पदं, तथापि अन्वयविषयकत्वं न पदजन्यतावच्छेदकं गौरवात्, तस्य चाकाङ्क्षाज्ञानकार्यतायामेवावच्छेदकत्वात् । तदुक्तं मणौ— "घटज्ञानत्वं शक्यतावच्छेदकं, नत्वन्वितघटज्ञानत्वं गौरवादन्यलभ्यत्वाच्च" इति । अत्र शक्यतावच्छेदकपदेन कार्यतावच्छेदकं विवक्षितम् । इत्थञ्चान्वयविषयतायां घटादिपदजन्यतावच्छेदकत्वस्य बाधात् सन्मात्रग्राहिणी भगवदिच्छा न बाधित घटपदजन्यतावच्छेदकत्वमवगाहते इति घटपदजन्यतावच्छेदकविषयत्वप्रकारता-निरूपितभगवदिच्छाविशेष्यताया अन्वये विरहान्नान्वयस्य घटादिपदवाच्यत्वापत्तिः ॥

वस्तुतस्तु, तीरं बोधविषयो भवतु, बोधः गङ्गापदजन्यो भवतु इत्याकार-कत्वेऽपि भगवदिच्छायाः सन्मात्रविषयकत्वोपपत्तेः गङ्गापदजन्यबोधविषयतात्वाव-च्छिन्नप्रकारतानिरूपितभगवदिच्छाविशेष्यतायाः तीरेऽसत्त्वात्तथा तीरस्य गङ्गापद-वाच्यत्वाभावः, तथा, अन्वयः बोधविषयो भवतु, बोधः घटादिपदजन्यो भवतु इत्याकारिकाया एवेश्वरेच्छायाः स्वीकारेण तावतैव तस्याः सन्मात्रग्राहित्वोपपत्तेः घटादिपदजन्यबोधविषयतात्वेन तादृशबोधविषयतायाः अन्वयांशे भगवदिच्छया-नवगाहनात् घटादिपदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितभगवदिच्छा-विशेष्यतायाः अन्वये विरहान्न तस्य घटादिपदवाच्यतेति बोध्यम् ॥

तदयं निर्गलितोऽर्थः—वाक्यार्थावगमतात्पर्येण प्रयुक्तानि पदानि स्वार्थ-स्मरणद्वारा अन्वयबोधं जनयन्ति। ये तु वादिनः पदानि पदार्थप्रतिपादनावसित-व्यापाराणि इति वदन्ति, तैरपि "पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम्" इति वदद्भिः भङ्ग्यन्तरेण पदानां वाक्यार्थानुभवकारणता स्वीकृतैव। पदार्थप्रति-पादनस्य व्यापारत्वमभ्युपगम्यान्वयस्य शाब्दत्वं निर्व्यूढं तैः। पदार्थज्ञानस्यावान्तर-व्यापारत्वोक्तिरेव वाक्यार्थावगमं शब्दजन्यमङ्गीकारयति।

अन्विताभिधानवादिनस्तु अन्वितार्थबोधशक्तिं स्वीकुर्वाणाः कण्ठरवेणैव पदानां शाब्दान्वयानुभवकारणतामभ्युपगच्छन्ति। अभिहितान्वयवादिनः पदेन स्वार्थजातिविषयकनिर्विकल्पकं ज्ञानं स्मृत्यनुभवविलक्षणमभिधाननामकं जायते इति मन्यन्ते। तत्र विलक्षणनिर्विकल्पकशाब्दज्ञानकल्पनं न समञ्जसमिति पदेन स्वार्थस्मरणं जायते इति तदीयपक्षान्तरमेवास्मभ्यं रोचते। न केवलं पदानां शाब्दान्वयानुभवकारणतास्वीकारेणान्विताभिधानवादिनोऽस्माकं संनिहिताः। अपि तु पदजन्यपदार्थस्मरणाङ्गीकारेणापि। यद्यप्यन्विते शक्तिवादिनां तेषां मते अन्वयेऽपि पदशक्तिरस्ति, तथापि सा आनुभाविकी शक्तिः न स्मारकशक्तिः। पदैः इतरान्वितार्थविषयकशाब्दानुभवो जायते। पदानि स्वार्थजातिस्मारकाणि। शुद्धाया जातेः व्यक्तिं विना भानासंभवात् पदजन्यं जातिस्मरणं व्यक्तिविषयकमपि भवति। तदधीनः शाब्दबोधोऽपि व्यक्तिविषयकः। परन्तु व्यक्तिविषयता पदशक्ति-प्रयोज्या न वेत्यन्यदेतत्। अभिहितान्वयवादिभिस्तु प्रथमं पदात् जातिविषयक-निर्विकल्पकशाब्दबोधः, ततो वाक्यार्थबोधः, तदनन्तरमेवाक्षेपात् व्यक्तिविषयक-बोधः स्वीक्रियते। वयं तु जातिविशिष्टशक्तिवादिनः पदेन जातिविशिष्टव्यक्ति-स्मरणमङ्गीकुर्मः।

संसर्गेऽपि प्रमेये प्रमाणसंबन्धस्य प्रत्यक्षादिस्थले दृष्टत्वात् सर्वत्र प्रमेयस्य प्रमाणसंबन्धावश्यकतां मन्यमानाः अभिहितान्वयवादिनः, पदबोध्यः शक्यार्थः, पदार्थबोध्यो लक्ष्यार्थ इति व्यवस्थामनुरुन्धानाः अन्वयं पदाभिहितपदार्थबोध्यं लक्ष्यं स्वीकुर्वन्ति। शब्दवृत्तिज्ञानविषयस्यैव शाब्दानुभवविषयत्वमिति नियममुररी-कुर्वाणा अन्विताभिधानवादिनः अन्वितशक्तेरन्वयपर्यन्ततामभ्युपगच्छन्ति।

उभयेषामपि मते अन्वयस्य वाक्यार्थस्यापूर्वत्वात् शाब्दबोधात्पूर्वमुपस्थितिर्नास्ति। पदार्थस्मरणानन्तरमेवान्वयबुद्धिर्जायते। तत्र चाकांक्षादिकं सर्वैरुपजीव्यते। अतः विनैव वृत्तिं शक्तिं लक्षणां वा अन्वयस्य संसर्गस्याकांक्षया भानं वयं वदामः।

अनधिगतार्थविषयकत्वं ज्ञानस्य प्रमात्वं, अनधिगतार्थबोधकत्वं प्रमाणत्वमिति स्वीकुर्वाणा मीमांसकाः, अनधिगतार्थविषयतायां प्रमाणप्रयोज्यत्वस्य प्रमाणजन्यतावच्छेदकत्वस्यावश्यकतां मन्यमानाः संसर्गविषयतायाः पदजन्यतावच्छेदकत्वमभ्युपगच्छन्ति। तद्वति तत्प्रकारकत्वरूपप्रमात्ववादिनः लाघवपक्षपातिनो वयं तु संसर्गविषयतायाः पदजन्यतावच्छेदकत्वं नाङ्गीकुर्मः।

अयञ्चापरो विशेषः, यत्, कार्यान्वितशक्तिवादिनो मीमांसकाः कार्यतास्मारकशक्तिमल्लिङादिसमभिव्याहाराभावे अन्वयबोधमपलपन्ति, असंसर्गाग्रहमन्वयबोधस्थाने स्थापयन्ति। अत एवान्तरवाक्यार्थबोधस्य शाब्दत्वं नाभ्युपगच्छन्ति कार्यताविषयकत्वाभावात्। अपितु खलेकपोतन्यायेन वाक्यार्थबोधं वदन्ति। वयं तु न कुत्रापि शाब्दबोधमपलपामः इति।

अभिहितान्वयवादे द्वितीयतृतीयपक्षयोः खण्डवाक्यार्थबोधस्य विशेषणतावच्छेदकप्रकारकज्ञानस्य संपन्नत्वात् महावाक्यार्थबोधः विशिष्टवैशिष्ट्यावगाही जायते। परन्तु तन्मते खण्डवाक्यार्थबोधे एव पदानां हेतुता। महावाक्यार्थबोधे तु अवान्तरवाक्यार्थबोध एव हेतुः। अस्माकं तु अवान्तरवाक्यार्थबोधद्वारा महावाक्यार्थबोधेऽपि पदानां कारणतास्ति। अन्वयबोधस्य पदजन्यत्वाविशेषेऽपि अन्वयविषयतायाः पदजन्यतावच्छेदकत्वतदभावाभ्यां मतयोरनयोर्भेदोऽवसेयः।

तस्मात् पदानि स्वार्थस्मरणद्वारा आकांक्षादिसहकारेण अन्वयबोधं जनयन्ति, अन्वयश्च न पदलक्ष्यः, न वा पदशक्यः, अपितु आकांक्षालभ्यः इति सिद्धम्॥

इति पण्डितराजेन सुब्रह्मण्यशास्त्रिणा विरचितायां
शाब्दतरङ्गिण्यां प्रथमस्तरङ्गः।

## अथ द्वितीयस्तरङ्गः

अथ वृत्तिर्निरूप्यते ।

शाब्दबोधजनकपदार्थस्मरणानुकूलपदतदर्थसंबन्धो वृत्तिः। व्यापारपदेनापि इमां व्यपदिशन्ति प्रबन्धारः। मुख्या जघन्या चेति द्विविधा वृत्तिः। तत्र मुख्या वृत्तिः अभिधा शक्तिरिति चाख्यायते।

**वाक्यविदः** 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः' (पू. सू. 1-1-5) इति पारमर्षं सूत्रं प्रमाणयन्तः, स्वाभाविकः संज्ञासंज्ञिलक्षणः वाच्यवाचकभावा-

---

**टिप्पणी—**

**आचार्यवाचस्पतिमिश्राः तत्त्वविन्दौ** 'तस्मात् स्वगोचरं विज्ञानमेव शब्दानां व्यापारः स्वार्थबोधे। यथा आह भगवान् भाष्यकारः—"शास्त्रं शब्दविज्ञानादसंनिकृष्टेऽर्थे विज्ञानम्" इति। स एव स्वाभाविकशक्ति-शालिनः शब्दस्य स्वशक्त्या अर्थधीहेतुतया अभिधेति गीयते' इति ग्रन्थेन शब्दगोचरं ज्ञानं अभिधेति व्यवहरन्ति।

"शब्दविषयविज्ञानस्यैव पदार्थस्मरणजननशक्त्युपहितस्य अभिधा-व्यापारत्वेन स्वीकारात्। अन्यस्य परिस्पन्दयत्नलक्षणस्य व्यापारस्य विभौ, विभुगुणे वा शब्दे चैतन्यानधिकरणे दुर्निरूपत्वात्।" इति **तत्त्वप्रदीपिकायां चित्सुखाचार्याः**।

"साक्षात्संकेतितार्थप्रतीत्यनुकूलः शब्दव्यापारोऽभिधा। स च पदज्ञानं तद्गोचरः संस्कारो वा।" इति काव्यप्रदीपव्याख्यायां **वैद्यनाथभट्टाः**।

"शक्त्याख्यः शब्दस्यार्थगतः संबन्धविशेषः अभिधा" इति **रसगङ्गाधरः**।

एवं अभिधालक्षणाव्यञ्जनादीनां सर्वेषामपि सामर्थ्यपरशक्तिशब्देन व्यवहारः **अभिनवगुप्ताचार्याणां** दृश्यते।

तद्यथा—"समयापेक्षया वाच्यावगमनशक्तिः अभिधाशक्तिः। तदन्यथानुपपत्तिसहायार्थावबोधनशक्तिः तात्पर्यशक्तिः। मुख्यार्थबाधादि-सहकार्यपेक्षार्थप्रतिभासनशक्तिः लक्षणाशक्तिः। तच्छक्तित्रयोपजनिता-र्थावगममूलजाततत्प्रति भासपवित्रितप्रतिपत्तृप्रतिभासहायार्थद्योतनशक्तिः ध्वननव्यापारः" इति।

अत्र चतस्रोऽपि शक्तयः व्यापारपदेनापि व्यवहृताः।

अन्वयस्याकांक्षाभास्यत्वमेव, न लक्ष्यत्वं न वा शक्यत्वमिति प्रथम-तरङ्गे निरूपितत्वात् अन्वयबोधौपयिकी तात्पर्यशक्तिः नाङ्गीक्रियते प्रामाणिकैः। द्योतनशक्तिश्चाग्रे विवेचयिष्यते इति बोध्यम्।

पराभिधान अर्थप्रतीतिजननसामर्थ्यपर्यवसित संबन्ध अभिधेति प्रतिपन्ना. । घट्पदार्थातिरिक्तसामर्थ्यलक्षणा शक्तिमभ्युपगच्छन्तस्ते शब्देऽपि अतिरिक्त तादृशसामर्थ्यपर्यवसित संबन्ध स्वीकुर्वन्ति ।

अन्विताभिधानवादिन तदन्वयानुभावकत्वमेव स्मरणप्रयोजकसंबन्ध वदन्ति।

समयमेव शब्दार्थयो सबन्ध मन्यन्ते प्रामाणिका ।

* नव्यवैयाकरणास्तु समयस्य सबन्धत्व निराकुर्वाणा, वाच्यवाचकभावा-ख्यातिरिक्तसबन्ध स्वीकुर्वन्त स्वय सकेतपदेन सकेतितस्य शब्दार्थतादात्म्यस्य तद्ग्राहकता प्रतिपादयन्ति। प्राचीनवैयाकरणाः, समयस्य सबन्धत्व निराकृत्य, अनादिभूतस्यार्थबोधकत्वस्य अभिधारूपत्व स्वीकुर्वन्ति ।

वैयाकरणानां पक्षद्वयमपि वाक्यविदा राद्धान्तमेवानुसरति । परन्तु, अनुभावकत्व शक्तिरिति वादिन प्राभाकरा. गङ्गापदस्य तीरानुभावकत्वे तीरवाचकत्वापत्तिमनिवार्यां मन्यमाना, लाक्षणिकस्यानुभावकत्वमेव नाभ्युपगच्छन्ति। लक्षणाख्यामतिरिक्तां वृत्तिमनङ्गीकुर्वाणा वैयाकरणा लाक्षणिकगङ्गापदस्यापि तीरानुभावकतां स्वीकुर्वन्ति। शक्यतया प्रसिद्धेतरार्थबोध निमित्तीकृत्य गङ्गादिपदे लाक्षणिकत्वव्यवहार च निर्वहन्ति ।

तस्मात् नव्यवैयाकरणानां प्राचीनवैयाकरणानां नैयायिकाना च मतभेदेन अभिधास्वरूप विविच्यते ॥

## नव्यवैयाकरणाः

पदपदार्थयो वाच्यवाचकभावाख्य क्लृप्तपदार्थातिरिक्त सबन्ध शक्तिरिति, अभिधेति चोच्यते । न चातिरिक्तसंबन्धस्य कल्पनामपेक्ष्य क्लृप्तस्य इद पदमेत-दर्थबोधक भवत्विति ईश्वरसकेतस्यैव पदपदार्थसबन्धात्मकशक्तित्वमुचितमिति वाच्यम् । इच्छारूपसकेतस्य पदपदार्थसबन्धत्वासभवात् ।

तथाहि—सबन्धो नाम संबन्धिभ्या भिन्न द्विनिष्ठ विशिष्टबुद्धिनियामकश्च भवति । यथा घटभूतलयो सबन्ध सयोग । स च सबन्धिभ्या घट-

भूतलाभ्यां भिन्नः, समवायेन घटभूतलोभयनिष्ठः, घटवद्भूतलमितिविशिष्टबुद्धि-नियामकश्च । बोधकत्वेन ईश्वरेच्छा न पदार्थोभयवृत्तिः। इच्छाविषयबोधविषयतायाः घटादिरूपेऽर्थे सत्त्वेऽपि तस्या इच्छाश्रयतानियामकत्वाभावात् । एव घटादिविषयो निरुक्तेच्छावानिति प्रामाणिकव्यवहारमूलबुद्धिरपि नास्ति । अतः संकेतस्य संबन्धत्वमेव न संभवति ।

अपि च, बोधकत्वान्यथानुपपत्त्या कल्प्यमानः संबन्धः न बोधकताघटितो युज्यते। प्रयोजकवृद्धो घटमानयेति ब्रूते। तच्छ्रुत्वा प्रयोज्यवृद्धो घटमानयति। तच्च पश्यन् व्युत्पित्सुर्बालः—घटानयनकर्तुः प्रयोज्यवृद्धस्य प्रवर्तकं कार्यताज्ञानं वर्तते, तच्च शब्देनैव जातम्, तदन्यस्य कारणस्यानुपलब्धेः, अर्थेनासंबद्धस्य च शब्दस्य तद्बोधकारणत्वमनुपपन्नमिति—बोधकत्वान्यथानुपपत्त्या शब्दार्थयोः संबन्धं कल्पयति । बोधजनकत्वस्य अनुपपद्यमानत्वेन ज्ञानदशायां तद्घटितसंबन्धज्ञानं न संभवतीति व्यवहारेणावगम्यमानः संबन्धः न बोधकत्वघटितनिरुक्तसंकेतात्मको युज्यते ।

किञ्च, बोधकत्वप्रकारकेश्वरेच्छा शक्तिः, उत बोधकत्वप्रकारकेश्वरज्ञानं शक्तिरित्यत्र विनिगमनाविरहः । तथा च 'विनिगमनाविरहेण सिद्धं चेदुभयमपि सिद्धमेव' इति न्यायेन ईश्वरेच्छाज्ञानयोरुभयोरपि शक्तित्वमङ्गीकरणीयमिति गौरवम् ।

अपि च, अर्थबोधजनकत्वेन इच्छाविषयत्वं यदि पदस्य स्वीक्रियते, तदा दण्डस्यापि घटजनकत्वं घटजनकत्वप्रकारकेश्वरेच्छाविषयत्वरूपं स्यादिति बहूपप्लवः।

किञ्च, चक्षुरादिप्रमाणानि बोधजनकत्वघटितसंबन्धभिन्नेन संयोगादिना घटादिप्रमेयसंबद्धानि घटादिकं बोधयन्ति । एवं शब्दोऽपि प्रमाणम् । अतश्च शब्दः बोधजनकत्वघटितसंबन्धभिन्नसंबन्धेन प्रमेयसंबद्धः प्रमेयं बोधयति प्रमाणत्वादिति कल्प्यते । अन्यथा वह्निधूमयोः व्याप्तिरूपः संबन्धो मास्तु, धूमाद्वह्निज्ञानं जायतामितीश्वरेच्छाविषयत्वमेव संबन्धोऽस्तु इति व्याप्तिरप्युच्छिद्येत ।

तस्मात् क्लृप्तायाः बोधकत्वेनेश्वरेच्छायाः पदतदर्थसंबन्धत्वासंभवात् वाच्यवाचकभावाख्यसंबन्धान्तरमेव कल्प्यते । सैव शक्तिः । तादृशशक्तिग्राहकं

शब्दार्थयोस्तादात्म्यम् । स एव संकेतः । शक्त्युपकारकत्वात् तादात्म्यमपि शक्तिरिति व्यवह्रियते । न च शब्दार्थयोस्तादात्म्ये, अन्नमित्युक्ते पूरणापत्तिः, पूरण-हेतोरर्थस्य अन्नस्य शब्दाभिन्नत्वेन तत्र सत्त्वादिति वाच्यम् । शब्दार्थयोरत्यन्ता-भेदानङ्गीकारात् भेदसमानाधिकरणाभेदरूपतादात्म्यस्यैव स्वीकारात् उक्तापत्ते-रसंभवात् ।

ननु शब्दार्थयोस्तादात्म्ये किं मानमिति चेत्—उच्यते ।

अयं घटः इत्यादिप्रत्यये घटादिरूपोऽर्थः तत्तद्वाचकशब्दानुविद्ध एव भासते । अत एव पुरोवर्तिपदार्थदर्शी तद्वाचकशब्दमजानानः किमिदमिति न जानामि इति ब्रूते । वाचकशब्दोपदेशानन्तरं ज्ञातमिति वदति । प्रत्ययेषु अर्थमात्रस्य भाने न जानामीति कथं ब्रूयात् । अर्थस्य ज्ञातत्वात् । अतः शब्दानुविद्धोऽर्थो भासते ।

अपि च, कोकिलरूपार्थस्य पिकपदे एव शक्तिं जानतः कोकिलपदे तामजानतः पुंसः कोकिलदर्शने सति अयं कोकिल. इत्यनुव्यवसायापत्तिः । ज्ञाने अर्थमात्रस्य भानात् अर्थस्य च तेन ज्ञातत्वात् । अतः वाचकपदमपि तत्र भासते इति स्वीकरणीयम् । कोकिलपदस्य वाचकस्य तेनाज्ञानात् न तस्य तथा-ऽनुव्यवसायापत्ति. ।

किञ्च, अयं घटः इति प्रत्यक्षे घटस्य विशेष्यता घटत्वस्य प्रकारता इति विषयतामाननियमनिर्वाहार्थमपि पदभानमावश्यकम् । पदभाने सति, 'यद् ज्ञानं यत्पदविषयकं तत् तज्जन्यबोधीयविषयतासमानविषयताकम्' इति नियमाद् घटविशेष्यकत्वादिनियमो निर्वहति ।

घटादिपदानामपि घटत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्ने शक्तिः । अतः घटपदजन्यबोधे विशेष्यत्वादिकं भासते । तस्मात् घटपदविषयकप्रत्यक्षेऽपि तत्समानविषयतादिकं भासते । व्यवसाये विषयता भासते इत्यकामेनापि अङ्गी-कार्यम् । कथमन्यथा घटमहं जानामीत्यनुव्यवसाये विषयत्वं भासेत । व्यवसाय-विषयस्यैवानुव्यवसाये भानात् । व्यवसायाविषयस्यापि व्यवसायविषये विद्यमानस्य अनुव्यवसाये भानोपगमे, अयं गुड. इति व्यवसायानन्तरभावी अनुव्यवसायः

विषयतायाश्च भानं न विष-
व्यवसायविषयगुडे विद्यमानं माधुर्यमवगाहेत।
यत्वान्तरम्, अपि तु स्वमेवेति नानवस्था। तस्मात् प्रत्यक्षादावपि विषयताभान-
नियमनिर्वाहाय पदभानमावश्यकम्।

न्यायसूत्रकर्तुः **गोतमस्यापि** शाब्दबोधे पदभानं संमतम्। 'इन्द्रि-
यार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्'
(न्या. सू. 1-1-4) इति प्रत्यक्षलक्षणसूत्रम्। तत्र **अव्यपदेश्यम्** इत्यस्य वाचक-
शब्दाविषयकमित्यर्थः। एवञ्च प्रत्यक्षं शब्दाविषयकं वदन् शाब्दबोधं वाचक-
शब्दविषयं मन्यते सूत्रकारः।

तस्मिन्नेव सूत्रे 'शब्दविषयकत्वेन प्रत्यक्षस्य शाब्दत्वापत्तिः' इति वदतो
**न्यायभाष्यकारस्यापि** अभिमतोऽयमर्थः। व्यवस्थिते हि शाब्दे पदभाने शब्द-
विषयकत्वात् प्रत्यक्षस्य शाब्दत्वमापादयितुं शक्यते। 'शब्दविषयकत्वमेव
शाब्दत्वं न तु शब्दजन्यत्वम्' इति तत्रैव **वाचस्पतिमिश्रैरुक्तम्**। तथा च
नैयायिकैः शाब्दे पदभानाङ्गीकारात् अन्यत्र प्रत्यक्षादौ तेषां तदभानाग्रहो
मुधैव॥

तस्मात् अयं घटः इत्यादिप्रत्यये तत्तद्वाचकशब्दानुविद्ध एवार्थो भासते
इति सिद्धम्॥

किञ्च, यत् यत्सामानाधिकरण्येन प्रतीयते तत् तदात्मकम्। यत्
यदात्मकं न भवति तत् न तत्सामानाधिकरण्येन प्रतीयते। यथा गौः नाश्वात्मकः,
गौरश्वः इत्यश्वसामानाधिकरण्येन न प्रतीयते। अर्थस्तु वाचकशब्दसामानाधि-
करण्येन प्रतीयते इति शब्दात्मकः। न च गवि अश्वसामानाधिकरण्येन प्रतीत्य-
भावः तयोरुपायोपेयभावाभावात्, न तु तादात्म्याभावात्, शब्दार्थयोस्तु उपा-
योपेयभावसत्त्वात् सामानाधिकरण्येन प्रतीतिरिति वाच्यम्। उपायोपेयभावसत्त्वेऽपि
रूपचक्षुषोः वह्निधूमयोश्च सामानाधिकरण्येन प्रतीतेरदर्शनात् उपायोपेयभावस्य
सामानाधिकरण्येन बुद्धिनियामकत्वाभावात्। किञ्च, उपायोपेयभावस्य सामानाधि-
करण्येन बुद्धिप्रयोजकत्वे शाब्दे एव प्रत्यये तयोः सामानाधिकरण्यं भासेत,

नात्वनुमित्यादौ। तत्रार्थस्य शब्दोपेयत्वाभावात्। साधित च सर्वत्र ज्ञाने पदभानम्। तस्मात् अत्यन्तभिन्नयो घटपटयो घट पट इति सामानाधिकरण्येनाप्रतीते, अत्यन्ताभेदेऽपि घटे घट इति सामानाधिकरण्येन बुद्धेरदर्शनात्, नीले घट इति सामानाधिकरण्येन प्रतीते नीलघटयोरिव शब्दार्थयोरपि सामानाधिकरण्येन प्रतीते भेदसमानाधिकरणाभेदरूप तादात्म्य सिद्धयति ॥

अपि च, अतदुपायक अतद्विषयकश्च न तत्पुरःसरो दृष्ट । सर्वोऽपि सविकल्पप्रत्यय शब्दपुरःसर । अतश्च सविकल्पकप्रत्यय शब्दविषयक शब्दोपायको वा वाच्य । आद्ये अर्थज्ञानस्य शब्दज्ञानात्मकत्वे सिद्ध शब्दार्थयोस्तादात्म्यम्। द्वितीये किं शब्द अज्ञात सन्नुपाय, उत ज्ञात । नाद्य निर्विकल्पकस्यैवासिद्धिप्रसङ्गात् । विशिष्टबुद्धौ विशेषणज्ञानस्य उपायत्वे एव निर्विकल्पक सिद्धयति । अज्ञातस्याप्युपायत्वे अज्ञातस्यापि घटत्वस्य अय घट इति विशिष्टबुद्धिजनकत्वसंभवात्, घटत्वज्ञानानपेक्षणेन निर्विकल्पकाङ्गीकारस्य व्यर्थत्वात् । द्वितीयपक्षे च सिद्ध न समीहितम् ।

असन्निहितस्य न ज्ञान सभवति । शब्दश्च न सन्निहित । अत अर्थतादात्म्यादर्थसन्निधानमेव शब्दसन्निधानमिति सन्निहितस्य शब्दस्य ज्ञान भवेद् । तथा च सिद्ध शब्दार्थयोस्तादात्म्यम् ।

एव क शब्द इति प्रश्नेऽपि घट इत्यय शब्द इत्युत्तरयन्ति । कोऽर्थ इति प्रश्नेऽपि घट इत्ययमर्थ इत्युत्तरयति । तथा च शब्दार्थप्रश्नयो एकाकारोत्तरदर्शनात् तन्मूलतादात्म्यप्रतीति तथा च शब्दार्थयो तादात्म्य सिद्धयति ।

अपि च, पद श्रुतम्, अर्थं शृणु इति व्यवहरति । अत्र च अर्थपद न शब्दपरम्। पद श्रुतमिति पृथगभिधानात्। अपि तु अर्थपरमेव । अर्थस्य च श्रावणप्रत्यक्षकर्मत्व न संभवति । अपि तु शब्दस्यैव । तस्मात् शब्दार्थयो तादात्म्यमभिसन्धायैव 'अर्थं शृणु' इति व्यवहरति इति निरुक्तप्रयोगमूलप्रतीत्यापि शब्दार्थयोस्तादात्म्य सिद्धयति ।

किञ्च, वाच्य आदैच (अर्थ) वाचक वृद्धिशब्द च सामानाधिकरण्येन 'वृद्धिरादैच्' (पा सू 1-1-1) इति प्रयुञ्जान पाणिनिरपि वाच्यवाचकयो-

स्तादात्म्यमभिप्रैति । प्रणववाच्यं ब्रह्म, वाचकं प्रणवं च सामानाधिकरण्येन निर्दिशन्ती 'ओमित्येकाक्षरं ब्रह्म' इति श्रुतिरपि वाच्यवाचकयोस्तादात्म्यं द्रढयति ।

एवं पिनाकिनो मानभञ्जकः रामः (अर्थः) न तु तद्वाचकः शब्दः । रामेति नाम्नि मानभञ्जकत्वं प्रतिपादयन्नयं 'रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः' इति प्रयोगः शब्दार्थयोरभेदाध्यासमूलक इति तेन तादात्म्यं सिद्ध्यति ।

अत एव 'हिरण्यपूर्वं कशिपुं प्रचक्षते' इति प्रयोगोऽपि संगच्छते । अत्र पुरुषविशेषं हिरण्यपूर्वं कशिपुं प्रचक्षते इत्युक्तम् । हिरण्यपूर्वत्वं कशिपुपदस्यैव । तथा च अर्थस्य हिरण्यपूर्वकशिपुशब्दस्य च सामानाधिकरण्येन प्रयोगः तयोस्तादात्म्यं द्रढयति ॥

वस्तुतस्तु बौद्धयोरेव शब्दार्थयोर्वाच्यवाचकभावः । तादृशयोरेव शब्दार्थयोस्तादात्म्यम् । नातः अन्नमित्युक्ते पूरणापत्तिः बाह्यस्यैवान्नस्य पूरकत्वादिति बोध्यम् ॥

आवश्यकश्च बौद्धार्थस्य वाच्यतास्वीकारः । कथमन्यथा घटोऽस्ति, घटो नास्ति इति प्रयोग उपपद्यते । यदि घटशब्दस्य बाह्यसत्ताविशिष्टो घटो वाच्यः तदा घटशब्देनैव घटे बाह्यसत्ताया बोधनात् उक्तार्थानामप्रयोगः इति न्यायेन अस्तीति प्रयोगो न स्यात् । एवं घटशब्देन घटे बाह्यसत्ताया बोधितत्वात् तद्विरुद्धः बाह्यसत्ताभावः तत्रानुपपन्न इति तत्र सत्ताभावबोधकः नास्ति इति प्रयोगोऽप्यनुपपन्नः स्यात् । यदि बुद्धिसत्ताविशिष्टघटो वाच्यः, तदा घटशब्देनाबोधितबाह्यसत्ताया बोधनाय अस्तिपदप्रयोग उपपद्यते । घटशब्दबोध्यबौद्धघटे अबाधितं बाह्यसत्ताभावं बोधयितुं नास्तीति प्रयोगोऽप्युपपद्यते । तस्माद्बौद्धार्थ एव वाच्यः ।

अपि च, बौद्धार्थानङ्गीकारे शशशृङ्गं नास्तीति वाक्यात् शब्दबोधो न स्यात् बाह्यस्य शशशृङ्गस्यासत्त्वात् । एवं अङ्कुरो जायते इति वाक्यादपि बोधो न स्यात् । योऽङ्कुरः उत्पत्त्याश्रयः स एव तत्र शाब्दबोधे भासते इति वक्तव्यम् ।

तच्च न संभवति। ज्ञानसामान्ये विषयस्य कारणत्वेन विद्यमानस्यैव शाब्दबोधात् शाब्दकाले बाह्यस्योत्पत्त्याश्रयस्याङ्कुरस्याभावात्। बौद्धार्थाङ्गीकारे तु शशशृङ्ग-पदबोध्ये बौद्धे शशशृङ्गे बाह्यसत्ताभाव. शशशृङ्गं नास्तीति वाक्येन बोध्यते। एवं तत्काले बुद्धिसिद्धाङ्कुरे उत्पत्तिः अङ्कुरो जायते इति वाक्येन बोध्यते इति न कोऽपि दोष.।

किञ्च, ज्ञानसामान्ये विषय कारणम्। समानाधिकरणयोरेव कार्य-कारणभावात् बाह्यघटादि. स्वानधिकरणमनोगतज्ञानस्य न कारणं भवितुमर्हति। बौद्धार्थस्वीकारे तु बौद्धो विषय. घटादि मनोनिष्ठ स्वाधिकरणे मनसि ज्ञानं जन-येदिति कार्यकारणभाव उपपद्यते।

न च विषयतासंबन्धेन ज्ञानं प्रति तादात्म्येन विषयस्य विषयनिष्ठ-प्रत्यासत्त्या कारणत्वसंभवान्न बौद्धार्थ. स्वीकरणीय इति वाच्यम्। तादात्म्यसम्बन्धस्य वृत्त्यनियामकत्वेन, तेन संबन्धेन विषयस्य कारणस्य कार्यभूतज्ञानाधिकरण-स्ववृत्तित्वासंभवेन, विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावासंभवात्। एवं अतीत-घटविषयकस्मरणज्ञाने अतीतघटस्य निरुक्तरीत्या कारणत्व न वक्तुं शक्यते। विषयस्य अतीतघटस्य बाह्यस्य स्मरणकाले असत्त्वेन तत्र स्मरणस्य विषयता-सम्बन्धेन असत्त्वात्। विद्यमानयोरेव घटभूतलादो. संयोगादिसंबन्धदर्शनेन अविद्यमाने अतीतघटे विद्यमानस्मरणस्य संबन्धासंभवात्। बौद्धार्थस्वीकारे तु बाह्यस्य घटस्यातीतत्वेऽपि बौद्धस्य विद्यमानत्वात् स्मरणसम्बन्धः, मनोनिष्ठप्रत्यासत्त्या ज्ञानविषययो कार्यकारणभावश्चोपपद्यते।

एवं नलरावणादिपदात् शाब्दबोधनिर्वाहायापि बौद्धार्थस्वीकरणमावश्य-कम्। घटत्वादिव्यञ्जकघटादिमत्स्थानानामिव नलत्वादिव्यञ्जकनलादिसंस्थानाना-मस्माकमप्रत्यक्षत्वात् घटादिपदानां घटत्वादिजातिविशिष्टे इव नलादिपदानां नलत्वादिजातिविशिष्टे शक्तिग्रहो न संभवति। फलबलात् कनादीन् नलादि-विषयकसंस्कारान् कल्पयित्वा, तादृशसंस्कारेणोपस्थिते शक्तिग्रहात् नलादिपदात् विशिष्य नलत्वादिप्रकारको बोध. इत्यपि न शक्यते वक्तुम्। अप्रसिद्धार्थक-

नलादिपदश्रवणे कः एतदर्थः इति प्रश्नस्य उपमानादिना तत्प्रतिवचनस्य चानुपपत्तेः। तस्मात् तदीयगुणसमृद्ध्यादिश्रवणोत्तरं सामान्यतः बुद्ध्या गृहीताकारे शक्तिग्रहः। बौद्ध एवार्थः शाब्दबोधे भासते इति बौद्धार्थस्वीकार आवश्यकः।

किञ्च, **'स भूरिति व्याहरत् स भूमिमसृजत'** इति श्रुत्या सृष्टेः प्राक् हिरण्यगर्भः भूरादिशब्देभ्यः तदर्थं ज्ञात्वा भूरादीन् लोकान् ससर्ज इति गम्यते। यदि बाह्य एवार्थः तदा बाह्याया भुवः तदानीमभावेन भूशब्दस्य शक्तिग्रहासंभवात् तच्छब्दात् भुवो बोधो न स्यात्। बौद्धार्थस्वीकारे तु, हिरण्यगर्भस्य सर्वज्ञत्वात् भगवदनुग्रहाच्च वेदलाभवत्, तदैव स्वबुद्धिपरिवर्तिपदार्थस्य स्थूलरूपेण भानं, तत्र संबन्धग्रहः, शाब्दबोधश्च संभवतीत्युपपद्यते। अतोऽपि बौद्धार्थः स्वीकरणीयः।

अपि च, **'उपदेशेऽजनुनासिक इत्'** [पा.सू. 1-3-2] इति सूत्रे भाष्ये को देवदत्तः इति प्रश्ने, 'अङ्गदी कुण्डली व्यूढोरस्कः वृत्तबाहुः ईदृशो देवदत्तः' इत्युक्तम्। तत्र ईदृशपदं एतत्सदृशार्थकम्। यदि बाह्य एवार्थः, तदा देवदत्तव्यक्तेरैक्यात् भेदघटितसादृश्यस्यासंभवात् ईदृशो देवदत्तः इति वाक्यमपार्थकं स्यात्। बौद्धार्थस्वीकारे तु एतैः शब्दैः यादृशोऽर्थः बुद्धौ प्रतिभासते तादृशो बाह्यदेवदत्तः इत्यर्थकं पूर्वोक्तवाक्यं बौद्धबाह्यदेवदत्तव्यक्त्योः भेदघटितसादृश्यसंभवादुपपद्यते।

असत्कार्यवादनिरूपणावसरे **'बुद्धिसिद्धं तु तदसत्'** (न्या. सू. 4-1-50) इति सूत्रकर्तुः गोतमस्यापि संमतो बौद्धार्थः। कर्तृत्वं कार्यनियतपूर्ववृत्तित्वरूपकारणत्वव्याप्यम्। उत्पत्तेः प्रागसच्च कार्यं कथमुत्पत्तिकर्तृ भवेत्, तत्त्वाभावे च घटो जायते इति कर्त्राख्यातप्रयोगः कथमुपपद्यते, इत्याशङ्कापरिहाराय तत्सूत्रं प्रवृत्तम्। तत्—कार्यं उत्पत्तेः प्राक् नाशोत्तरञ्च असदपि बुद्धिविषयतया सिद्धम् इति सूत्रार्थः। बौद्धस्य घटस्य पूर्ववृत्तित्वात् कर्तृत्वमुपपद्यते इति परिहाराशयः। ततश्च बौद्धार्थः न्यायदर्शनकर्तुः गोतमस्यापि संमतः।

तच्च न संभवति। ज्ञानसामान्ये विषयस्य कारणत्वेन विद्यमानस्यैव शाब्दबोधात् शाब्दकाले वाक्यस्योत्पत्त्याश्रयस्याङ्कुरस्याभावात्। बौद्धार्थाङ्गीकारे तु शशशृङ्गपदबोध्ये बौद्धे शशशृङ्गे बाह्यसत्ताभावः शशशृङ्गं नास्तीति वाक्येन बोध्यते। एवं तत्काले बुद्धिसिद्धाङ्कुरे उत्पत्तिः अङ्कुरो जायते इति वाक्येन बोध्यते इति न कोऽपि दोषः।

किञ्च, ज्ञानसामान्ये विषयः कारणम्। समानाधिकरणयोरेव कार्यकारणभावात् बाह्यघटादिः स्वानधिकरणमनोगतज्ञानस्य न कारणं भवितुमर्हति। बौद्धार्थस्वीकारे [illegible] बौद्धो विषयः घटादिः मनोनिष्ठः स्वाधिकरणे मनसि ज्ञानं जनयेदिति कार्यकारणभाव उपपद्यते।

न च विषयतासंबन्धेन ज्ञानं प्रति तादात्म्येन विषयस्य विषयनिष्ठप्रत्यासत्त्या कारणत्वसंभवान्न बौद्धार्थः स्वीकरणीय इति वाच्यम्। तादात्म्यसंबन्धस्य वृत्त्यनियामकत्वेन, तेन संबन्धेन विषयस्य कारणस्य कार्यभूतज्ञानाधिकरणस्ववृत्तित्वासंभवेन, विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावासंभवात्। एवं अतीतघटविषयकस्मरणज्ञाने अतीतघटस्य निरुक्तरीत्या कारणत्वं न वक्तुं शक्यते। विषयस्य अतीतघटस्य बाह्यस्य स्मरणकाले असत्त्वेन तत्र स्मरणस्य विषयतासंबन्धेन असत्त्वात्। विद्यमानयोरेव घटभूतलाद्योः संयोगादिसंबन्धदर्शनेन अविद्यमाने अतीतघटे विद्यमानस्मरणस्य संबन्धासंभवात्। बौद्धार्थस्वीकारे तु बाह्यस्य घटस्यातीतत्वेऽपि बौद्धस्य विद्यमानत्वात् स्मरणसंबन्धः, मनोनिष्ठप्रत्यासत्त्या ज्ञानविषययोः कार्यकारणभावश्चोपपद्यते।

एवं नलरावणादिपदात् शाब्दबोधनिर्वाहायापि बौद्धार्थस्वीकरणमावश्यकम्। घटत्वादिव्यञ्जकघटादिसंस्थानानामिव नलत्वादिव्यञ्जकनलादिसंस्थानानामस्माकमप्रत्यक्षत्वात् घटादिपदानां घटत्वादिजातिविशिष्टे इव नलादिपदानां नलत्वादिजातिविशिष्टे शक्तिग्रहो न संभवति। फलबलात् जनादीन् नलादिविषयकसंस्कारान् कल्पयित्वा, तादृशसंस्कारेणोपस्थिते शक्तिग्रहात् नलादिपदात् विशिष्य नलत्वादिप्रकारको बोधः इत्यपि न शक्यते वक्तुम्। अप्रसिद्धार्थक-

नलादिपदश्रवणे कः एतदर्थः इति प्रश्नस्य उपमानादिना तत्प्रतिवचनस्य चानुपपत्तेः। तस्मात् तदीयगुणसमृद्ध्यादिश्रवणोत्तरं सामान्यतः बुद्ध्या गृहीताकारे शक्तिग्रहः। बौद्ध एवार्थः शाब्दबोधे भासते इति बौद्धार्थस्वीकार आवश्यकः।

किञ्च, **'स भूरिति व्याहरत् स भूमिमसृजत'** इति श्रुत्या सृष्टेः प्राक् हिरण्यगर्भः भूरादिशब्देभ्यः तदर्थं ज्ञात्वा भूरादीन् लोकान् ससर्ज इति गम्यते। यदि बाह्य एवार्थः तदा बाह्याया भुवः तदानीमभावेन भूशब्दस्य शक्तिग्रहासंभवात् तच्छब्दात् भुवो बोधो न स्यात्। बौद्धार्थस्वीकारे तु, हिरण्यगर्भस्य सर्वज्ञत्वात् भगवदनुग्रहाच्च वेदलाभवत्, तदैव स्वबुद्धिपरिवर्तिपदार्थस्य स्थूलरूपेण भानं, तत्र संबन्धग्रहः, शाब्दबोधश्च संभवतीत्युपपद्यते। अतोऽपि बौद्धार्थः स्वीकरणीयः।

अपि च, **'उपदेशेऽजनुनासिक इत्'** [पा.सू. 1-3-2] इति सूत्रे भाष्ये को देवदत्तः इति प्रश्ने, 'अङ्गदी कुण्डली व्यूढोरस्कः वृत्तबाहुः ईदृशो देवदत्तः' इत्युक्तम्। तत्र ईदृशपदं एतत्सदृशार्थकम्। यदि बाह्य एवार्थः, तदा देवदत्तव्यक्तेरैक्यात् भेदघटितसादृश्यस्यासंभवात् ईदृशो देवदत्तः इति वाक्यमपार्थकं स्यात्। बौद्धार्थस्वीकारे तु एतैः शब्दैः यादृशोऽर्थः बुद्धौ प्रतिभासते तादृशो बाह्यदेवदत्तः इत्यर्थकं पूर्वोक्तवाक्यं बौद्धबाह्यदेवदत्तव्यक्त्योः भेदघटितसादृश्यसंभवादुपपद्यते।

असत्कार्यवादनिरूपणावसरे **'बुद्धिसिद्धं तु तदसत्'** (न्या. सू. 4-1-50) इति सूत्रकर्तुः गोतमस्यापि संमतो बौद्धार्थः। कर्तृत्वं कार्यनियतपूर्ववृत्तित्वरूपकारणत्वव्याप्यम्। उत्पत्तेः प्रागसच्च कार्यं कथमुत्पत्तिकर्तृ भवेत्, तत्त्वाभावे च घटो जायते इति कर्त्राख्यातप्रयोगः कथमुपपद्यते, इत्याशङ्कापरिहाराय तत्सूत्रं प्रवृत्तम्। तत्—कार्यं उत्पत्तेः प्राक् नाशोत्तरञ्च असदपि बुद्धिविषयतया सिद्धम् इति सूत्रार्थः। बौद्धस्य घटस्य पूर्ववृत्तित्वात् कर्तृत्वमुपपद्यते इति परिहाराशयः। ततश्च बौद्धार्थः न्यायदर्शनकर्तुः गोतमस्यापि संमतः।

एवञ्च बौद्ध एवार्थो वाच्य॰, बौद्ध एव शब्दो वाचकः। तयोरेव तादात्म्यमिति नात्रागिःयुक्ते पूरणापत्तिः।

• शब्दार्थतादात्म्योपकृतश्च वाच्यवाचकभावः अतिरिक्तः संबन्धः शक्तिः। तस्य अर्थोऽनुयोगी। पदं प्रतियोगि। तादृशसंबन्धानुयोगित्वं शक्यत्वम्। तादृशसंबन्धप्रतियोगित्वं शक्तत्वं—वाचकत्वम्। अनुयोगितावच्छेदकं शक्यतावच्छेदकम्। शक्यतावच्छेदकतामेदात् शक्तिमेदः, न तु शक्यतावच्छेदकमेदात्। अतश्च दिवाकरत्वनिशाकरत्वरूपशक्यतावच्छेदकमेदेऽपि न पुष्पवन्तपदस्य शक्तिमेदः इति निरूपयन्ति॥

प्राचीनवैयाकरणाः—

*यथा चक्षुरादीन्द्रियेषु घटादिचाक्षुषकारणत्वं अनादि, तथा घटादिपदे घटादिशाब्दबोधकारणत्वं अनादि वर्तते। सैव शक्तिः। बोधकत्वे अनादित्वञ्च स्वप्रयोज्यशाब्दबोधसमानाकारपूर्वपूर्वबोधध्वंसकालीनत्वम्। बोधकत्वं शक्तिरित्यभिधानं, ज्ञायमानं पदं शाब्दकारणमिति मतेन। यदा तु पदज्ञानमेव बोधकारणमिति निष्कृष्टमतमाद्रियते, तदा बोधजनकज्ञानविषयत्वं शक्तिः। न च यत्र घटपदगजोभयविषयकसमूहालम्बनस्मरणात् घटशाब्दबोधो जातः तत्र घटबोधकारणसमूहालम्बनज्ञानविषयत्वं गजेऽपि वर्तते इति गजस्यापि घटवाचकत्वापत्तिरिति वाच्यम्। बोधजनकतावच्छेदकविषयिताकत्वस्य विवक्षितत्वात्। प्रकृते च समूहालम्बनस्य घटपदविषयकत्वेनैव घटशाब्दबोधकारणत्वमिति बोधजनकतावच्छेदिका पदनिरूपितैव विषयितेति नातिप्रसङ्गः। तथा च निष्कृष्टमते बोधजनकतावच्छेदकविषयिताकत्वं शक्तिरिति सिद्धम्।*

ननु अनादिबोधकारणत्वं न शक्तिः। आधुनिकसंकेतितदेवदत्तादिपदे बोधकत्वसत्त्वेऽपि अनादिबोधकत्वाभावात्। न च वस्तुतः अनादिभूतबोधकत्वस्य तत्राभावेऽपि न शाब्दबोधानुपपत्तिः, केवलबोधकत्वावच्छिन्नविषयकज्ञानत्वेन शक्तिज्ञानस्य शाब्दबोधहेतुत्वात् तस्य चाक्षतत्वादिति वाच्यम्। देवदत्तादिपदं पित्रा व्यक्तिविशेषे संकेतितमिति संकेतज्ञानाभावे देवदत्तपदे व्यक्तिविशेषबोधकत्वज्ञानानुदयेन सकेतज्ञानमवश्यापेक्षणीयम्। तथा च 'तद्धेतोरेवास्तु हेतुत्व

मध्ये किं तेन' इति न्यायात् संकेतज्ञानमेव शाब्दबोधहेतुः, न बोधकत्वज्ञानम् । तस्मादावश्यकः संकेत एव शक्तिः । स च संकेतः आधुनिके नाम्नि पित्रादेः । गवादिपदे तु ईश्वरस्य । तथा च बोधकत्वं न शक्तिः इति चेत्, न ।

किं संकेतः शाब्दबोधकारणम्, उत संकेतज्ञानम् । द्वितीयेऽपि सामान्यतः संकेतज्ञानं, ईश्वरसंकेतत्वेन ज्ञानं वा । नाद्यः, घटपदे संकेतमजानतोऽपि वस्तुतः संकेतस्य सत्त्वेन शाब्दबोधप्रसङ्गात् । न द्वितीयः, घटपदे संकेतमजानतः प्रमेयमिति ज्ञानवतोऽपि शाब्दबोधापत्तेः । प्रमेयत्वेन संकेतज्ञानस्याक्षतत्वात् । न तृतीयः, ईश्वरानङ्गीकर्तॄणां मीमांसकादीनां ईश्वरसंकेतत्वेन संकेतज्ञानाभावेऽपि शाब्दबोधोदयेन व्यतिरेकव्यभिचारात् । न च अर्थबोधजनकतावच्छेदकत्वेन संकेतज्ञानं कारणम् । इदं पदमेतदर्थबोधजनकतावच्छेदकवदिति ज्ञानं मीमांसकादीनामपि संभवतीति न व्यभिचारः इति वाच्यम् । ततोऽपि लाघवेन अर्थबोधजनकतात्वावच्छिन्नविषयकज्ञानत्वेन कारणत्वस्योचितत्वात् । तथा च शाब्दबोधकारणज्ञानविषयबोधकत्वमेव शक्तिः ॥

न च आधुनिकसंकेतितदेवदत्तादिपदे बोधकत्वज्ञानाभावेऽपि संकेतज्ञानादेव शाब्दबोधोत्पत्त्या बोधकत्वज्ञानस्य शाब्दबोधहेतुत्वे व्यतिरेकव्यभिचार इति वाच्यम् । संकेतज्ञानस्यैव बोधकत्वज्ञानरूपत्वेन व्यभिचारानवकाशात् । इदंपदमेतदर्थबोधकं भवतु इति संकेते बोधकत्वं विषयः । संकेतज्ञाने च संकेतविषयबोधकत्वमपि विषयः । इच्छादिज्ञानस्य इच्छाविषयविषयकत्वनियमात् । एवञ्च संकेतज्ञानमपि बोधकत्वज्ञानमेवेति न व्यभिचारः । न च इतराविशेषणतया बोधकत्वज्ञानमेव शाब्दबोधकारणम् । संकेतज्ञानञ्च संकेतविशेषणतयैव बोधकत्वमवगाहते, न तु इतराविशेषणतयेति व्यभिचारो दुर्वार इति वाच्यम् । इतराविशेषणत्वेन बोधकताज्ञानस्य कारणत्वे मानाभावात् । न च घटपदं न घटधीजनकमिति ज्ञानं पदे बोधकत्वावगाहिज्ञानमेव प्रतिबध्नाति, न तु अर्थे तत्पदजन्यपुरुषान्तरीयज्ञानविषयत्वावगाहिज्ञानमपि । तथा च इतरविशेषणतयाऽपि बोधकत्वज्ञानस्य शाब्दबोधकारणत्वे घटपदं न घटधीजनकमिति जानतः घटपदजन्यमैत्रज्ञानविषयो घटः इति ज्ञानात् शाब्दबोधापत्तिरिति वाच्यम् । घटपदजन्य-

मैत्रज्ञानविषयो घट इति ज्ञानस्य घटपदे घटबोधकत्वाप्रकारकत्वेन शक्तिज्ञान-रूपत्वाभावेन तेन शाब्दबोधापादनासंभवात्। न च पदजन्यबोधविषयत्वस्यार्थे भाने तुल्यवित्तिवेद्यतया पदे अर्थबोधकत्व भासते इति निरुक्तज्ञानस्य शक्तिज्ञानत्व संभवत्येवेति वाच्यम्। नेद पद तद्बीजनकमिति बाधज्ञानस्य जागरूकत्वेन पूर्वोक्तज्ञानस्य पदे बोधकत्वावगाहित्वासंभवात्।

न च पदे बोधकत्वज्ञानादिव अर्थे पदबोध्यत्वज्ञानादपि शाब्दबोधोदयेन बोधकत्वमिव, अर्थनिष्ठ बोध्यत्वमपि शक्ति । एवञ्च घटपदजन्यमैत्रज्ञानविषयो घट इति ज्ञान बोध्यत्वरूपशक्तिविषयकमिति तेन शाब्दबोधापादन संभवतीति वाच्यम्। तथा सति नेद तद्बीजनकमिति बाधमहोपन्यासस्य व्यर्थत्वात्। शक्तिज्ञानप्रतिबन्धकज्ञानसद्भावेन न शाब्दबोध वस्तुत सभवतीति बोधनायैव तादृशज्ञानमुपन्यस्तम्। यदि अर्थे बोध्यत्वमपि शक्ति तदा बोध्यत्वरूपशक्तिज्ञान प्रति पदे बोधकत्वाभावावगाहिज्ञानस्य ग्राह्याभावानवगाहित्वेनाप्रतिबन्धकत्वात् तदुपन्यासोऽनर्थक । यदि च ग्राह्याभावानवगाह्यपि बोधकत्वाभावज्ञान बोध्यत्वबोधकत्व-रूपोभयविधशक्तिज्ञान प्रतिबध्नातीति तदुपन्यासोऽर्थवानित्युच्यते, तदा तादृशबाध-ज्ञानदशायां घटपदजन्यमैत्रज्ञानविषयो घट इति ज्ञानस्यासंभवेन तेनापत्तेरसंभवात् न कोऽपि दोष ॥

ननु गङ्गापदे तीरबोधकत्वसत्त्वात् तीरवाचकत्वापत्त्या गङ्गापदस्य तीरे लक्षणाया उच्छेदप्रसङ्ग इति चेत्, न। शक्तिग्राहकस्य व्यवहारस्य लक्ष्यार्थेऽपि सत्त्वेन लक्षणोच्छेदस्येष्टत्वात्।

अपि च, चक्षुरादिनोपस्थितघटादे शाब्दबोधाभावेन तद्विषयकशाब्दबोधे शक्त्या पदजन्यतदुपस्थिति कारणमिति वाच्यम्। लक्षणाया स्वीकारे तद्विषयक-शाब्दबोधे शक्त्या पदजन्यतदुपस्थिति, लक्षणया पदजन्यतदुपस्थितिश्च कारणमिति कार्यकारणभावद्वयकल्पनया गौरवम्। एवं लक्षणाजन्योपस्थितेरभावेऽपि शक्ति-जन्योपस्थित्या शाब्दबोधजननेन प्रसक्तव्यतिरेकव्यभिचारवारणाय अन्यतरहितोत्-तरत्वावच्छेदेन तत्तदुपस्थितिविशिष्टशाब्दबोध प्रति तत्तदुपस्थिति कारणमिति

अनन्तकार्यकारणभावकल्पनया गौरवम्। एवं पदार्थोपस्थितिं प्रति शक्तिज्ञानस्य लक्षणाज्ञानस्य च पृथक् कारणत्वं कल्पनीयमित्यपि गौरवम्।

न च शाब्दबोधे वृत्तिज्ञानजन्योपस्थितिः कारणम्। पदार्थोपस्थितौ च वृत्तिज्ञानं कारणमिति एकैक एव कार्यकारणभावः। वृत्तित्वञ्च शक्तिलक्षणो-भयानुगतमिति वाच्यम्। वृत्तित्वं हि शक्तिभिन्नः लक्षणाभिन्नश्च यः तद्भिन्नत्वपर्य-वसितं शक्तिलक्षणान्यतरत्वं, शाब्दबोधहेतुपदार्थोपस्थित्यनुकूलसंबन्धत्वं वा। उभयमपि शक्तित्वापेक्षया गुर्विति तद्घटितस्य कारणतावच्छेदकत्वं न संभवति। किञ्च शाब्दबोधहेतुपदार्थोपस्थित्यनुकूलसंबन्धत्वं न वृत्तित्वम्, अन्योन्याश्रयात्। निरुक्तवृत्तित्वं उपस्थितिनिष्ठशाब्दबोधहेतुत्वघटितम्। हेतुत्वज्ञाने हेतुतावच्छेदक-ज्ञानं कारणम्। अवच्छेद्यज्ञाने अवच्छेदकज्ञानस्य कारणत्वात्। उपस्थितिनिष्ठ-कारणतावच्छेदकं वृत्तिज्ञानजन्योपस्थितित्वं वृत्तित्वघटितम्। एवञ्च, वृत्तित्वज्ञाने सति शाब्दबोधपदार्थोपस्थित्योः कार्यकारणभावज्ञानं, कार्यकारणभावज्ञाने च कारणताघटितवृत्तित्वज्ञानमिति अन्योन्याश्रयः। तस्मान्न शाब्दबोधहेतुत्वघटितं वृत्तित्वम्।

न च लक्षणायाः शक्यसंबन्धरूपत्वेन शक्तिघटितत्वात् लक्षणाजन्योप-स्थितिरपि शक्तिप्रयोज्येति, लक्ष्यार्थोपस्थितिसाधारणेन शक्तिप्रयोज्योपस्थितित्वेन एक एव कार्यकारणभावः इति न गौरवमिति वाच्यम्। प्रयोज्यत्वस्य जन्यजन्यत्व-रूपत्वे घटपदजन्यशाब्दबोधे भूतलस्य भानापत्तिः। घटपदशक्यवद्भूतल-मित्युपस्थितौ घटपदशक्तिज्ञानस्य विशेषणतावच्छेदकप्रकारकज्ञानविधया कारणत्वेन पूर्वोक्तोपस्थितेः शक्तिज्ञानप्रयोज्यत्वात्। प्रयोज्यत्वस्य जन्यत्वरूपत्वे, लक्षणाजन्य-तीरोपस्थितेः शक्तिज्ञानजन्यत्वाभावेन न लक्ष्यार्थोपस्थितिसाधारणः एकः कार्य-कारणभावः। तस्मात् लक्षणायाः स्वीकारे अधिककार्यकारणभावकल्पनागौरवं दुर्वारमेव॥

एवञ्च गङ्गापदस्यापि तीरबोधकत्वात् तीरे शक्तिरेव। यथा हर्यादिपद-प्रयोगे, किमत्र विष्णुर्विवक्षितः, उत सूर्यः इत्यर्थसन्देहः, प्रकरणादिना तात्पर्यज्ञाने तु अर्थविशेषविषयकः शाब्दबोधः, तथा गङ्गापदे नानार्थबोधकत्वं जानतः

पुरुषस्य मनस्येवार्थसन्देहे, अन्यथानुपपत्त्यादिना तीरतात्पर्यकत्वनिश्चये तीरविषयकः शाब्दबोधो जायते। अत एव 'सर्वे सर्वार्थाः' इति वैयाकरणप्रवादः सङ्गच्छते। तथा च बोधकत्वमेव शक्तिः इति निरूपयन्ति॥

नैयायिकास्तु—

आधुनिकसङ्केतस्थले सङ्केतज्ञानादेव शाब्दबोधस्य सर्वानुभवसिद्धत्वात्, वाच्यवाचकभावाख्यातिरिक्तसम्बन्धग्रहणार्थमपेक्षणीयस्य सङ्केतज्ञानस्यैव 'तद्धेतोरेवास्तु हेतुत्वं मध्ये किं तेन' इति न्यायेन शाब्दबोधकारणताया उचितत्वाच्च अवश्य ज्ञातव्य क्लृप्तः सङ्केत एव समयापरपर्यायः पदस्यार्थे सम्बन्धः। न तु अतिरिक्तः वाच्यवाचकभावः तत्र प्रमाणाभावात्, पारिभाषिकपदानां अङ्गुल्याद्यभिनयानाञ्च बोध्यार्थेनातिरिक्तसम्बन्धसिद्धिप्रसङ्गाच्च। तथा च पारमर्षं सूत्रम् **'सामयिकत्वाच्छब्दादर्थसंप्रत्ययस्य'** (न्या सू २ १ ५५) इति।

सङ्केतो द्विविधः आधुनिकः नित्यश्चेति। आधुनिकसङ्केतः परिभाषा। नित्यः ईश्वरसङ्केतः शक्तिः। घटपदं घटरूपार्थबोधकं भवतु इत्याकारिका, घट

---

टिप्पणी—

'स पुनरयं समयः। अस्य शब्दस्येदमर्थजातमभिधेयमिति अभिधानाभिधेयनियमनियोगः। तस्मिन्नुपयुक्ते शब्दादर्थसम्प्रत्ययो भवति। विपर्यये हि शब्दश्रवणेऽपि प्रत्ययाभावः। सम्बन्धवादिनोऽपि चायमवर्जनीय इति।' इति वात्स्यायनभाष्यम्।

"अभिधानाभिधेययोः नियमः—गोशब्दस्य सास्नादिमानेवार्थः, एवमश्वशब्दस्य केसरादिमानेवेति। तस्मिन् नियोगः—बोद्धव्य इति भगवतः परमेश्वरस्य सर्गादौ, सोऽयं समय इत्यर्थः। सम्बन्धवादिनोऽपीति। येऽपि मीमांसका वैयाकरणा वा स्वाभाविकं शब्दार्थयोः सम्बन्धमास्थिषत तेषामपि नैव सत्तामात्रेण गमकः, अपि तु ज्ञातः सन्। विज्ञाने च अयमस्य वाचक इति वा, अस्मादयं बोद्धव्य इति वा समय एवोपायः। वृद्धव्यवहारोऽपि गवादिशब्दानां देवदत्तादिशब्दवत्, सङ्केतपूर्व एव। तत् परमस्तु सङ्केत एव। तामन्तरेण स्वाभाविकेन सम्बन्धेन। तस्मात्तदेव प्रयोगप्रतिपत्तिव्यवहाराणामुपपत्तेरित्यर्थः।" इति न्यायवार्तिकतात्पर्यटीका।

घटपदजन्यबोधविषयो भवतु इत्याकारिका वा ईश्वरेच्छा बोध्या। विशेष्यतासंबन्धेन तत्पदजन्यबोधविषयत्वप्रकारकेश्वरेच्छावत्त्वं तत्पदवाच्यत्वम्। न च घटपदविद्यमानसर्वविषयिण्यामेकस्यामीश्वरेच्छायां पटोऽपि विशेष्यः, तथा च घटपदबोद्धव्यत्वप्रकारकेश्वरेच्छाविशेष्यत्वं पटस्यापीति पटस्य घटपदवाच्यत्वं स्यादिति वाच्यम्। पटादिविषयिण्यपीश्वरेच्छा न पटे घटपदजन्यबोधविषयत्वमवगाहते तथा सति तस्या विसंवादित्वप्रसङ्गात्। अपि तु घटे एव घटपदबोद्धव्यत्वमवगाहते। तत्पदजन्यबोधविषयत्वप्रकारतानिरूपितेश्वरेच्छाविशेष्यत्वमेव तत्पदशक्यत्वम्। ईश्वरेच्छीयपटविशेष्यतायां न घटपदबोद्धव्यत्वप्रकारतानिरूपितत्वमिति न पटस्य घटपदवाच्यत्वमापादयितुं शक्यते॥

न च द्विनिष्ठत्वादिसंबन्धलक्षणायोगात् संकेतस्य संबन्धत्वमेव नोपपद्यते इत्युक्तमिति वाच्यम्।

नीलो घटः इति विशिष्टबुद्ध्या सिद्धे अभेदसंबन्धे द्विनिष्ठत्वाभावेन तस्य संबन्धलक्षणत्वायोगात्। न च द्विनिष्ठत्वाभावादेवाभेदस्य न संबन्धत्वमिति वाच्यम्। अभेदसंबन्धं निराकृत्य तत्स्थाने नव्यवैयाकरणाभिषिक्तस्य संबन्धान्तरानवच्छिन्नविशेषणविशेष्यभावस्यापि द्विनिष्ठत्वाभावेनानुपपत्तेः। अपि च आधाराधेयभावादयः संबन्धा न द्विनिष्ठाः। आधाराधेयभावो नाम आधारता, आधेयता, उभयं वा स्यात्। सर्वथापि न द्विनिष्ठः। आधारतायाः आधारमात्रवृत्तित्वात्, आधेयतायाश्च आधेयमात्रवृत्तित्वात्। यदि चाधारता स्वरूपसंबन्धेनाधारे, निरूपकतासंबन्धेन चाधेये वर्तते इति द्विनिष्ठेत्युच्यते, तदा संकेतोऽपि द्विनिष्ठः। घटशब्दः घटबोधको भवतु इतीच्छायां शब्दो विशेष्यः, तत्र जनकत्वं, तत्र च बोधः, तत्र च विषयितासंबन्धेन घटः प्रकारः। एवञ्च इच्छा विशेष्यतासंबन्धेन शब्दे प्रकारताविशेषसंबन्धेन च घटे (अर्थे) वर्तते। विषयतासंबन्धस्य वृत्त्यनियामकत्वात न तेन संबन्धेन संबन्धिनिष्ठत्वं संकेतस्येति चेत्, किं निरूपकतासंबन्धो वृत्तिनियामकः, येन तेनाधेयसंबन्धिनः आधारत्वस्य द्विनिष्ठत्वं भवेत्।

तस्मात् सम्बन्धस्य द्विनिष्ठत्वं नापेक्षितम्, अपि तु द्विसम्बन्धित्वमेव। तच्च सर्वत्र नापेक्षितम्, अभेदसम्बन्धस्वीकारादित्यप्युक्तम्।

एवं सम्बन्धत्वं न विशिष्टबुद्धिनियामकत्वम्। नियामकत्वस्य जनकत्वरूपत्वे अतीन्द्रियपरमाण्वोः संयोगे अव्याप्तिः। विशिष्टबुद्धेः प्रत्यक्षत्वे संयोगस्य विषय-विधया तज्जनकत्वं भवेत्। अतीन्द्रियपरमाण्वोः विशिष्टबुद्धिस्तु अनुमित्यादिरूपेति तद्विषयसंयोगे तज्जनकत्वं नास्तीत्यव्याप्तिः। नियामकत्वं यदि विषयत्वं तदा वस्तुमात्रे अतिव्याप्तिः। न च प्रकारतानिरूपिता या विशेष्यताभिन्नविषयता तद्वत्त्वं सम्बन्धत्वमिति न वस्तुमात्रेऽतिव्याप्तिरिति वाच्यम्। संयोगेन द्रव्यत्वप्रकारक-भ्रमीय-द्रव्यत्वनिष्ठप्रकारतानिरूपित-विशेष्यताभिन्नविषयतावत्त्वं संयोगे वर्तते इति संयोगो द्रव्यत्वस्य सम्बन्ध इति व्यवहारापत्तेः। अत तद्वारणाय प्रमात्मक-ज्ञाननिरूपितनिरुक्तविषयतावत्त्वं सम्बन्धत्वमित्युच्यते इति चेत्, तदा अन्योन्याश्रयः। तेन सम्बन्धेन तद्वद्विशेष्यकत्वे सति तेन सम्बन्धेन तत्प्रकारकत्वरूपप्रमात्वस्य सम्बन्धघटितत्वात्। निरुक्तस्य च सम्बन्धत्वस्य प्रमात्वघटितत्वात्।

तस्मात् तस्य सम्बन्धत्वं तत्प्रतियोगिकत्वविशेषः। तस्मिन् सम्बन्धत्वं च तदनुयोगिकत्वविशेषः। स्पष्टञ्चेदमभिहितं सिद्धान्तलक्षणविचारशेषे 'दर्शितश्च नियमाघटितं संबन्धत्वम्' इति दीधितिव्याख्यानावसरे श्रीगदाधरभट्टा-चार्यैः॥

न च निष्प्रतियोगिकस्य सङ्केतस्य कथं पदप्रतियोगिकत्वरूपं पदसम्बन्धत्व-मिति वाच्यम्।

अर्थे पदस्य स्वजन्यज्ञानविषयत्वप्रकारकेश्वरेच्छाविषयत्वं सम्बन्धः। तत्र च स्वत्वं परिचायकम्, न सम्बन्धकोटिप्रविष्टम्। जन्यत्वञ्च पदप्रतियोगिकमिति जन्यत्वघटितस्य तस्य पदसम्बन्धत्वम्। संयोगस्य इन्द्रियप्रतियोगिकत्वेन तद्घटितस्य संयुक्तविशेष्यकज्ञानप्रकारीभूतधूमत्वस्य इन्द्रियसम्बन्धत्वमिवेति न कोऽपि दोषः॥

न च वृद्धव्यवहारदर्शिनो बालस्य शब्दे बोधकारणत्वमनुपपन्नमिति ज्ञान-दशायां तद्घटितसङ्केतरूपसम्बन्धज्ञानं न सम्भवतीत्युक्तमिति वाच्यम्।

देवदत्तः पुरोवर्तिनं रजतं जानाति । तस्य ज्ञानं भ्रमः रजतत्वशून्ये पुरो-
वर्तिनि रजतत्वप्रकारकत्वात् । यज्ञदत्तस्तु अभ्रान्तः पुरोवर्तिनो रजतत्वमनुपपन्न-
मिति जानन्नपि पुरोवर्ती रजतत्वप्रकारकदेवदत्तज्ञानविषयः इति प्रत्येति । पुरोवर्तिनो
रजतत्वमनुपपन्नमिति ज्ञानं पुरोवर्तिनि रजतत्वप्रकारकमेव ज्ञानं प्रतिबध्नाति ।
पूर्वोक्तज्ञानं तु न पुरोवर्तिनि रजतत्वावगाहि । अपि तु तत्प्रकारकान्यदीयज्ञान-
विषयत्वावगाहीति न अनुपपद्यमानत्वज्ञानेन प्रतिबध्यते । अत एव भ्रान्तिज्ञज्ञानस्य
तच्छून्ये तत्प्रकारकत्वरूपं भ्रमत्वं नास्ति । अभिहितश्चेदं सर्वज्ञस्येश्वरस्य सविषय-
भ्रमज्ञातृत्वेन प्रसक्तं भ्रान्तत्वं परिहरद्भिः **न्यायाचार्यैः न्यायकुसुमाञ्जलौ**
चतुर्थस्तबके, **प्रकाशे** च तत्र **वर्धमानोपाध्यायैः** । प्रकृते च शब्दे अर्थस्य
बोधजनकत्वप्रकारकेश्वरेच्छाविषयत्वं संबन्धः । शब्दस्य बोधकारणत्वमनुपपन्न-
मिति ज्ञानं शब्दे बोधकारणत्वप्रकारकमेव ज्ञानं प्रतिबध्नाति । न तु बोधकारण-
त्वप्रकारकेश्वरेच्छाविषयत्वप्रकारकमपि ज्ञानम् । तस्मात् बोधकारणत्वस्य अनुप-
पद्यमानत्वज्ञानदशायामपि अस्मदभिमतसंबन्धज्ञानं संभवत्येवेति न दोषः ॥

न च विनिगमनाविरहेण ईश्वरेच्छाज्ञानयोरुभयोरपि शक्तित्वकल्पनया
गौरवमिति वाच्यम् ।

---

**टिप्पणी**—

"विभ्रमस्याप्रामाण्येऽपि तद्विषयस्य तत्त्वमुल्लिखतः अभ्रान्तत्वात् ।
अन्यथा भ्रान्तिसमुच्छेदप्रसङ्गः प्रमाणाभावात् । तथापि आरोपितार्था-
वच्छिन्नज्ञानालम्बनत्वेन कथं न भ्रान्तत्वमिति चेत्, न । यत् यत्र नास्ति
तस्य तत्रावगतिरिति भ्रान्त्यर्थत्वात् । एतदालम्बनस्य च एवमुल्लिखितः
सर्वत्र यथार्थत्वात् । न हि न तद्रजतम्, नापि तत्रासत्, नापि तत्राव-
गतम् ॥" इति **न्यायकुसुमाञ्जलिः** ।

"शुक्तौ रजतत्वप्रकारकज्ञानवानिति ज्ञानं न भ्रमः । शुक्ताविदं
रजतमिति ज्ञाने रजतत्वं प्रकारः । तेन तद्भ्रमः । ईश्वरज्ञाने तु रजतत्व-
प्रकारकत्वं प्रकारः इति न भ्रमत्वम् । अत एव अस्मदादिरपि भ्रान्तिज्ञो
न भ्रान्तः इति ॥" इति **प्रकाशः** ॥

शक्तिज्ञानस्य पृथक् कारणत्वाकल्पनात्मकलाघवरूपविनिगमकसद्भावेन ईश्वरेच्छाया एव शक्तित्वात्। तथाहि—नद्यादिपारिभाषिकपदेभ्यः शाब्दबोधो जायते। तत्र परिभाषाज्ञानं कारणम्। परिभाषा च आधुनिकसंकेतः। ईश्वरसंकेतस्य शक्तित्वेऽपि संकेतत्वेनैव तद्ज्ञानं कारणम्, ईश्वरानङ्गीकर्तॄणां मीमांसकादीनामपि शाब्दबोधस्य जायमानत्वात्। एवञ्च शक्तिज्ञाननिष्ठकारणता परिभाषाज्ञानसाधारणी। परिभाषाज्ञानस्य च कारणत्वं सर्वसंप्रतिपन्नमिति, शक्तिज्ञानस्यातिरिक्तकार्यकारणभावो न कल्प्यते इति लाघवम्। ईश्वरज्ञानस्य शक्तित्वे तु शक्तिज्ञानस्य अतिरिक्तं कारणत्वं कल्पनीयमिति गौरवम्॥

न च आधुनिकसंकेतस्येव आधुनिकज्ञानस्यापि परिभाषात्वाङ्गीकारात् ईश्वरज्ञानरूपशक्तिविषयकज्ञानस्यापि परिभाषाज्ञानव्यावृत्तकारणत्वान्तरं न कल्पनीयमिति न गौरवमिति वाच्यम्। आधुनिकज्ञानस्य परिभाषात्वासंभवात्। 'नदीशब्दः पाणिनिना ईदूदन्तस्त्रीलिङ्गशब्दे परिभाषितः नास्मदादिभिः' इति प्रामाणिको व्यवहारः। यदि आधुनिकबोधकत्वज्ञानं परिभाषा, तदा अस्मदादीनामपि नदीशब्दः ईदूदन्तस्त्रीलिङ्गशब्दबोधकः इति ज्ञानसंभवात्, नदीशब्दः निरुक्तार्थे अस्मदादिभिः परिभाषित इति प्रामाणिकव्यवहारः स्यात्। न च तथा व्यवहारः प्रामाणिकानां दृश्यते। एवं वाचकानां घटादिशब्दानामपि पारिभाषिकत्वापत्तिः। अस्मदादीनां घटशब्दो घटबोधकः इति ज्ञानसंभवात्। तस्मादाधुनिकसंकेत एव परिभाषा। ईश्वरज्ञानस्य शक्तित्वे तज्ज्ञानस्य परिभाषाज्ञानव्यावृत्ता अतिरिक्ता कारणता कल्पनीयेति गौरवमेव। तथा च निरुक्तरीत्या विनिगमनासत्त्वेन ईश्वरेच्छाया एव शक्तित्वमिति न गौरवावकाशः॥

न च इदमस्माद्भवतु इतीच्छाविषयत्वमेव जनकत्वं स्यादिति बहूपद्रुत्य इत्युक्तमिति वाच्यम्।

पदस्यार्थबोधजनकत्वं बोधकत्वेनेच्छाविषयत्वमिति वादिनः संभवत्ययं दोषः। न हि नैयायिकास्तथा मन्यन्ते। अपि तु पदगतस्य अर्थबोधकत्वस्य निर्वाहकः संबन्धः तत्त्वेनेश्वरेच्छाविषयत्वमिति। अथ पदस्य अर्थबोधजनकत्वनिर्वाहकः संबन्धो यदि तत्त्वेनेच्छाविषयत्वं, तदा घटजनकत्वेनेच्छाविषयत्वमेव

कपालस्य घटजनकतानिर्वाहकः संबन्धः स्यादिति दूषणाशयः इति चेत्, न । कपाले घटस्य समवायः संबन्धः प्रत्यक्षसिद्ध इति तस्यैव जनकतानिर्वाहकत्वम् । न तु जनकत्वप्रकारकेच्छाविषयत्वस्य तादृशसंबन्धत्वं कल्प्यं गौरवात् । शब्दे चार्थस्य न समवायादिः संबन्धः सिद्धः, अग्निरित्युक्ते वाचि दाहाभावात् । अतो बोधजनकतानिर्वाहकसंबन्धः तत्त्वेनेच्छाविषयत्वमिति न कोऽपि दोषः ॥

न च शब्दोऽपि प्रमाणं चक्षुरादिवत् बोधकत्वघटितसंबन्धभिन्नसंबन्धेन प्रमेयसंबद्धः सन्नर्थबोधकः । अन्यथा वह्निधूमयोरपि धूमाद्वह्निज्ञानं जायतामितीच्छाविषयत्वमेव संबन्धोऽस्तु इति व्याप्त्युच्छेद इति वाच्यम् ।

शब्दः बोधकत्वघटितसंबन्धभिन्नसंबन्धेन प्रमेयसंबद्धः सन् बोधकः प्रमाणत्वादिति प्रयोगे प्रमाणत्वहेतुरप्रयोजकः व्यभिचारशङ्कावारकतर्काभावात् । किञ्च, अनुमानोपमानशब्दाः परामर्श-अतिदेशवाक्यार्थस्मरण—पदार्थस्मरण-रूपज्ञानद्वारैव प्रमितिजनका इति प्रत्यक्षमपि (चक्षुरादि) ज्ञानद्वारैव प्रमितिजनकं भवेत् । तथा च प्रत्यक्षप्रमाणं ज्ञानद्वारा प्रमितिजनकं प्रमाणत्वात् अनुमानादिवत् इत्याभाससाम्यम् । अपि च वह्निधूमयोः व्याप्त्युच्छेदः इत्यत्र कोऽसौ व्याप्त्युच्छेदः । न तावत् साहचर्यनियमस्योच्छेदः, तस्य सर्वानुभवसिद्धत्वेन तदभावस्यापादयितुमशक्यत्वात् । नापि व्याप्तिज्ञानस्य अनुमितिहेतुत्वोच्छेदः, तस्मिन् सत्यनुमितिः तदभावे नेति अन्वयव्यतिरेकयोः कारणताग्राहकयोः सत्त्वेन हेतुत्वाभावस्यापादयितुमशक्यत्वात् ।

वह्निधूमयोः धूमाद्वह्निज्ञानं जायतामितीच्छाविषयत्वमेव संबन्धोऽस्तु इत्यप्यसंगतम् । ईश्वरेच्छा सन्मात्रविषयिणी (वस्तुत्वव्यापकविषयताका) । धूमाच्च वह्निज्ञानं जायते । तस्मात् सा धूमाद्वह्निज्ञानं जायतामित्याकारिकापि । परन्तु तादृशेच्छाविषयत्वस्य संबन्धत्वकल्पने न प्रमाणमस्ति । शब्दार्थयोस्तु संयोगसमवायसामानाधिकरण्यादयः संबन्धा न संभवन्ति । शाब्दबोधकादाचित्कत्वान्यथानुपपत्त्या च कश्चन संबन्धो वाच्यः । अतिरिक्तसंबन्धरूपधर्मिकल्पनामपेक्ष्य, अवश्यज्ञेयस्य क्लृप्तस्य संकेतस्य संबन्धत्वकल्पने लाघवम् । तथा च निरुक्तलाघवज्ञानसहकृतशाब्दबोधकादाचित्कत्वान्यथानुपपत्तिरेव संकेतस्य संबन्धत्वे प्रमाणमिति ॥

वाच्यवाचकभावाद्यतिरिक्तसंबन्धस्यानंगीकारेण शब्दार्थयोस्तादात्म्यम्। तदपि शक्युपकारकत्वात् शक्तिरिति व्यवह्रियते, इत्यपि न संगतम्। मानाभावेन शब्दार्थयोस्तादात्म्यस्यैवासिद्धेः॥

न च अयं गौरित्यादेः सविकल्पप्रत्ययस्य वाचकशब्दसामानाधिकरण्ये-नार्थावगाहित्वात् शब्दार्थतादात्म्यं सिद्धयतीत्युक्तमिति वाच्यम्।

अस्यार्थस्यायं शब्दो वाचकः इति शब्दार्थसंबन्धमगृहीतवतां बालमूका-दीनामपि अर्थज्ञानं जायते। मूकादिभिश्च शब्दसम्बन्धोऽप्यनाघ्रात इति कथं तेषामर्थज्ञाने शब्दसामानाधिकरण्यमवगाहेत। कथं वा तत्तादात्म्यमर्थानां सिद्ध्येत। तेषां शब्दभावनासत्त्वे प्रमाणाभावात्।

अथ शब्दार्थसंबन्धमजानतां शब्दसामानाधिकरण्येन अर्थप्रतीतिः उत नेति सन्देह एवास्तु। व्युत्पन्नानां जायमानः सविकल्पकप्रत्ययः शब्दसामानाधि-करण्यमवगाहते इति शब्दार्थयोः तादात्म्ये सिद्धे बालादिज्ञानानामपि अर्थविषय-कत्वेन तदात्मकशब्दविषयकत्वं सिद्धयतीति चेत्, न। व्युत्पन्नानां तथा प्रतीते-रेवासिद्धेः। ते हि सास्नादिमद्रूपस्यार्थस्य गोशब्दो वाचकः इति प्रतिपद्यन्ति। न तु अयं गोशब्द इति। यत्र च अयं गौरिति अभेदेन संबन्धबोधनं, तत्र गोशब्दः गोशब्दप्रतिपाद्ये निरूढलाक्षणिकः। यथा गौर्वाहीकः इत्यत्र गोत्वं समवायात् गोतादात्म्याद्वा न वाहीकोपाधिः। अपि तु गोगुणलक्षकत्वेन। वाहीके गौरिति प्रतीतेरभावात्। तथा गवि अयं गोशब्दः इति प्रतीतेरभावात् गोशब्दः वाच्यत्वो-पलक्षकतया इदंपदार्थोपाधिः॥

न चाज्ञातवाचकस्य पुरुषस्य अर्थे ज्ञातेऽपि किमिदमिति न जानामीति व्यवहारात्, वाचकपदोपदेशे किमिदमिति ज्ञातमिति व्यवहाराच्च शब्दानुविद्ध एवार्थो सविकल्पके भासते इति वाच्यम्।

अथ कः इत्यादौ विधेयवाचककिंशब्दस्य, समभिव्याहृतपदोपस्थाप्यता-वच्छेदकत्वोपलक्षितधर्मावच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकत्वेन वक्तृजिज्ञा-सितः यो विशेषधर्मः, तदवच्छिन्ने शक्तिः। धर्मे विशेषत्वञ्च विधेयतावच्छेद-कत्वेन वक्तृज्ञानविषयत्वम्। स च विशेषधर्मः प्रकरणादिना ज्ञायते। यदा प्रष्टा

इमं प्राणिनं जानाति न मनुष्यमिति प्रकरणात् ज्ञायते, तदा अयं कः इति प्रश्ने, अयं मनुष्यः इत्युत्तरं दीयते। यदा तु इमं मनुष्यं जानाति न ब्राह्मणमिति ज्ञायते, तदा अयं ब्राह्मणः इत्युत्तरं दीयते । अयं क इति न जानामीत्यादौ इतिशब्दः समभिव्याहृतवाक्यप्रतिपाद्यजिज्ञासाविषयधर्मविशेषविषयकाभिन्नज्ञानाभाववानहमिति बोधो भवतीति वस्तुस्थितिः । प्रकृते च अज्ञातवाचकः अर्थदर्शी पुरुषः, अयं कः इति पृच्छति, अयं क इति न जानामीति च व्यवहरति । प्रष्ट्रा पुरोवर्ती पदार्थः सम्यगनुभूयते, परन्तु तस्यार्थस्य पदविशेषवाच्यत्वं नावगतम्। तस्मात् पदविशेषवाच्यत्वप्रकारको बोधः तस्मै जननीयः इत्यभिसन्धिना, अयं एतच्छब्दवाच्यः इति वाचकशब्दमुपदिशति पार्श्वस्थः पुरुषः। ततः स्वेन जिज्ञासितस्य धर्मविशेषस्य ज्ञातत्वात् अयं क इति ज्ञातमिति व्यवहरति। एवञ्च सति सविकल्पकप्रत्यये वाचकपदभानं नावश्यकं भवति ।

यदि पदभाने आग्रहः, तदा चैत्रादिज्ञाने तदीयपाचकत्वादिधर्मविशेषा अपि भासन्ते इति स्वीकरणीयं भवेत्। नामधेये ज्ञातेऽपि अर्थगतविशेषधर्मान्तराज्ञानात्, अयं चैत्रः क इत्यपि पृच्छ्यते, अयं चैत्रः क इति न जानामीति व्यवह्रियते च। अयं चैत्रः पाचकः इत्युत्तरेण तद्गते पाचकत्वधर्मविशेषे ज्ञाते, अयं चैत्रः क इति ज्ञातमिति व्यवह्रियते। तथा च पाचकत्वाज्ञानेन चैत्रे अज्ञातत्वव्यवहारस्य, तज्ज्ञानेन तत्र ज्ञातत्वव्यवहारस्य च तुल्यत्वात् चैत्रज्ञानेऽपि पाचकत्वादि भासते इत्यापद्येत। तस्मात् पूर्वोक्तप्रकार एव साधुः। तत्र च न कार्यकारणभावकल्पनागौरवम्। तथा च सर्वत्र ज्ञाने पदभानं नावश्यकम्॥

न च कोकिलमर्थं जानतः कोकिलपदे च तद्वाचकत्वमजानतः पुरुषस्य, अयं कोकिलः इत्यनुव्यवसायवारणाय पदभानमावश्यकमिति वाच्यम्।

अयं कोकिलः इति जानातीत्यादौ इतिशब्दः तत्तद्वाक्यजन्यबोधसमानाकारकपरः। इतिपदार्थश्चाभेदेन धात्वर्थज्ञानान्वयी। स्पष्टञ्चेदमभिहितं **गदाधरभट्टाचार्यैः शक्तिवादे** विशेषकाण्डे युष्मदर्थनिरूपणावसरे। एवञ्च अयं कोकिल इत्यनुव्यवसायः इत्यस्य अयं कोकिलः इति वाक्यजन्यबोधसमानाकारकानुव्यवसाय इत्यर्थः। तस्य च नापत्तिः संभवति। शाब्दबोधविषयकोकिल-

रूपार्थविषयकज्ञानस्य सत्त्वात्। न च इतिज्ञानभिन्नस्य पूर्वोक्तार्थाभिन्नज्ञानमित्यर्थः, अर्थज्ञानयोश्च तादात्म्याध्यास इति वाच्यम्। आन्तरत्वबाह्यत्वचक्षुर्ग्राह्यत्वतदग्राह्यत्वादिविरुद्धधर्मप्रत्यक्षे जागरूके सति अर्थज्ञानयोरभेदज्ञानस्यासंभवात्। अन्यथा 'सुखं भवतु इति इच्छा' इति प्रतीतिबलात् सुखभवनरूपस्यार्थस्य इच्छायाश्चाभेदाध्यासः, तयोः तादात्म्यञ्च सिध्येत्। अथ तत्पुरुषीयं ज्ञानं अयं कोकिलः इत्यभिलप्येत इत्यत्र दूषणतात्पर्यमिति चेत्, न। कोकिलपदे तच्छक्तिं जानद्भिरस्माभिः तदीयज्ञानस्य कोकिलशब्देनाभिलापस्येष्टत्वात्। अथ तेनैव स्वीयप्रतीतिः कोकिलशब्देनाभिलप्येतेति चेत्, न। तस्य कोकिलपदे शक्तिग्रहाभावेन तेन तथा अभिलपितुमशक्यत्वात्। तस्मान्न किञ्चिदेतत्॥

न च प्रत्यक्षादौ विषयताभाननियमनिर्वाहाय पदभानमावश्यकमिति वाच्यम्।

यत्पदविषयकमित्यंशमपहाय, तत्स्थाने यत्पदाभिलप्यमिति निवेशेन सर्वसामञ्ज-
स्यात्। तथा च 'यत् ज्ञानं यत्पदाभिलप्यं तत् तत्पदजन्यबोधविषयतासमान-
विषयताकम्' इति नियमेनैव विषयताभाननियमनिर्वाहः संभवतीति न तदर्थं
पदविषयकत्वं प्रत्यक्षादीनां कल्पनीयम् ॥

**'इन्द्रियार्थसंनिकर्षोत्पन्नम्' इति न्यायसूत्रे** अव्यपदेश्यपदं निर्वि-
कल्पकपरम्। तेन प्रत्यक्षज्ञानस्य सविकल्पकनिर्विकल्पकभेदेन द्वैविध्यं सूचितम्।
न तु शाब्दबोधे अतिव्याप्तिवारणाय अव्यपदेश्यपदम्। येन शाब्दबोधस्य शब्द-
विषयकत्वं सूत्रकाराभिमतमिति कल्प्येत।

**तत्सूत्रभाष्यकारस्यापि** न शाब्दबोधस्य शब्दविषयकत्वमभिमतम्।
**"अर्थवन्नामधेयशब्देन व्यपदिश्यमानं सच्छाब्दं प्रसज्यते"** इति अव्यपदेश्य-
पदावतरणिकास्थं **भाष्यम्**। प्रत्यक्षस्य शाब्दबोधत्वापत्तौ नैतद्भाष्यस्य तात्पर्यम्।
अपि तु प्रत्यक्षमपि शब्दविषयकमिति शब्दरहितमविकल्पकं नास्तीत्यत्र।
स्पष्टश्चायमर्थः **तात्पर्यटीकायाम्**। तस्मात् शाब्दबोधे शब्दभानं न न्याय-
भाष्यकारसंमतमिति बोध्यम् ॥

---

**टिप्पणी—**

"तथा च अर्थानां नामधेयात्मकत्वात् तद्गोचरमालोचनमपि नाम-
धेयगोचरमिति अर्थवन्नामधेयेन व्यपदिश्यमानं शाब्दं प्रसज्यते इति। न
शब्दप्रमाणकतया शाब्दम्। अपि तु शब्दे जातं शाब्दम्। शब्दश्चास्य
विषयत्वेन जनकः अर्थतादात्म्यात्। तथा च नाविकल्पं शब्दरहितमस्तीति
तात्पर्यार्थः। तथा चाहुः—

'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥'

तदस्य निराकरणं लक्षणगतेन आलोचनज्ञानावरोधार्थेन अव्यपदेश्यपदेन
सूचितम्। परीक्षापर्वणि वचनार्हमपि सुभाषितरुचितया तद्विलम्बमसह-
मानो भाष्यकारः लक्षणावसर एवाह। अत एवाह—अव्यपदेश्यमितीति।"
**इति तात्पर्यटीका।**

एवञ्च अयं घटः इत्यादिप्रत्यये पदमानाभावात् न शब्दसामानाधिकरण्ये-नार्थस्य प्रतीतेर्बलात् शब्दार्थयोस्तादात्म्यं सिद्धयति ॥

न च शब्दपुरःसरत्वाद्विकल्पस्य शब्दोपायकत्वं शब्दविषयकत्वं वेत्यु-भयथापि सिद्ध तयोस्तादात्म्यमित्युक्तमिति वाच्यम् ।

सविकल्पकप्रत्ययोत्पत्तेः पूर्वं नियमेन शब्दस्याभावात् । अस्तु वा शब्द-स्मरणम् । तथापि न तत्पूर्वकस्य अर्थज्ञानस्य शब्दतादात्म्यापन्नार्थविषयकत्वम् । तथा सति घटस्मरणपूर्वकं घटाभावज्ञानमपि घटतादात्म्यापन्नाभावविषयकमिति घटतदभावयोस्तादात्म्यं सिद्धयेत् । परन्तु व्युत्पन्नस्य प्रथमतः इन्द्रियार्थसंनिकर्षेण अर्थविषयकं निर्विकल्पक जायते । तेन च शब्दविषयकः संस्कार उद्बुद्धः शब्दस्मरणं जनयति । अतः सविकल्पप्रत्ययः शब्दस्मरणपुरःसरो जायते । न चैतावता शब्दस्मरणसविकल्पकयोरुपायोपेयभावः, शब्दस्य विकल्पविषयत्वं वा सिद्धयति । न हि धूमविषयकाविकल्पेनोद्बोधितः महानसीयवह्निसंस्कारः वह्निस्मरण जनयति, ततः धूमसविकल्पको जायते, इति वह्निस्मरणधूमसविकल्पयोः उपायो-पेयभावः, वह्नेर्वा धूमविकल्पविषयत्वं भवति । शब्दस्मरणस्योपायत्वेऽपि, असंनिहिते अतीतादौ स्मरणसंभवेन, शब्दस्मरण न शब्दसंनिधानमपेक्षते । येन अर्थ-सानिध्यमेव शब्दसांनिध्यमिति तयोः तादात्म्यं सिद्धयेत् ॥

न च शब्दप्रश्नस्यार्थप्रश्नस्य चैकाकारोत्तरदर्शनात् तयोस्तादात्म्यमिति वाच्यम् ।

शब्दानामर्थपरत्वमेव स्वाभाविकम् । 'घट इत्ययमर्थः' इत्युत्तरवाक्ये च घटपदस्य घटः (वस्तु) अर्थः । इतिशब्दस्य अभेदोऽर्थः । तथा च अयमर्थः घटाभिन्नः इति तद्वाक्याधीनो बोधः । शब्दप्रश्ने, 'घट इत्ययं शब्दः' इत्युत्तरं दीयते । तत्र घटशब्दः शब्दपरः । तस्य शब्दपरत्वं द्योतयति इतिशब्दः । तथा च अयंशब्दः घटा(आनुपूर्वीविशिष्टा)भिन्नः इति बोधः । एवञ्चोत्तरयत. पुंसः न शब्दार्थयोस्तादात्म्याध्यासः । अपि च शब्दः आकाशनिष्ठः श्रोत्रग्राह्य, अर्थश्च भूतलनिष्ठः चक्षुर्ग्राह्यश्चेति विरुद्धधर्मप्रत्यक्षस्य, कम्बुग्रीवादिमानर्थः न घटशब्दः

इति विपरीतप्रतीतेरबाधितायाश्च सार्वजनीनत्वात् शब्दार्थयोस्तादात्म्याध्यास एव न संभवति ॥

न च पदं श्रुतं, अर्थं शृणु इति व्यवहारमूलप्रतीत्या तादात्म्यसिद्धिरिति वाच्यम् ।

तत्रत्यार्थपदस्य पूर्वोक्तपदवाच्यार्थप्रतिपादके, पर्यायान्तरे, वाक्ये वा लाक्षणिकत्वात् । न च तत्र तद्घटकार्थपदं न शब्दपरमिति द्योतनायैव पदं श्रुतमित्युक्तमिति वाच्यम् ।

यतः पदं पूर्वं श्रुतम् । तथापि विस्तरेण तत्प्रतिपाद्यार्थप्रतिपादकवाक्यं, तत्प्रतिपाद्यार्थबोधकपदान्तरं वा न श्रुतम् । तस्मादर्थपदस्य निरुक्तार्थकथने न कोऽपि विरोधः । अपि च 'आत्मा श्रोतव्यः' इत्यादौ श्रुधातोः शाब्दबोधार्थकत्वमभिहितं **मुक्तिवादे गदाधरभट्टाचार्यैः । रामरुद्रभट्टाचार्याश्च** शाब्दबोधानुव्यवसायं 'शृणोमि' इत्यभिलपन्ति । एवञ्चार्थं शृणु इत्यत्रापि श्रुधातोः शाब्दबोधार्थकत्वमेव न श्रावणप्रत्यक्षार्थकत्वम् । अर्थस्य च शाब्दबोधविषयत्वमस्त्येवेति क्व तादात्म्याध्यासः ? ॥

'वृद्धिरादैच्' (पा. सू. 1-1-1) इत्यत्र वृद्धिशब्दः तत्पदबोध्ये निरूढलाक्षणिकः । तथा च आदैच् वृद्धिपदबोध्य इत्यर्थः । 'ओमित्येकाक्षरं ब्रह्म' इत्यत्रापि एकाक्षरशब्दः तत्प्रतिपाद्ये निरूढलाक्षणिकः । अतो न तादृशप्रयोगः तादात्म्याध्यासमूलकः । वस्तुतस्तु 'ओमित्येकाक्षरं ब्रह्म' इति श्रुतिः प्रणवे ब्रह्मदृष्टिविधानार्था । उपासाप्रकरणात् । अन्यथा 'असौ वाव लोको गौतमाग्निः' (छा. 5-4-1) इति श्रुत्या अग्निद्युलोकयोरपि तादात्म्यं सिद्ध्येत ॥

'रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः' इत्यत्र, रामशब्दार्थो यथा पिनाकिनो मानभङ्गप्रयोजकः, तथा रामनामापि स्ववाच्यार्थद्वारा मानभङ्गप्रयोजकमित्याशयेन शब्दस्य मानभञ्जकत्वमभिहितमिति न तादात्म्याध्यासः ॥

न च 'हिरण्यपूर्वं कशिपुं प्रचक्षते' इति प्रयोगमूलतादात्म्याध्यासात् तयोस्तादात्म्यसिद्धिरिति वाच्यम् ।

यथा गभीरायां नद्यां घोषः इत्यत्र नदीपदं गभीरनदीतीरलक्षकम्। तत्तात्पर्यग्राहकञ्च गभीरपदम्। तथा, प्रकृते कशिपुपदं हिरण्यशब्दपूर्वककशिपुपदप्रतिपाद्ये लाक्षणिकम्। हिरण्यपूर्वपदं तत्तात्पर्यग्राहकम्। संमतश्चायं बोध स्तादात्म्यवादिनामपि। 'अन्त्ये हिरण्यकशिपुनामानमिति प्रतीतेः सर्वानुभवसिद्धत्वात्' इति स्वयमभिधानात्। तस्मान्नात्रापि तादात्म्याध्यासः॥

बौद्ध एवार्थः शक्यः बौद्ध एव शब्दो वाचकः। बौद्धयोरेव शब्दार्थयोस्तादात्म्यमिति न अन्नमित्युक्ते पूरणापत्तिः इत्यपि बौद्धार्थासिद्ध्या न संगच्छते।

न च घटोऽस्ति, घटो नास्ति, इति प्रयोगोपपत्तये बौद्धार्थः स्वीकरणीयः इत्युक्तमिति वाच्यम्।

बाह्यघटस्य घटपदशक्यत्वेऽपि तन्निष्ठं बाह्यसत्त्वं न तत्पदशक्यतावच्छेदकम्। अतएव घटपदजन्यबोधे बाह्यसत्त्वं न भासते। एवञ्च घटपदेनानवगतसत्ताया बोधनाय अस्तिपदं प्रयोक्तव्यमेव। यदि घटपदेन घटत्वविशिष्टस्य बोधेऽपि घटत्वेन तत्र बाह्यसत्त्वमनुमातुं शक्यमिति अन्यलभ्यत्वात् अस्तिपदप्रयोगानर्थक्यमित्युच्यते। तदा घटत्वेन द्रव्यत्वप्रमेयत्वादेरनुमातुं शक्यत्वेन अन्यलभ्यत्वात्, घटो द्रव्यम्, घटः प्रमेयः इत्यादिप्रयोगोऽप्यनर्थकः स्यात्। एवं घटो नास्ति इति वाक्यात् शाब्दबोधो न जायते। अनुयोगिविनिर्मोकेण नञः अभावबोधकत्वस्याव्युत्पन्नत्वात्। परन्तु भूतले घटो नास्ति इत्येव प्रयोगः। तत्र च सप्तम्यर्थो निरूपितत्वम्। असधात्वर्थश्चाधेयत्वम्। तथा च भूतलनिरूपितवृत्तित्वाभाववान् घटः इति बोधो जायते। सति तात्पर्ये घटाभावो भूतलवृत्तिरिति, भूतलवृत्त्यभावप्रतियोगी घटः इति च बोधो जायते। घटपदबोध्यस्य बाह्यसत्त्ववत्त्वेऽपि भूतलवृत्तित्वाभावः संभवति। बाह्यसत्तायाः प्रदेशविशेषवृत्तित्वाभावेन विरोधाभावात्। तस्मात् न तद्वाक्यप्रयोगानुपपत्तिः।

प्रत्युत पदबोध्यः बौद्धसत्ताविशिष्ट एवेति वादिनामेव घटोऽस्ति, घटो नास्ति इति प्रयोगोऽनुपपन्नः। अस्तिपदमपि बौद्धसत्तामेव बोधयेत्, न बाह्यसत्ताम्। पदत्वाविशेषात्। एवञ्च घटपदेनैव तन्निष्ठबुद्धिसत्ताया बोधितत्वात्

'उक्तार्थानामप्रयोगः' इति न्यायेन अस्तिपदप्रयोगोऽनर्थकः। एवं घटो नास्तीत्यत्रापि घटे बौद्धसत्ताभावो बोधनीयः। स चाभावः घटपदबोध्यबौद्धसत्ताविरोधी। नास्तिपदेन बाह्यसत्ताभावो न बोधयितुं शक्यते। सर्वपदानां बौद्ध एवार्थः शक्यः इत्यङ्गीकारात्।

तस्मात् घटोऽस्ति घटो नास्ति इति प्रयोगोपपादनाय न बौद्धार्थः स्वीकार्यः॥

न च शशशृङ्गं नास्ति, अङ्कुरो जायते इति वाक्यजन्यशाब्दबोधान्यथानुपपत्त्या बौद्धार्थः सिद्ध्यतीति वाच्यम्।

केवलशशशृङ्गपदमपार्थकमेवेति प्रतिपादितमुदयनाचार्यैः। शशशृङ्गं नास्तीति वाक्याच्च शशविशेष्यकः शृङ्गाभावप्रकारकः बोधो जायते। बोधविषयस्य शशस्य शृङ्गस्य, तदभावस्य च प्रसिद्धत्वात् कथं बोधानुपपत्तिः। यद्यपि अत्यन्ताभावविषयकशाब्दबोधे सप्तम्यन्तानुयोगिवाचकपदसमभिव्याहारः कारणम्, प्रकृतवाक्ये च शशपदं न सप्तम्यन्तम्। तथापि शश-शृङ्गादिपदजन्यपदार्थोपस्थितिमूलकः शशे शृङ्गाभावः इत्याकारकः मानसबोधो जायते। तादृशमानसबोधजननेच्छयैव व्युत्पन्नाः शशशृङ्गं नास्तीति प्रयुञ्जते। स्पष्टश्चेदमभिहितं, व्यधिकरणधर्मावच्छिन्नाभावखण्डने 'शशशृङ्गं नास्तीति च शशे शृङ्गाभाव इत्यर्थ.' इति **मणि**विवरणावसरे **गदाधरभट्टाचार्यैः**। एवं, अङ्कुरो जायते इति वाक्यात् अङ्कुरः उत्पत्त्याश्रयः इति बोधः। यद्यपि बोधविषयोऽङ्कुरः बोधकाले नास्ति, तथापि न बोधानुपपत्तिः। प्रत्यक्ष एव विषयस्य कारणत्वात्। शाब्दबोधे विषयस्याकारणत्वात्। न च ज्ञानसामान्ये विषयः कारणमिति वाच्यम्। अतीतानागतादिविषयकपरोक्षज्ञानोदयेन तथा कार्यकारणभावस्य वक्तुमशक्यत्वात्। न च अतीतादिस्थलेऽपि बौद्धार्थस्य सत्त्वान्न कार्यकारणभावानुपपत्तिरिति वाच्यम्। बौद्धार्थसाधनावसरे सिद्धवत्तथा कथनस्यासंगतत्वात्। तस्मात् शशशृङ्गं नास्ति, अङ्कुरो जायते इत्यादिवाक्यजन्यबोधानुपपत्त्या न बौद्धार्थः सिद्ध्यति॥

ज्ञाने विषयः कारणमित्यस्य, विद्यमानस्यैव ज्ञानं जायते इति सारार्थः। अविद्यमानपदार्थस्मरणस्य तथाविधानुमितेः तथाविधशाब्दबोधस्य चानुभवसिद्धत्वेन

तादृशः कार्यकारणभाव एव नास्ति। अस्तु यथाकथञ्चित् कार्यकारणभावः। तथापि न तदनुपपत्त्या बौद्धार्थः स्वीकार्य.। विषयतासंबन्धेन ज्ञानं प्रति तादात्म्य-संबन्धेन विषयः कारणमिति विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावसंभवात्। न च तादात्म्यसंबन्धस्य वृत्त्यनियामकत्वेन कारणे कार्याधिकरणवृत्तित्वं न निर्वहतीति वाच्यम्। कारणस्य कार्याधिकरणसंबन्धित्वमेवापेक्षितं, न तु वृत्तित्वमिति तथा कार्यकारणभावे दोषविरहात्। यद्यपि संयोगः संबन्धः विद्यमानयोरेव, तयोरेव संयोगप्रतीतेः, तथापि विषयविलक्षणसंबन्धः अतीतपदार्थ-विद्यमानस्मरणज्ञानयो-रपि। नेदानीं देवदत्तोऽस्ति, परन्तु स्मर्यते (स्मरणविषयः) इत्यबाधितप्रतीतेः तत्साधिकायाः सत्त्वात्। स्पष्टश्चायमर्थ. वैयाकरणभूषणसारे, दर्पणे च सुवर्थनिर्णये अतीतादेः जानातिकर्मत्वोपपादनावसरे। एतेन 'अतीतानागतस्थले संबन्धस्य वक्तुमशक्यत्वाच्च' इति दूषणमनवकाशम्। तथा च ज्ञानविषययोः कार्यकारणभावनिर्वाहकसामानाधिकरण्योपपादनाय न बौद्धार्थः स्वीकरणीयः॥

न च पुराणादितः गुणसमृद्ध्यादिश्रवणानन्तरं नलादिपदात् सामान्यतो बुद्ध्या गृहीताकारविशेषे शक्तिग्रहपूर्वकं तस्यैव बोधः इति, नलादिपदात् शाब्द-बोधनिर्वाहाय बौद्धार्थः स्वीकरणीय इति वाच्यम्।

नलो राजा इत्यादौ नलपदस्य नलपदबोध्ये लक्षणा। इत्थञ्च नलपदबोध्यः कश्चिद्राजा इत्यनुभवसिद्धः शाब्दबोध उपपद्यते। न च नलपदस्य शक्तिग्रहा-भावे शक्यसंबन्धरूपलक्षणाज्ञानमपि न संभवतीति वाच्यम्। यत्पदं साधु व्युत्पन्नेः प्रयुक्तं तत्पदं किञ्चिद्वाचकमिति सामान्यतः तत्पदशक्तिग्रहसंभवात्। लक्षणाग्रहे विशिष्य शक्यतावच्छेदकभानस्यानपेक्षितत्वात्। अयञ्च बोधः बौद्धार्थवादिनामपि

---

टिप्पणी—

'अतीतानागतस्थलेऽपि ज्ञानजन्यस्य आवरणभङ्गस्याश्रयत्वात्, अन्यथा यथापूर्वं न जानामीति प्रतीत्यापत्ते.। अतीतादेराश्रयता च विषयतया ज्ञानाश्रयताया नैयायिकानामिव।' इति भूषणसारः।

'विनष्टघटे अनुभवानुरोधात् ज्ञानविषयतास्वीकार आवश्यकः' इति दर्पणग्रन्थः।

संमत एव। अतएव, नलत्वादिप्रकारकान् संस्कारान् कल्पयित्वा, विशिष्य नलत्वप्रकारकबोधमुपवर्णयतः कस्यचिन्मतम्, 'पदप्रकारकबोधस्यैवानुभवाच्च' इति स्वयं दूषितं संगच्छते। 'पदप्रकारकेति। नलपदवाच्यः कश्चिदासीदित्याकारकेत्यर्थः।' इति तद्ग्रन्थव्याख्या। नलरावणादिपदेभ्यः तत्तत्पदबोध्यत्वेनैव बोधः इति स्पष्टमुक्तं **गदाधरभट्टाचार्यैः शक्तिवादे**। तस्मात् न नलादिपदेभ्यः शाब्दबोधनिर्वाहाय बौद्धार्थः स्वीकार्यः॥

यत्तु, 'स भूरिति व्याहरत्' इति श्रुत्या भूरादिशब्दार्थज्ञानपूर्वकमेव हिरण्यगर्भसृष्टिरिति लाभेन, तदानीं बाह्याया भुवोऽभावेन बौद्धपृथिव्यामेव शक्तिग्रहपूर्वकं हिरण्यगर्भस्य बौद्धपृथिवीबोध इति।

तन्न। निरुक्तश्रुत्या तत्तद्वाचकशब्दोच्चारणपूर्वकं तत्तत्पदार्थान् ससर्जेति लभ्यते। न तु शब्दादर्थं ज्ञात्वा ससर्जेति। न हि स्वस्यैव शाब्दबोधजननार्थं शब्दं प्रयुञ्जानो दृश्यते। वर्णयन्ति च **भगवत्पादाः** निरुक्तश्रुतेः तत्तद्वाचकशब्दानुसन्धानपूर्वकतत्तत्सृष्टिपरत्वं देवताधिकरणे।

यदि च 'शिल्पी यथा शिल्पशास्त्रवचनेभ्यो मरुत्वताम्' इत्यादिना **न्यायरक्षामणौ** प्रतिपादितसरण्या हिरण्यगर्भस्य वेदवाक्याच्छाब्दबोध आवश्यक इत्युच्यते। तदापि न बौद्धोऽर्थः स्वीकार्यः। हिरण्यगर्भस्य जन्मान्तरानुभूतभूम्यादिविषयकः संस्कारो वर्तते। सृज्यमानप्राणिकर्मभिरुद्बुद्धेन तेन स्मृते भूम्यादौ शक्तिग्रहः, ततश्च शाब्दबोधः संभवतीति न बौद्धार्थापेक्षा। न च ज्ञानसामान्ये विषयस्य कारणत्वात् शाब्दबोधादिसमये बाह्याया भुवोऽभावेन कथं शाब्दबोध इति वाच्यम्। बौद्धार्थसिद्धावेव ज्ञानसामान्ये विषयस्य कारणत्वसंभवात्, तत्साधनावसरे सिद्धवत् तादृशकार्यकारणभावोपन्यासस्यासंगतत्वात्॥

---

टिप्पणी—

'अपि च चिकीर्षितमर्थमनुतिष्ठन् तस्य वाचकं शब्दं पूर्वं स्मृत्वा पश्चात् तमर्थमनुतिष्ठतीति सर्वेषां नः प्रत्यक्षमेतत्। तथा प्रजापतेरपि स्रष्टुः सृष्टेः पूर्वं वैदिकाः शब्दाः मनसि प्रादुर्बभूवुः। पश्चात् तदनुगतानर्थान् ससर्जेति गम्यते। तथा च श्रुतिः 'स भूरिति व्याहरत् स भूमिमसृजत' इति॥ इति देवताधिकरणस्थं भगवत्पादभाष्यम्॥

न च कीदृशो देवदत्तः इति प्रश्नोत्तरवाक्यघटकस्य ईदृशपदस्य स्वारस्याद् बौद्धार्थसिद्धिरिति वाच्यम् ।

ईदृशपदात् समभिव्याहृतवाक्यप्रतिपाद्यधर्मविशिष्टविषयक एव बोधोऽनुभवसिद्धः इति तत्पदस्य समभिव्याहृतवाक्यप्रतिपाद्यत्वोपलक्षितधर्मविशिष्टे शक्तिः। न तु एतत्सदृशे तथा बोधाभावात् । न च प्रकृतिप्रत्ययविवेचनेन, एतत्सदृशार्थकत्वं प्रतीयते इति वाच्यम् । 'घट चेष्टायामिति धातोर्निष्पन्नो घटशब्द' चेष्टावद्वाचक इति भाति । परन्तु घटपदात् घटत्वजातिविशिष्टस्यैव बोधात् तस्य घटत्वविशिष्टे शक्तिः । न तु चेष्टाविशिष्टे । एवमेव 'मय ज्ञाने' इति धातोर्निष्पन्नः मायाशब्दः अज्ञानवाचक' । स्पष्टश्चायमर्थः अद्वैतसिद्धौ अज्ञानवादे । एवञ्च देवदत्तव्यक्तेरैक्येऽपि ईदृशपदाधीनबोधोदयात् न तदनुरोधेन बौद्धार्थः स्वीकरणीय. ॥

'बुद्धिसिद्ध तु तदसत्' (न्या. सू. 4-1-50) इति न्यायसूत्रकर्तुः गोतम महर्षेर्न संमतो बौद्धार्थ, पूर्वापरसन्दर्भपर्यालोचनया, भाष्यतात्पर्यटीकादिपर्यालोचनया च अन्यादृशार्थे तत्सूत्रतात्पर्यावधारणात् ।

तथा हि—फलपरीक्षाया, अग्निहोत्रादेः कालान्तरभाविस्वर्गफलकत्वं व्युत्पाद्य, तन्निर्वाहक चापूर्वं निरूप्य, निष्पद्यमानं प्राङ्निष्पत्तेः नासत् उपादाननियमात्, न सत्, विद्यमानस्योत्पत्त्यभ्युपगमे उत्पन्नस्य पुनरुत्पत्त्यापत्ते', न सदसत्, विरुद्धयोः सत्त्वासत्त्वयोरेकत्रायोगात्, इत्याशङ्क्य, 'उत्पादव्ययदर्शनात्' (न्या. सू. 4-1-49) इति सूत्रेण असत्कार्यवादः स्थापित । उत्पन्नो घटः, नष्टो घटः इति प्रतीते. निष्पद्यमान प्रागसत् इति तत्सूत्रार्थ. । उपादाननियमाच हेतोः निष्पद्यमानं प्रागसत् न संभवतीति शङ्कितम् । सा च शङ्का अवश्य परिहरणीया। तस्या परिहारमाह—'बुद्धिसिद्ध तु तदसत्' (न्या. सू. 4-1-50)

टिप्पणी—

'न च मय ज्ञाने इति धात्वर्थानुसारात् माया कथमज्ञानमिति वाच्यम् । घट चेष्टायामिति धातुजस्यापि घटशब्दस्य चेष्टावाचकत्वाभाववत् अत्रापि ज्ञानवाचकत्वाभावात् ।' इति अद्वैतसिद्धिः ।

इति । कार्यमुत्पत्तेः प्रागसदपि नियतकारणकत्वेन ज्ञातमिति पटार्थिनः तन्तूनेवोपाददते, न मृदमिति सूत्रार्थः । तस्मात् असतः उत्पत्तिकर्तृत्वोपपादनपरं तत्सूत्रमिति कथनं न पूर्वोक्तसन्दर्भानुगुणम् । नापि तथा व्याख्यानमुपपद्यते बौद्धस्य पूर्ववृत्तित्वेऽपि बाह्यस्य तदभावेन उत्पत्तिकर्तृत्वासंभवस्य तदवस्थत्वात् । यद्यपि बौद्धबाह्ययोरभेदाध्यासः बौद्धार्थवादिभिः स्वीकृतः, तथापि बाह्यस्य वस्तुभूतमुत्पत्तिकर्तृत्वं न संभवति । तस्मात् पूर्वोक्तरीत्या अर्थान्तरे एव सूत्रतात्पर्यावधारणात् न सूत्रकर्तुः गोतमस्य संमतो बौद्धार्थः । एवञ्च बौद्धार्थस्य विचारासहत्वात् न बौद्धयोः शब्दार्थयोः तादात्म्यं वाच्यवाचकभावापरपर्यायशक्त्युपकारकमिति सिद्धम् ॥

ननु वाच्यवाचकभावाख्यस्यातिरिक्तसंबन्धस्य शक्तित्वाभावेऽपि, क्लृप्तमनादिबोधकत्वमेव पदतदर्थसंबन्धरूपशक्तिरस्तु इति चेत्—

न । बोधकत्वज्ञानार्थं संकेतज्ञानस्यावश्यापेक्षणीयत्वात् आवश्यकज्ञानविषयसंकेतस्यैव तादृशशक्तित्वमुचितम् । न च—संकेतो न स्वरूपतः, नापि सामान्यतो ज्ञातो हेतुः । अपि तु ईश्वरसंकेतत्वेन ज्ञात इति वक्तव्यम् । तच्च न संभवति, ईश्वरानङ्गीकर्तॄणां मीमांसकादीनां शाब्दबोधानापत्तेरित्युक्तमिति—वाच्यम् । ईश्वरसंकेतस्य शक्तित्वेऽपि तज्ज्ञानस्य परिभाषाज्ञानसाधारणसंकेत-

---

**टिप्पणी**—

"यत्पुनरुक्तम् प्रागुत्पत्तेः कार्यं नासत् उपादाननियमादिति । 'बुद्धिसिद्धं तु तदसत् ।' इदमस्योत्पत्तये समर्थं न सर्वमिति प्रागुत्पत्तेः नियतकारणं कार्यं बुद्ध्या सिद्धं, उत्पत्तिनियमदर्शनात् । तस्मादुपादाननियमस्योपपत्तिः । सति तु कार्ये प्रागुत्पत्तेः, उत्पत्तिरेव नास्तीति" इति न्यायसूत्रभाष्यम् ।

"यच्चोक्तमुपादाननियमादिति, तत्र यदि पुरुषस्योपादाननियमः पटार्थी तन्तूनेवोपादत्ते न वीरणम्, कटार्थी वीरणमिति ततः तदुपादानानां तत्र तत्र कार्ये सामर्थ्यपरिज्ञानात् । तच्च सामर्थ्यमानुमानिकम् । तदिदमुच्यते 'बुद्धिसिद्धं तु तदसत्' इति । तदसत् भावि कार्यं अनेनैव कारणेन जन्यते नान्येनेत्यनुमानात् बुद्धिसिद्धमेवेत्यर्थः ॥" इति तात्पर्यटीका ।

ज्ञानत्वेन कारणत्वं लाघवात्। इत्यत्र ईश्वरसंकेतस्य तत्त्वेन ज्ञानं नापेक्षितमिति पूर्वोक्तदोषानवकाशात् ॥

आधुनिकसंकेतस्थले बोधकत्वज्ञानाभावेऽपि संकेतज्ञानादेव शाब्दबोधोत्पत्त्या व्यभिचारेण बोधकत्वज्ञानस्य कारणत्वासंभवात् न बोधकत्वं शक्तिः। न च संकेतविषयबोधकत्वविषयकत्वात् संकेतज्ञानमेव बोधकत्वज्ञानमिति न व्यभिचार इति वाच्यम्। देवदत्तपदं व्यक्तिविशेषं बोधयतु इति संकेतः। संकेतज्ञाने च संकेतो विशेष्यः। तत्र पदविशेष्यकत्वं व्यक्तिविशेषबोधजनकत्वप्रकारकत्वं चेत्युभयं प्रकारः। न तु पदे बोधजनकत्वं प्रकारः। तस्मात् संकेतज्ञानं न पदे बोधकत्वावगाहीति पूर्वोक्तव्यभिचारो दुर्वारः।

यद् ज्ञानं यद्विशेष्यकं यत्प्रकारकञ्च तज्ज्ञानज्ञानं तज्ज्ञानविषयविषयकमपि न तस्मिन् विशेष्ये तत्प्रकारावगाहि। अतएव शब्दचिन्तामणौ पदार्थसंसर्गरूपवाक्यार्थज्ञानमनुमितिरेवेति वैशेषिकमतव्युत्पादनावसरे, 'एतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणि' इति अनुमानाकारं प्रदर्श्य, 'एते पदार्थाः मिथः संसृष्टाः' इति पदार्थपक्षकानुमानान्तरं प्रदर्शितम्। तत्र प्रथमानुमानं पदे संसर्गज्ञानपूर्वकत्वमवगाहमानमपि, एकपदार्थे अपरपदार्थसंसर्गं नावगाहते इति एकपदार्थे अपरपदार्थसंसर्गविषयकमनुमानान्तरं प्रदर्शितमिति, व्याख्यातारः द्वितीयानुमानमवतारयन्ति। तथा चाधुनिकसंकेतस्थले बोधकत्वज्ञानस्य व्यभिचारात् न बोधकत्वं शक्तिः ॥

नातिप्रसङ्ग इति वक्तव्यम्। तच्च न संभवति। कलशपदात् कुम्भपदात् घट-पदाच्च घटविषयकः शाब्दबोधो जायते। एवञ्च घटपदाभावेऽपि कुम्भपदात् घटविषयकशाब्दबोधस्य जायमानत्वेन व्यतिरेकव्यभिचारवारणाय, अव्यवहितोत्तरत्वसंबन्धेन घटादिपदविशिष्टशाब्दबोधे घटादिपदस्य कारणत्वं वक्तव्यम। तत्र च कार्यतावच्छेदककोटौ विषयविषयकत्वं न निवेशनीयम, प्रयोजनविरहात्। तथा च घटविषयकत्वावच्छिन्नायाः शाब्दबोधनिष्ठजन्यताया अप्रसिद्धत्वात् जन्यतायां घटादिविषयकत्वावच्छिन्नत्वावगाहि शक्तिज्ञानं भ्रम एव। एवं च सर्वत्र जन्यतायां तत्तद्विषयकत्वावच्छिन्नत्वावगाहिशक्तिभ्रमात् शाब्दबोधकल्पनमसमञ्जसम्। तस्मान्न बोधकत्वं शक्तिः॥

किञ्च, बोधकत्वं यदि शक्तिः, तदा घटपदं चैत्रस्य घटवाचकमिति व्यवहारः स्यात्। तत्र वाचकशब्दस्य बोधकमित्यर्थः। तदेकदेशे बोधे चैत्रस्येति षष्ठ्यन्तार्थस्य चैत्रनिष्ठत्वस्यान्वये, चैत्रनिष्ठघटविषयकबोधजनकं घटपदमिति ततो बोधो भवेत्। घटपदेन चैत्रे घटबोधस्य जायमानत्वेन तद्वाक्यार्थस्याबाधितत्वेन निरुक्तव्यवहारः प्रामाणिकः स्यात्। न च बोधकत्वेनेश्वरेच्छा शक्तिरिति पक्षेऽपि तादृशव्यवहारापत्तिर्दुर्वारा। विद्यमानसर्ववस्तुविषयिण्यामीश्वरेच्छायां चैत्रवृत्तिघटबोधजनकत्वप्रकारिकायां घटपदस्य विशेष्यत्वेन विषयाबाधादिति वाच्यम्। गङ्गापदं तीरवाचकमिति व्यवहारस्येवास्यापि व्यवहारस्य वारणसंभवात्।

यदि च कृञ्धातुसमानार्थकत्वात् यतेः, घटं करोतीतिवत् घटं यतते इति प्रयोगस्य, शाखासमवेतत्वेन वृक्षस्य शाखायां वृक्षः इति प्रयोगस्य च पूर्वप्रयोगाभावेन साधुतावारणमिव, घटपदं चैत्रस्य घटवाचकमिति प्रयोगवारणं सुशकमिति मन्यते। तदापि बोधकत्वस्य पदतदर्थसंबन्धरूपशक्तित्वं न संभवति। प्रयोज्यप्रयोजकवृद्धव्यवहारं दृष्ट्वा, शब्दस्य बोधकारणत्वमवगत्य, असंबद्धस्य बोधकारणत्वानुपपत्त्या पदे अर्थसंबन्धं कल्पयति व्युत्पित्सुर्बालः। पदे बोधकारणत्वमनुपपन्नमिति ज्ञानदशायां पदे बोधकत्वरूपशक्तिज्ञानं न संभवति। तस्मात् पदपदार्थयोः न बोधकत्वं संबन्धः॥

अपि च, वृत्तिज्ञानं शाब्दबोधे कारणमिति सर्वसंप्रतिपन्नम्। शक्तिज्ञानस्य बोधकारणत्वे विषयितासंबन्धेन शक्तिरवच्छेदिका। बोधकत्वस्य शक्तिरूपत्वे,

बोधकारणतायां बोधकारणत्वस्यावच्छेदकत्वात् आत्माश्रयः। अवच्छेद्यज्ञाने स्वावच्छेदकज्ञानस्यापेक्षितत्वेन बोधकारणत्वस्यैवावच्छेद्यत्वादवच्छेदकत्वाच्च स्वज्ञाने स्वज्ञानापेक्षणात्। तस्मादपि बोधकत्वं न शक्तिः।

एवं नानार्थकस्थल इव घटादिपदप्रयोगेऽपि तात्पर्यज्ञानादेवार्थविशेषविषयकः शाब्दबोधः इति सर्वत्र तात्पर्यज्ञानकल्पने गौरवमपि।

किञ्च, शक्यार्थः लक्ष्यार्थः इत्यसङ्कीर्णव्यवहारः सर्वतान्त्रिकाणाम्। तादृशव्यवहारान्यथानुपपत्त्या च लक्ष्यार्थव्यावृत्तैव शक्तिर्वाच्या। एवञ्च गङ्गापदात् तीरोपस्थितये *लक्षणावृत्तिरप्यङ्गीकरणीया। अन्यथा तीरबोधकत्वस्य* गङ्गापदे सत्त्वात् गङ्गापदं तीरवाचकमिति प्रामाणिकव्यवहारापत्तिः॥

यदपि, लक्षणाङ्गीकारे, शाब्दबोधे शक्तिज्ञानजन्योपस्थितित्वेनेव लक्षणाजन्योपस्थितित्वेनापि कार्यकारणभावकल्पनेन परस्परं व्यभिचारवारणाय कार्यतावच्छेदककोटौ तत्तदव्यवहितोत्तरत्वनिवेशेन *अनन्तकार्यकारणभावकल्पनया* च गौरवमिति॥

तदपि न। पदनिष्ठस्य बोधकत्वस्य शक्तिरूपत्वसंभव एव, लक्षणाप्रयुक्तकार्यकारणभावाधिकल्पने लाघवम्, लक्षणाङ्गीकारे च अधिककार्यकारणभावकल्पने *गौरवमिति विचारस्यावसरः। बोधकत्वञ्च न शक्तिरिति व्यवस्थापि*तम्। एवञ्च लक्षणावृत्तेरप्यङ्गीकरणीयतया कार्यकारणभावादिकल्पनागौरवस्य फलमुखत्वेनादोषात्। अन्यथा शाब्दबोधाद्यप्रमित्यन्तरकल्पने तद्ध्वंसतत्प्रागभावादिकल्पने, पदार्थोपस्थित्यादीनां शाब्दबोधकारणत्वकल्पने च गौरवात् शाब्दबोधादयविलक्षणप्रमितिरेव न सिद्ध्येत्।

वस्तुतः, लक्षणाया अङ्गीकारेऽपि न कार्यकारणभावान्तरकल्पनागौरवम्। लक्ष्योपस्थितिसाधारणेन शक्तिप्रयोज्योपस्थितित्वेन शाब्दबोधकारणत्वाङ्गीकारात्। *न च प्रयोज्यत्वं जन्यत्वरूपं, जन्यजन्यत्वरूपं वा न संभवनीत्युक्तमिति वाच्यम्।* अन्यथासिद्धिनिरूपकतानवच्छेदकशक्तिज्ञानोत्तरवृत्तितावच्छेदकधर्मवत्त्वरूपशक्तिज्ञानप्रयोज्यत्वस्य जन्य-जन्यजन्योभयसाधारणस्य सुवचत्वात्। एवञ्च शक्तिप्रयोज्योपस्थितित्वेन शक्यलक्ष्योपस्थित्योः संग्रहः संभवति॥

एवं वृत्तिज्ञानजन्योपस्थितित्वेन शाब्दबोधकारणत्वाङ्गीकारात् नाधिक-
कार्यकारणभावः कल्प्यते। न च शाब्दबोधहेतुपदार्थोपस्थित्यनुकूलसंबन्धत्वं न
वृत्तित्वम्, अन्योन्याश्रयादित्युक्तमिति वाच्यम्। विजातीयपदार्थोपस्थित्यनुकूल-
संबन्धत्वं वृत्तित्वम्। पदार्थोपस्थितौ वैजात्यपरिचयायैव शाब्दबोधहेतुत्वमुपस्थिता-
वुक्तम्। न तु तस्यापि लक्षणे प्रवेशः। उपस्थितौ वैजात्यानिवेशे घटपदा-
काशयोः संबन्धस्य समवायस्य वृत्तित्वापत्तिः। घटपदाकाशयोः समवायसंबन्ध-
ज्ञाने सति, घटपदश्रवणे आकाशस्योपस्थितेः। अतः उपस्थितौ वैजात्यमुक्तम्।
घटपदात् समवायेनोपस्थितस्याकाशस्य शाब्दबोधे भानाभावात् आकाशोपस्थितिर्न
विजातीयेति नातिव्याप्तिः। एवञ्च वृत्तित्वस्य उपस्थितिनिष्ठशाब्दबोधहेतुत्वाघटि-
तत्वात् न पूर्वोक्तान्योन्याश्रयः।

न च तथापि शक्तित्वापेक्षया वृत्तित्वं गुर्विति तद्घटितवृत्तिज्ञानजन्योप-
स्थितित्वेन न कारणत्वमिति वाच्यम्। शाब्दबोधहेतुपदार्थोपस्थित्यनुकूलसंबन्धत्व-
रूपवृत्तित्वस्य बोधजनकत्वरूपशक्तित्वापेक्षया गुरुत्वेऽपि शाब्दबोधहेतुत्वाघटित-
विजातीयपदार्थोपस्थित्यनुकूलसंबन्धत्वस्यागुरुत्वात्॥

अपि च, शक्यसंबन्धो लक्षणा। सा च नास्तीति न वक्तुं शक्यते।
गङ्गापदशक्यप्रवाहसंबन्धस्य तीरे सत्त्वात्। तज्ज्ञानात् न लक्ष्यार्थोपस्थितिः
इत्यपि वक्तुं न शक्यम्। येन पुंसा गङ्गापदेन तीरस्य शक्यसंबन्धरूपः संबन्धो
गृहीतः, तस्य एकसंबन्धिनः पदस्य ज्ञानेन अपरसंबन्धिनः तीरस्य स्मरणं
भवत्येवेति अनुभवसिद्धत्वात्। नापि लक्षणाज्ञानस्य लक्षणाजन्योपस्थितेर्वा शाब्द-
बोधहेतुत्वं नास्तीति युक्तम्। यत्र गङ्गापदात् शक्यसंबन्धग्रहादेव तीरमुप-
स्थितम्, न तु प्रवाहोपस्थित्यनन्तरमुपस्थितम्, तत्र तीरविषयकः शाब्द-
बोधः सर्वानुभवसिद्धः इति शक्यसंबन्धज्ञानस्य तज्जन्योपस्थितेश्च शाब्दबोधकार-
णत्वस्य क्लृप्तत्वात्। न च तत्र गङ्गापदं तीरं बोधयतु इति इत्याकारकवक्तृ-
तात्पर्यस्य ज्ञानं शक्तिज्ञानरूपम्। तस्य गङ्गापदे तीरबोधकत्वावगाहित्वात् बोध-
कत्वस्यैव शक्तिस्वरूपत्वात्। तत एव च शाब्दबोधो जायते इति लक्षणाज्ञानस्य
तज्जन्योपस्थितेर्वा शाब्दबोधकारणत्वं नाङ्गीक्रियते इति वाच्यम्। तात्पर्यं नाम

वक्तुरिच्छा। तस्यां यद्यपि पदं विशेष्यः, बोधकत्वं प्रकारः, तथापि तस्या ज्ञाने न पदे विशेष्ये बोधकत्वं प्रकारः। किन्तु इच्छायां विशेष्यभूतायां पद-विशेष्यकत्वं बोधकत्वप्रकारकत्वञ्चेत्युभयं प्रकारः। तथा च तात्पर्यज्ञानस्य पदे बोधकत्वावगाहित्वाभावात् न शक्तिज्ञानरूपत्वमिति, लक्षणाज्ञानस्य कारणत्वं वस्तुतमेव।

१ अपि च, पदस्य येन येन सह वृत्तिः गृहीता, तेषां सर्वेषामुपस्थिति-र्जायते। तेषु च यस्य बोधे वक्तुस्तात्पर्यं ज्ञायते, तस्य शाब्दबोधो भवति। तस्मात् तात्पर्यज्ञानात् पूर्वं पदार्थोपस्थितिरपेक्षिता। पदात् पदार्थोपस्थितये च वृत्तिज्ञानमपेक्ष्यते। स्पष्टश्चेदमभिहितं तात्पर्यस्य वृत्तित्वं परिहरद्भिः **गदाधर-भट्टाचार्यैः** शक्तिवादे सामान्यकाण्डे। तस्मात् तात्पर्यज्ञानात् पूर्वमेव वृत्ति-ज्ञानजन्यपदार्थोपस्थितेरपेक्षितत्वात् तात्पर्यज्ञानस्य शक्तिज्ञानत्वकथनं न समञ्जसम्॥

एतेन—यत्र शक्यसंबन्धादेव तीरमुपस्थितं, तत्रापि बोधकत्वज्ञानं कल्प्यते। तदनन्तरमेव शाब्दबोधः। न च ज्ञानव्यक्त्यन्तरकल्पनया गौरवं दोषः। फलमुखत्वेनादोषत्वात्। वस्तुतस्तु सुषुप्त्यपगमक्षणमारभ्य पुनस्तदुत्पत्ति-क्षणपर्यन्तं प्रत्यक्षात्मविशेषगुणोत्पाद आवश्यकः। अतएव सुषुप्तिभिन्नः प्रत्यक्षात्म-विशेषगुणशून्यः कालः मूर्च्छेत्युच्यते। तथा च तावत्कालमन्तरा ज्ञानादे-रावश्यकतया ज्ञानान्तरमपेक्ष्य बोधकत्वज्ञानमेव कल्प्यते इति गौरवस्यैवाभावात्, इत्यपि समाहितम्।

शक्तिज्ञानस्य पदार्थोपस्थितावेवोपयोगेन, तस्याश्च शक्यसंबन्धमहादेव जातत्वेन, तात्पर्यज्ञानानन्तरं बोधकत्वज्ञानस्योपयोगाभावेन तत्कल्पनस्यासंग-तत्वात्। तथा च शक्यसंबन्धज्ञानस्य तज्जन्योपस्थितेश्च शाब्दबोधकारणत्व-मुभयवादिसंप्रतिपन्नमेवेति न लक्षणाया अकल्पनप्रयुक्तं लाघवमपि। तस्मात् बोधकत्वं शक्तिरिति न समञ्जसमिति बोध्यम्॥

---

टिप्पणी—

"यतः पदार्थोपस्थितिव्यापारकः सकेतो वृत्तिः। तात्पर्यज्ञान च साक्षादेव शाब्दबोधोपयोगि। न तु पदार्थोपस्थितिद्वारा। वृत्त्युपस्थापित-पदार्थ एव प्रकरणादिना वक्तृतात्पर्यावधारणात्।" इति शक्तिवादः।

ननु समयस्य शक्तित्ववादिनां मते लक्षणा उच्छिद्येत। गङ्गायां घोषः इत्यादौ गङ्गापदेन तीरबोधात् विद्यमानसर्वविषयिणी ईश्वरेच्छा तीरेऽपि गङ्गापदजन्यबोधविषयत्वमवगाहते इति अङ्गीकरणीयम्। एवञ्च गङ्गापदजन्यबोधविषयत्वप्रकारतानिरूपितेश्वरेच्छाविशेष्यत्वस्य तीरे सत्त्वात् तीरस्यापि गङ्गापदवाच्यत्वापत्तेरिति चेत्—

न। तत्पदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितेश्वरेच्छाविशेष्यत्वमेव तत्पदवाच्यत्वम्। अस्माकमप्रत्यक्षायाः ईश्वरेच्छायाः लोकव्यवहाराविरोधेनाकारः कल्पनीयः। तीरं गङ्गापदवाच्यमिति व्यवहारो नास्ति। अतः विषयता गङ्गापदजन्यबोधीया भवतु, विषयतावत्तीरं भवतु इत्याकारः तस्याः कल्प्यते। तावतापि तस्याः विद्यमानसर्वविषयकत्वनिर्वाहात्। तस्यां च तीरे गङ्गापदजन्यबोधविषयत्वं विषयतात्वेनैव प्रकारः, न तु तादृशविषयतात्वेन। तथा च गङ्गापदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वस्य तीरे अभावात् न तीरस्य गङ्गापदवाच्यत्वापत्त्या लक्षणोच्छेदप्रसङ्गः॥

ननु, तथापि आयुर्जनकस्य वैदिकायुःपदवाच्यत्वापत्तिर्दुर्वारा। ईश्वरकर्तृके वेदे 'आयुर्घृतम्' इति श्रूयते। तत्र आयुःपदात् आयुर्जनकस्य बोधो भवति। ततश्च तत्कर्तुरीश्वरस्य 'आयुःपदमिदं आयुर्जनकं बोधयतु' इत्याकारिका 'आयुर्जनकः एतदायुःपदजन्यबोधविषयो भवतु' इत्याकारिका वा बुबोधयिषा वाच्या। तस्याञ्च आयुर्जनकांशे आयुःपदजन्यबोधविषयतात्वेन तादृशविषयत्वं प्रकार इति आयुःपदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतायाः आयुर्जनके सत्त्वादिति चेत्—

न। एतदनुरोधेन इदन्त्वानवच्छिन्नपदविषयताघटितनिरुक्तविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यताया एव पदशक्यत्वरूपत्वं स्वीक्रियते। घटः घटपदजन्यबोधविषयो भवतु इतीच्छायां घटपदमिदन्त्वेन न भासते इति इदन्त्वानवच्छिन्नपदविषयताघटितनिरुक्तविषयतात्वावच्छिन्नप्रकारतामादाय घटादेः घटादिपदवाच्यत्वम्। वेदे सर्वत्र आयुःपदात् आयुर्जनकस्याबोधात् ('आयुर्घृतम्' इति वाक्यघटकं) 'आयुःपदमिदमायुर्जनकं बोधयतु' इत्याकारिका बुबोधयिषा

वाच्या । एवञ्च तदीयायुःपदविषयता इदन्त्वावच्छिन्नेति, इदन्त्वानवच्छिन्नपदविषयताघटितनिरुक्तविशेष्यत्वस्य आयुर्जनके विरहेण नायुर्जनकस्य वैदिकायुःपदवाच्यत्वापत्तिः ॥

एवञ्च सर्वस्मिन्नपि पक्षे अवश्यज्ञेयः क्लृप्तः संकेत एव समयापरपर्यायः पदतदर्थसम्बन्धः । आधुनिकसङ्केतः परिभाषा । नित्यः ईश्वरेच्छारूपः सङ्केतः शक्तिः इति व्यवस्थापयन्ति ॥

इति पण्डितराजेन सुब्रह्मण्यशास्त्रिणा विरचितायां

शाब्दतरङ्गिण्यां द्वितीयस्तरङ्गः ॥

48947

## अथ तृतीयस्तरङ्गः

सेयमभिधाशक्तिः पदवृत्तिरेव, न पदसमुदायात्मकसमासादिवृत्तिरपि । तद्घटकपदैरेव वृत्त्या विवक्षितार्थबोधसंभवेन अनन्तसमासपदानां तत्तदर्थे शक्तिकल्पनायां मानाभावात् गौरवाच्च ।

अत्राहुः एकार्थीभाववादिनो वैयाकरणाः —

चित्रगुः इत्यादेः समासस्य चित्रगोस्वामिनि शक्तिं विना तद्बोधो न संभवति । तथाहि—अत्र गोपदस्य गोस्वामिनि लक्षणा, गवि चित्रपदार्थस्य अभेदेनान्वयः इति न संभवति, पदार्थस्य पदार्थैकदेशेन (पदजन्योपस्थितिप्रकारेण) अन्वयस्याव्युत्पन्नत्वात् । नापि गोपदस्य शक्त्या गौः, लक्षणया स्वामी चार्थः । गोः पदार्थत्वात् न तत्र चित्रपदार्थस्याभेदान्वये व्युत्पत्तिविरोधः इति युक्तम् । युगपत् वृत्तिद्वयविरोधात् । अतः गोपदस्य चित्रगोस्वामिनि लक्षणा, चित्रपदं तात्पर्यग्राहकमिति वक्तव्यम् । तच्च न युक्तम् । यतः चित्रपदस्य तात्पर्यग्राहकत्वे बहुव्रीहिसमासस्यैवासंभवः । 'अनेकमन्यपदार्थे' (पा. सू. 2-2-24) इति बहुव्रीहिविधायकं सूत्रम् । अन्यपदार्थे विद्यमानमनेकं सुबन्तं समस्यते, स बहुव्रीहिसंज्ञकः इति तदर्थः । अत्र विद्यमानत्वं प्रतिपादकत्वम् । चित्रपदस्य चित्रगोस्वामिरूपान्यपदार्थप्रतिपादकत्वाभावे अनेकसुबन्तस्य तत्प्रतिपादकत्वाभावेन तत्सूत्राप्रवृत्तेः । समासप्रयोजकसामर्थ्याभावाच्च । एकार्थीभावानङ्गीकारे तत्पदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वरूपमेकवाक्यत्वमेव सामर्थ्यं वक्तव्यम् । तच्च न संभवति, चित्रगुपदजन्यबोधीयचित्रविषयतायाः चित्रपदप्रयोज्यत्वाभावेन गोपदस्य चित्रपदेन एकवाक्यत्वविरहात् ।

चित्रगुः इत्यत्र गोपदस्यैव चित्रगोस्वाम्यर्थकत्वे, घटः इत्यत्रापि अन्त्यवर्णस्यैव घटादिरूपार्थवाचकतापत्तिश्च । न च केवलाकारश्रवणे घटबोधो न जायते इति न तन्मात्रस्य वाचकत्वमिति वाच्यम् । घकारादिपूर्वपूर्ववर्णानां तात्पर्यग्राहकत्वाङ्गीकारेणादोषात् । तस्मात् चित्रगुः इत्यादौ गोपदस्य चित्रगोस्वामिनि लक्षणां स्वीकृत्य, चित्रपदस्य तात्पर्यग्राहकत्वाङ्गीकारो न समञ्जसः ॥

एव प्राग्रोदको ग्राम इत्यत्र विना शक्तिं उदककर्तृकप्राप्तिकर्मरूपार्थबोधो न सभवति। न च उदकशब्दस्यैव निरुक्तार्थे लक्षणाया स्वीकारान्नानुपपत्तिरिति वाच्यम्। तात्पर्यग्राहकपदस्य स्ववाच्यार्थघटितार्थे लक्षणातात्पर्यग्राहकत्वमिति नियम। चित्रगु इत्यत्र चित्रपदस्य स्ववाच्यचित्रघटिते चित्रगोस्वामिनि गोपद-लक्षणातात्पर्यग्राहकत्वदर्शनात्। तस्य नियमस्य भङ्गापत्ति उदकपदलक्ष्यार्थे उदककर्तृकप्राप्तिकर्मणि, तात्पर्यग्राहकप्राप्तपदार्थस्य प्राप्तिकर्तुरघटकत्वात्। प्रकृतस्थले व्युत्पत्त्यन्तरकल्पने च समासशक्तिकल्पनस्यैवोचितत्वात्।

एव, पञ्चगवधन इत्यत्र धनशब्दस्यैव पञ्चगवामित्रधनस्वामिनि लक्षणा स्वीकृत्य, पूर्वतनभागस्य तात्पर्यग्राहकत्वाङ्गीकारे, पञ्चपदार्थगोपदार्थयोरभेदान्वय-बोधविरहेण पञ्चगोपदयो॰ सामानाधिकरण्याभावेन कर्मधारयत्वाभावात् टच् न स्यात्। अत समुदायशक्ति स्वीकरणीया॥

एव राजपुरुष इत्यत्र शक्ति विना गतिविरह। तथाहि राजपदलक्ष्या-र्थस्य राजसम्बन्धिन अभेदेन पुरुषनामार्थे अन्वयो न सभवति। तण्डुलस्य स्वकर्मकत्वसम्बन्धेन पाके अन्वयतात्पर्येण तण्डुल पचतीति प्रयोगवारणाय प्राति-पदिकार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धिं प्रति विशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थिते कारणताया स्वीकरणीयतया, धात्वर्थे पाके इव नामार्थे पुरुषेऽपि विशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितिरूपकारणबाधात्। प्रातिपदि-कार्थ सर्वोऽपि प्रत्ययार्थे एवान्वेति। शुभ्रेण तण्डुलेन इत्यत्रापि शुभ्रपदार्थ प्रथमार्थे अभेदे एवान्वेति। नाभेदेन तण्डुलनामार्थे। चैत्र इत्यत्रापि नामार्थ चैत्र प्रथमार्थे प्रातिपदिकार्थे एवान्वेति।

एव राजपदलक्ष्यस्य राजसम्बन्धिन पुरुषपदार्थे अभेदान्वये, राजपुरुष-पदयो समानाधिकरणत्वेन कर्मधारयत्वापत्ति, राज्ञ पुरुष इति विवरणवाक्य-समानार्थकत्वाभावापत्तिश्च। विवरणवाक्येन राजस्वत्ववान् पुरुष इत्येव बोधो-दयात्। न चेष्टापत्ति। विग्रहवाक्यस्य समासशक्तिनिर्णायकत्वानुपपत्ते।

राजपदस्य राजसम्बन्धे लक्षणा इति मणिकारमताश्रयणे च, विरुद्ध-विभक्तिरहितप्रातिपदिकार्थयो अभेदान्वयस्य व्युत्पत्तिसिद्धत्वेन राजसम्बन्धामिन्न पुरुष इति बोधप्रसङ्ग॥

एवं, उपकुम्भम् इत्यत्र कुम्भपदस्य कुम्भसमीपे लक्षणा। उपपदं तात्पर्यग्राहकमिति न युज्यते। प्रणमतीत्यादौ प्रशब्दद्योत्यस्य प्रकर्षस्य धात्वर्थनमनविशेषणतया अन्वयबोधात्, द्योत्यार्थविशेषणकशाब्दबुद्धावेव द्योत्यार्थोपस्थितेः हेतुत्वात् उपशब्दद्योत्यस्य सामीप्यस्य कुम्भविशेष्यतया बोधासंभवात्। द्योत्यार्थविशेष्यकबोधे द्योत्यार्थोपस्थितेः हेतुत्वान्तरकल्पने गौरवात्।

तथा च विवक्षितार्थबोधान्यथानुपपत्त्या समासे शक्तिः सिद्ध्यति॥

किञ्च, समासस्य अशक्तत्वे चित्रगुमानयेत्यादौ द्वितीयार्थकर्मत्वेन चित्रगोस्वामिन अन्वयो न स्यात्। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः। प्रकृतित्वं प्रत्ययविधानावधितापर्याप्त्यधिकरणत्वम्। नतु स्वरूपसंबन्धेन तादृशावधिताश्रयत्वम्। तथा सति दण्डिनं पश्य इत्यत्र द्वितीयार्थविषयत्वस्य दण्डपदार्थेनान्वयापत्तेः। दण्डपदस्यापि स्वरूपसंबन्धेन निरुक्तप्रकृतित्वाश्रयत्वात्। प्रकृत्यर्थत्वं च न केवलं प्रकृतिजन्योपस्थितिविषयत्वम्। तथा सति 'घटं पश्य' इति वाक्यात् आकाशविषयकदर्शनान्वयबोधापत्तेः। द्वितीयाप्रकृतिघटपदात् समवायेनोपस्थितस्याकाशस्य प्रकृत्यर्थत्वात्। अपि तु वृत्त्या प्रकृतिजन्योपस्थितिविषयत्वम्। घटपदात् वृत्त्या आकाशस्यानुपस्थितत्वान्न दोषः। तथा च प्रकृते द्वितीयाप्रकृतिः चित्रगुपदमेव, न गोपदम्। चित्रगोस्वामी च गोपदस्यार्थः न वृत्त्या प्रकृत्यर्थः इति तेन द्वितीयार्थान्वयानुपपत्तिः।

न च संनिहितपदार्थनिष्ठविषयतानिरूपितविषयतासंबन्धेन शाब्दबुद्धिं प्रति प्रत्ययजन्योपस्थितेः विशेष्यतासंबन्धेन कारणतायाः स्वीकारात् द्वितीयाविभक्तिसंनिहितगोपदार्थेन द्वितीयार्थान्वयसंभवः इति वाच्यम्। उपकुम्भं पश्य इत्यादौ प्राचीननैयायिकमते कुम्भपदलक्ष्यकुम्भसंबन्धिना अभेदेनान्वितस्य उपपदार्थसमीपस्य द्वितीयार्थान्वयेन, उपपदस्य कुम्भपदेन व्यवधानात् व्यभिचारात् निरुक्तकार्यकारणभावासंभवात्। न च समासोत्तरप्रत्ययस्य समस्यमानपदार्थान्वितस्वार्थबोधकत्वव्युत्पत्तिः स्वीक्रियते इति समासघटकगोपदस्यार्थेन विभक्त्यर्थान्वयः संभवत्येवेति वाच्यम्। प्रत्ययानामिति क्लृप्तव्युत्पत्तिं परित्यज्य, समासोत्तरेत्यादिव्युत्पत्त्यन्तरकल्पने समासशक्तिकल्पनस्यैव युक्तत्वात्॥

चित्रगुः इति सुबन्तपदसाधुत्वायापि समासे शक्तिस्वीकारः आवश्यकः। प्रातिपदिकोत्तरमेव सुप् विधीयते। अर्थवत एव शब्दस्य प्रातिपदिकत्वम्। 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' (पा. सू. 1-2-45) इति सूत्रात्। अर्थवत्त्वं च वृत्तिमत्त्वम्। चित्रगुपदस्य शक्त्यनङ्गीकारे अर्थवत्त्वाभावेन प्रातिपदिकसंज्ञाया अभावेन तदुत्तरं सुबुत्पत्तिर्न स्यात्। न च शक्त्यभावेऽपि लक्षणया अर्थवत्त्वं संभवतीति वाच्यम्। बोध्यसंबन्धो लक्षणेति स्वीकुर्वतां मीमांसकानां मते तत्संभवेऽपि शक्यसंबन्धो लक्षणेति वादिनां नैयायिकानां मते तदसंभवात्। वाक्ये शक्तेरभावेन समासात्मकवाक्यस्य शक्याप्रसिद्ध्या शक्यसंबन्धरूपलक्षणाया अप्रसिद्धेः। तस्मात् समासस्य प्रातिपदिकसंज्ञासिद्धये शक्तिस्वीकार आवश्यकः॥

अपि च, समासस्याशक्तत्वे पङ्कजपदस्यापि पद्मत्वावच्छिन्ने शक्तिर्न स्यात्, तद्घटकपदैरेव पङ्कजनिकर्तुः पद्मस्य बोधसंभवात्। न च अवयवशक्त्या पङ्कजनिकर्तृत्वेन बोधसंभवेऽपि पद्मत्वेन रूपेण बोधः विना समुदायशक्तिं न निर्वहतीति वाच्यम्। समासे इव तत्रापि लक्षणया पद्मत्वविशिष्टबोधसंभवात्। तस्मात् पङ्कजपदात् पद्मत्वविशिष्टोपस्थितये तत्पदस्य तत्र शक्तिरिव समासपदानामपि तत्र तत्रार्थे शक्तिरावश्यकी। तदुक्तम्—'समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्।' इति॥

किञ्च, ब्राह्मणः पण्डित इति वाक्यात् ब्राह्मणोद्देश्यकाभेदसंसर्गकपण्डितविधेयको बोधो जायते। उद्देश्यस्य विधेयस्य च पदाभ्यां पृथगुपस्थितेः। यदि न समासे शक्तिः तदा पण्डितब्राह्मण. इति समासादपि तथा बोधापत्तिः। तथान्वयबोधप्रयोजिकायाः तयोः पृथगुपस्थितेः सत्त्वात्। समासशक्तिस्वीकारे तु तयोः संसृष्टतयैवोपस्थितत्वात्, पृथगुपस्थितेरभावात् न तथान्वयबोधः॥

अतएव 'वषट्कर्तुः प्रथमभक्षः' इत्यत्र भक्षोद्देशेन प्राथम्यविधानं न संभवति, एकप्रसरताभङ्गापत्तेः इति मीमांसकानां सिद्धान्तोऽपि संगच्छते। समासस्यावाचकत्वे उद्देश्यविधेययोः भक्षप्राथम्ययोः पृथगुपस्थितेः सत्त्वेन भक्षोद्देश्यकप्राथम्यविधेयकबोधसंभवेन तथा विधानसंभवात्। समासशक्तिस्वीकारे तु पृथगुपस्थितेः तथान्वयबोधप्रयोजिकायाः विरहेण, तादृशबोधासंभवात् प्राथम्यविशिष्टभक्षविधानमुक्तं संगच्छते॥

अपि च, राज्ञि ऋद्धाभेदान्वयतात्पर्येण ऋद्धस्य राजपुरुषः इति प्रयोगो न प्रामाणिकः। तदप्रामाणिकत्वं च एकार्थीभाववादिमते, घटपदार्थैकदेशघटत्वे नित्यत्वान्वयतात्पर्येण नित्यो घटः इति प्रयोगवारणाय अवश्यं स्वीकरणीयायाः 'पदार्थः पदार्थेनान्वेति, न तदेकदेशेन' इति व्युत्पत्तेर्विरोधादेव सिद्धम्, राज्ञः राजपुरुषपदार्थैकदेशत्वेन तत्र ऋद्धपदार्थाभेदान्वयासंभवात्। तथा च न्याय-सिद्धस्यार्थस्यानुवादकमेव 'सविशेषणानां वृत्तिर्न, वृत्तस्य वा विशेषणयोगो न' इति वार्तिकम्। नच समासशक्त्यनङ्गीकारेऽपि राजपुरुषः इत्यत्र राजपदस्य राज-संबन्धिलक्षकत्वेन राज्ञः राजपदार्थैकदेशत्वात् तत्र ऋद्धाभेदान्वयस्य निरुक्तव्युत्पत्ति-विरुद्धत्वात् तद्वाक्याप्रामाणिकत्वं सिद्धमेवेति वाच्यम्। अलुक्समासे विभक्तेः श्रूयमाणत्वेन तदर्थान्तर्भावेण पूर्वपदलक्षणायां प्रमाणाभावात्, शोभने वनेचरः, विरूपाया दास्याः पुत्रः, मिताया वाचस्पतिः इत्यादौ वनादीनां पदार्थैकदेशत्वा-भावात् तत्र शोभनाद्यभेदान्वये निरुक्तव्युत्पत्तिविरोधविरहेण 'सविशेषणानाम्' इति वार्तिकबलेनैव निरुक्तवाक्यानामप्रामाण्यस्योपपादनीयतया तद्वार्तिकस्य विधित्वकल्पने गौरवं व्यपेक्षापक्षे। एकार्थीभावपक्षे तु अलुक्समासेऽपि शक्तिरेवेति न्यायसिद्धार्थानुवादकमेव तत् वार्तिकमिति लाघवम्॥

एवं, एकार्थीभावानङ्गीकारे, कदाचित् राज्ञः पुरुषः इति, कदाचिच्च राजपुरुषः इति समासश्च 'विभाषा' (पा. सू. 2-1-11) सूत्रेणैवोपपादनीयः, व्यपे-क्षायाः समासव्याससाधारणत्वादिति तत्सूत्रस्य विधित्वकल्पनागौरवम्। वैयाकरण-नये तु एकार्थीभावविवक्षायां समासस्य, व्यपेक्षाविवक्षायां व्यासस्य च सिद्धत्वेन विभाषासूत्रस्य अनुवादत्वमेवेति लाघवम्। अतोऽपि समासे शक्तिः स्वीकरणीयेति॥

**व्यपेक्षावादिनो नैयायिकास्तु—**

समासे शक्तिग्राहकप्रमाणाभावेन अनन्तसमासपदानां अप्रामाणिकानन्त-शक्तिकल्पना न युक्ता। नच अर्थविशेषे द्वन्द्वादिविधायकं 'चार्थे द्वन्द्वः' (पा. सू. 2-2-29) इत्यादि सूत्रमेव शक्तिग्राहकमस्तीति वाच्यम्। अर्थविशेषबोधकत्वं द्वन्द्वसंज्ञा चेत्युभयविधाने वाक्यभेदापत्तेः, न तत्सूत्रेण अर्थविशेषबोधकत्वमपि विधीयते। अपितु द्वन्द्वादिसंज्ञामात्रमिति वैयाकरणैरेव प्रपञ्चितत्वात्॥

नच शक्त्यभावे विवक्षितार्थबोधानुपपत्तिः शङ्कनीया, तद्घटकपदवृत्त्यैव तत्सम्भवात्।

चित्रगु इत्यादौ गोपदस्यैव चित्रगोस्वामिलक्षकत्वे बहुव्रीहिसंज्ञैव न स्यादिति न युज्यते। यत अन्यपदार्थबोधप्रयोजकत्वरूप अन्यपदार्थे विद्यमानत्व चित्रपदस्यापि सम्भवति, चित्रगोस्वामिविषयकशाब्दबोधे चित्रपदगोपदयो समभिव्याहारस्य आकाङ्क्षात्वेन चित्रपदस्य अन्यपदार्थबोधौपयिकाकाङ्क्षाघटकत्वात्। अन्यपदार्थवाचकत्वञ्च भवन्मतेऽपि अनेकसुबन्ताना न सम्भवति। समुदायस्यैव वाचकत्वेन चित्रपदस्य तदवाचकत्वात्। अत अन्यपदार्थवाचकघटकत्वात् अनेकसुबन्ताना अन्यपदार्थे वर्तमानत्वमुपपादनीयम्। अस्माभिस्तु तद्बोधौपयिकाकाङ्क्षाघटकत्वाद्यदिति को विशेष ॥

चित्रपदस्य गोपदलक्षणातात्पर्यग्राहकत्वे चित्रपदगोपदयो एकवाक्यतालक्षणस्य व्यपेक्षासामर्थ्यस्याभावेन समास एव न स्यादित्यपि न।

चित्रपदजन्यचित्रोपस्थिति समासजन्यचित्रगोस्वामिविषयकशाब्दबोधे न कारणमिति, यद्यपि शाब्दबोधीयचित्रविषयता चित्रपदजन्योपस्थितिद्वारा न चित्रपदप्रयोज्या। तथापि चित्राभिन्नगोस्वामिविषयकशाब्दबोधस्य चित्रपदगोपदयो समभिव्याहाररूपाकाङ्क्षाज्ञानजन्यतया तादृशशाब्दबोधीयचित्रविषयता बोधौपयिकाकाङ्क्षाघटकचित्रपदप्रयोज्या। एव गोविषयतापि गोपदप्रयोज्येति, चित्रपदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्व गोपदे वर्तते इति न सामर्थ्यस्यानुपपत्ति ॥

यत्तु घटादिपदेऽपि चरमवर्णस्यैव वाचकत्वापत्तिरिति। तन्न।

चरमवर्णमात्रस्य घटरूपार्थे सङ्केतित्वाभावेन घटावाचकत्वात्, घटपदस्यैव तत्रार्थे सङ्केतितत्वेन घटवाचकत्वात्। समासघटकचित्रराजादिपदाना तु स्वस्वार्थे सङ्केतिताना वाचकत्वेन क्लृप्ताना लक्षणाकल्पन, तत्रापि प्रत्ययार्थान्वयसौलभ्याय चरमपदे तत्कल्पनमिति विशेषात्। किञ्च, अन्त्यवर्णस्य वाचकत्वे पूर्वपूर्ववर्णाना तात्पर्यग्राहकत्वमिति कोऽर्थ। चित्रगुरित्यादौ चित्रपदशक्यार्थोपस्थित्यनन्तर गोपदलक्षणातात्पर्यग्रहवत् घकारादिवर्णजन्योपस्थित्यनन्तर चरमवर्णवाचकता-

तात्पर्यज्ञानादीनामसंभवात् । घकारादिशक्त्याप्रसिद्धया तदुपस्थितेरभावात् । अपितु घकारोत्तराकारोत्तरटकारोत्तराकारस्य वाचकत्वं न केवलाकारस्येत्यर्थो वाच्यः तच्च नानिष्टम् । पौर्वापर्यविशिष्टचरमवर्णस्यैव पदत्वेन तस्यैवार्थवाचकत्वात् ॥

नच प्राप्तोदको ग्रामः इत्यत्र प्राप्तपदस्य उदककर्तृकप्राप्तिकर्मणि उदकपदलक्षणातात्पर्यग्राहकत्वे, स्ववाच्यार्थघटितार्थे लक्षणातात्पर्यग्राहकत्वव्युत्पत्तिविरोधः इति वाच्यम् ।

उदकपदलक्ष्यार्थे धात्वर्थप्राप्तेः क्तप्रत्ययार्थकर्तुश्च घटकत्वेन व्युत्पत्तिविरोधविरहात् । न च प्राप्तेति भागस्य पदसमुदायत्वेनावाचकत्वात् स्ववाच्यार्थाप्रसिद्ध्या निरुक्तव्युत्पत्तिविरोध इति वाच्यम् । दीर्घत्रब्रहुव्रीहिसमासादावपि प्रत्ययाव्यवहितपूर्वपदे लक्षणां, तत्पूर्वतनपदसमुदायस्य तात्पर्यग्राहकतां च स्वीकुर्वाणानां नैयायिकानां मते, तात्पर्यग्राहकभागस्य स्ववाच्यार्थघटितार्थे लक्षणातात्पर्यग्राहकत्वव्युत्पत्तेरसिद्धेः । अपितु तात्पर्यग्राहकस्य स्वबोध्यघटकार्थघटितेऽर्थे लक्षणातात्पर्यग्राहकत्वनियमः । स चाव्यभिचरितः । प्रकृते प्राप्तेति भागबोध्यप्राप्तिकर्तुः उदकपदलक्ष्यार्थाघटकत्वेऽपि बोध्यार्थघटकप्राप्तेः तादृशकर्तुश्च तत्र घटकत्वात् । चित्रगुः इत्यादावपि चित्रपदबोध्यार्थघटकत्वस्य चित्रत्वविशिष्टसाधारण्येन तद्घटिते, बोध्यघटकचित्रत्वघटिते वा चित्रगोस्वामिनि लक्षणातात्पर्यग्राहकत्वात् । एवमनुगतव्युत्पत्तिसंभवे चित्रगुः इति स्थलमात्रसाधारणव्युत्पत्तिं परिकल्प्य तस्येतरसाधारण्याभावेन व्युत्पत्त्यन्तरकल्पनाप्रयुक्तगौरवापादनमसङ्गतम् ॥

नच पञ्चगवधनः इत्यादौ पञ्चगोपदयोः सामानाधिकरण्यं न स्यात्, तदर्थयोरभेदान्वयविरहादिति वाच्यम् ।

अभेदेन तत्पदार्थान्वितस्वार्थबोधकत्वं स्वस्य तत्पदसामानाधिकरण्यम् । तत्पदार्थत्वञ्च तत्पदप्रयोज्यविषयताश्रयत्वम् । एवं स्वार्थत्वमपि । निरुक्तशाब्द-

---

**टिप्पणी—**

**चित्रत्वविशिष्टसाधारण्येनेति** । स्वात्रिपयकप्रतीत्यविषयतत्कत्वरूपघटकताशरीरे स्वभिन्नत्वस्यानिवेशादिति भावः ।

बोधीयपश्चादिविषयतया तात्पर्यग्रहद्वारा, साक्षादेव आकांक्षाघटकतया वा चित्रादिपदानां प्रयोजकत्वात् निरुक्तसामानाधिकरण्यस्य तत्पदयोरबाधितत्वात् ॥

नच राजपुरुषः इत्यत्र राजपदलक्ष्यार्थराजसंबन्धिनः अभेदेन पुरुषपदार्थे अन्वयो न संभवति, प्रातिपदिकार्थप्रकारकशाब्दबोधे प्रत्ययजन्योपस्थितेर्हेतुत्वादिति वाच्यम्। तण्डुलकर्मकपाकान्वयबोधे द्वितीयान्ततण्डुलपदपचधातुसमभिव्याहारस्य आकांक्षात्वेन, तण्डुलः पचति इत्यत्र निरुक्ताकांक्षाया अभावादेव तादृशबोधापत्तेरसंभवेन, तद्वारणाय निरुक्तकार्यकारणभावकल्पनस्यानावश्यकत्वात् ॥

अस्तु वा तादृशः कार्यकारणभावः। तथापि तत्र कार्यतावच्छेदककोटौ भेदसंबन्धावच्छिन्नप्रकारता निवेशनीया। अन्यथा नीलो घटः इत्यत्र घटपदार्थे नीलपदार्थस्य अभेदान्वयबोधोदयेन व्यभिचारात्। नच तत्रापि नीलपदोत्तरप्रथमार्थे अभेदे एव नीलान्वयः इति अभेदप्रकारकस्यैव बोधस्योपगमेन न व्यभिचार इति वाच्यम्। अभेदस्य प्रकारतया भाने अभेदीयसंबन्धयोरपि शाब्दबोधे भानेन अधिकावगाहियोग्यतातात्पर्यज्ञानादीनां तादृशशाब्दबोधसामग्रीकुक्षौ निवेशनीयतया, तत्सामग्र्याः भिन्नविषयकप्रत्यक्षादिप्रतिबन्धकतायामवच्छेदकगौरवम्।

नच नीलतादात्म्याभाववान् घटः सुन्दरः इति विशिष्टे वैशिष्ट्यावगाहिप्रत्यक्षे विशेष्यतावच्छेदकप्रकारकज्ञानविधया नीलतादात्म्याभाववान् घटः इति ज्ञानं कारणम्। तच्च नीलतादात्म्यवान् घटः इत्याकारकाभेदप्रकारकशाब्दबोधे बाधज्ञानविधया प्रतिबन्धकम्। अतः निरुक्तज्ञानाभावघटिता शाब्दसामग्री। निरुक्तज्ञानघटिता च निरुक्तप्रत्यक्षसामग्री। अतः तयोः समावेशो न संभवति। एवञ्च नीलतादात्म्यवान् घटः इति शाब्दबोधसामग्रीकाले निरुक्तप्रत्यक्षसामग्र्या अभावादेव तादृशप्रत्यक्षापत्तेरसंभवात् निरुक्तप्रत्यक्षे अभेदप्रकारकशाब्दसामग्र्याः प्रतिबन्धकत्वं न कल्पनीयमिति लाघवम्। अभेदसंसर्गकबोधाङ्गीकारे तु, नीलतादात्म्याभाववान् घटः इति ज्ञानस्य तादृशबोधं प्रति बाधज्ञानत्वाभावात्, शाब्दप्रत्यक्षसामग्र्योः समावेशेन अभेदसंसर्गकशाब्दसामग्रीकाले तादृशप्रत्यक्षापत्तेः संभवेन तद्वारणाय शाब्दसामग्र्याः निरुक्तप्रत्यक्षप्रतिबन्धकत्वं कल्पनीयमिति

गौरवम्। अतः अभेदप्रकारकबोध एव स्वीकर्तुमुचित इति वाच्यम्। अभेदस्य विशेषणविभक्त्यर्थत्वे प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमौ इति न्यायेन घटो न नीलः इति वाक्यात् नीलतादात्म्याभावस्यैव घटे बोधः स्यात्, न नीलभेदस्य। नञ्-घटितनिरुक्तवाक्यानां च नीलादिभेदबोधकत्वं सर्वानुभवसिद्धम्। अतः निरुक्तलाघव-मपि बाधित्वा नञ्युक्तवाक्यजन्यभेदानुभव एव विशेषणविभक्तेरभेदार्थकत्वमपाकरोति। तादात्म्यस्य संसर्गतया भाने तु प्रतियोग्यभावान्वयौ इति न्यायेन तादात्म्येन नीलाभावः, न नीलः इति वाक्यात् बोध्यते। स एवान्योन्याभावः इति भेदबोधकत्वं निर्वहति। अयंच पक्षः वैयाकरणानामपि संमत एव, अनभिहितसूत्रे 'यथा ईश्वरसुहृदः स्वयं निर्धना अपि तदीयधनेनैव तत्फलभाजः, एवं गुणा अपि' इति कैयटोक्तेः। ईश्वरः—राजा, गुणाः—विशेषणपदानि। ईश्वर-स्थानापन्नघटपदसुहृत्त्वं नीलपदस्य अभेदेन तदर्थान्वयित्वम्। तस्य निर्धनत्वं स्वार्थान्वय्यर्थकविभक्त्यप्रकृतित्वम्। चैत्रः इत्यादौ च प्रातिपदिकार्थस्य चैत्रस्य प्रथमार्थे चैत्रे अभेदेनान्वयो न संभवति, तथान्वयप्रयोजिकायाः विरूपोपस्थिते-रभावात्।

तथा च प्रातिपादिकार्थप्रकारकेति कार्यकारणभावस्य नीलो घटः इत्यत्र व्यभिचारात् कार्यतावच्छेदककोटौ भेदसंबन्धावच्छिन्नप्रकारता निवेशनीया। एवञ्च प्रातिपादिकार्थनिष्ठभेदसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबुद्धिं प्रति प्रत्ययजन्योपस्थितिः विशेष्यतासंबन्धेन कारणमिति फलितम्। राजपुरुषः इत्यत्र च राजपदलक्ष्यार्थराजसंबन्धिनः अभेदेनैव पुरुषनामार्थे अन्व-योपगमेन तत्र प्रत्ययजन्योपस्थितेरनपेक्षणान्नानुपपत्तिः॥

नच राजपदार्थपुरुषपदार्थयोरभेदान्वयबोधोपगमे राजपुरुषः इत्यस्य कर्म-धारयत्वापत्तिरिति वाच्यम्। विना लक्षणामभेदान्वयबोधजनकत्वस्यैव कर्मधारय-प्रयोजकसामानाधिकरण्यरूपत्वाङ्गीकारात्, तत्पुरुषस्थले च पूर्वपदलक्षणयै-वाभेदान्वयबोधोपगमात्। नच नीलघटः इति कर्मधारयेऽपि, नीलरूपे शक्तस्य नीलपदस्य तद्विशिष्टे लक्षणां स्वीकृत्यैवाभेदान्वयबोधनिर्वाहः इति नोक्तस्य कर्म-धारयप्रयोजकत्वमिति वाच्यम्। नीलः घटः इति व्यासेऽपि नीलपदस्य लाक्षणि-

कत्वेन लक्षणायाः सामासिकत्वाभावात्, विना सामासिकलक्षणामभेदान्वयबोध-जनकत्वस्यैव कर्मधारयप्रयोजकत्वात् ॥

अथवा, तत्तद्विभक्त्यन्तार्थविशिष्टे लक्षणां विना अभेदान्वयबोधप्रयोज-कत्वमेव कर्मधारयप्रयोजकसामानाधिकरण्यम् ।

नीलघटः इत्यत्र नीलपदस्य नीलविशिष्टे लक्षणायामपि विभक्त्यन्तार्थ[1]-विशिष्टे लक्षणाया अभावेन सामञ्जस्यात् । विशेषणपदोत्तरविभक्तेः साधुत्वमात्रार्थ-कत्वात् । राजपुरुषः इत्यादौ तत्पुरुषे तु राजपदस्य षष्ठ्यन्तराजपदार्थराज-स्वत्वविशिष्टे लक्षणायाः स्वीकारात् ।

यद्यपि घनश्यामः इत्यादौ घनशब्दस्य घनवृत्त्यसाधारणधर्मे लक्षणा । तस्य चाभेदेन श्यामपदार्थैकदेशश्यामरूपे अन्वयः । घनशब्दस्य लक्षकत्वे तस्य उपमानबोधकत्वाभावेन 'उपमानानि सामान्यवचनैः' (पा. सू. 2-1-55) इति समासो न स्यादिति तु न शङ्कनीयम् । प्राधान्येनोपमानबोधकत्वाभावेऽपि असाधारणधर्मनिष्ठाधेयत्वनिरूपकत्वेन उपमानघनबोधकत्वात् घनशब्दस्य । स्पष्टा चेयं रीतिः पुत्रीयतीति वाक्यजन्यबोधनिरूपणावसरे व्युत्पत्तिवादे । तथा च घनश्याम. इत्यत्रापि लक्षणयैवाभेदान्वयबोधः । तथापि घनपदस्य घनवृत्त्य-साधारणधर्मलक्षकस्य विभक्त्यन्तार्थविशिष्टे लक्षणाया अभावेन कर्मधारयप्रयोजकं सामानाधिकरण्यमस्त्येवेति बोध्यम् ।

एवञ्च राजपदलक्ष्यार्थाभेदान्वयोपगमेऽपि न तत्पुरुषस्य कर्मधारयत्वमापाद-यितुं शक्यते ॥

नच राजपदस्य संबन्धिलक्षकत्वे राज्ञः पुरुषः इति विग्रहवाक्यजन्यबोध-समानाकारबोधजनकत्वं समासस्य न स्यादिति वाच्यम् ।

चित्रगुः इत्यादिबहुव्रीहिस्थले व्यभिचारेण समासविग्रहवाक्ययोः समाना-कारबोधजनकत्वनियमाभावात्[1] । तत्र चित्राः गावः यस्य इति विग्रहवाक्येन

टिप्पणी—

अभेदातिरिक्तसंबन्धेषु भेदसंबन्धशब्दः नैयायिकैः परिभाषितः इति बोध्यम् ।

यादृशविशेषणविशेष्यभावापन्नविषयकः शाब्दबोधो जायते, तद्विपरीतविशेषण-विशेष्यभावापन्नपदार्थविषयकशाब्दबोधस्यैव समासेन जायमानत्वात् ।

विवरणविव्रियमाणवाक्ययोरपि समानाकारबोधजनकत्वनियमः नैकार्थीभाववादिनां मते, व्याकरणमधीते यः, वैयाकरणः इत्यत्र व्यभिचारात् । तत्र विवरणवाक्यात् वैयाकरणनये धात्वर्थाध्ययनविशेष्यकबोधस्य, विव्रियमाणपदात् व्याकरणाध्ययनकर्तृविशेष्यकबोधस्य च जायमानत्वात् । यदि,

'आख्यातं तद्धितकृतोर्यत्रार्थस्योपदर्शकम् ।
गुणप्रधानभावस्य तत्र दृष्टो विपर्ययः ॥'

इति **हर्युक्तेः** विवरणवाक्यादपि अध्ययनकर्तुरेव बोधः इत्युच्यते । तदा तदीय-सिद्धान्तसिद्धस्य वाक्यमात्रे धात्वर्थमुख्यविशेष्यकबोधजनकत्वनियमस्य भङ्गः । एवं कृष्णसर्पः, गीष्पतिः, धनाधिपः इत्यादौ समासव्यासयोरेकाकारबोधजनकत्वं नास्ति । कृष्णसर्पपदात् कृष्णसर्पत्वरूपजातिविशेषावच्छिन्नस्य, कृष्णः सर्पः इति वाक्यात् कृष्णाभिन्नसर्पस्य च बोधात् । तस्मात् निरुक्तनियमे मानाभावात् न तदनुपपत्त्या राजपदस्य राजसंबन्धिलक्षकत्वानुपपत्तिः ॥

राजपदस्य राजसंबन्धे लक्षणापक्षे तस्य पुरुषे अभेदेनान्वयः स्यात्, इत्यपि न ।

नामार्थयोरिति व्युत्पत्तेः समासस्थले संकोचेन राजसंबन्धवान् पुरुषः इति भेदान्वयबोधे बाधकाभावात् । इदं तु बोध्यम् । नामार्थयोरभेदान्वयव्युत्पत्तेः राजपदस्य राजसंबन्धिनि लक्षणां स्वीकृत्य तस्य पुरुषनामार्थे अभेदान्वयः **गदाधर-भट्टाचार्य**संमतः समीचीनः । समासस्थले निरुक्तव्युत्पत्तेः संकोचाङ्गीकारे, विनैव राजपदे लक्षणां, राजपदशक्यार्थस्य स्वत्वसंबन्धेन पुरुषनामार्थे अन्वयः **नव्य-नैयायिकसंमतः** साधीयान् । ननु राजपदस्य राजसंबन्धे लक्षणां स्वीकृत्य, नामार्थयोरिति व्युत्पत्तिसंकोचेन राजसंबन्धस्य पुरुषे भेदान्वयः इति ॥

नच उपकुम्भमित्यादौ कुम्भपदस्य कुम्भसमीपे लक्षणायां द्योत्यार्थोप-स्थितेः द्योत्यार्थविशेषणकबोधजनकत्वनियमभङ्ग इति वाच्यम् ।

प्रतिष्ठते इत्यत्र व्यभिचारेण तथा नियमाभावात्। तत्र हि स्थाधातोः गत्यभावोऽर्थः। प्रशब्देन तु गतिर्द्योत्यते। द्योत्यगतिश्च विशेष्यतया भासते। तथा च तत्र द्योत्यगतेरिव अत्र उपद्योत्यसामीप्यस्य कुम्भविशेष्यतया बोधे बाधकाभावात्। किञ्च, द्योतकत्वं तात्पर्यग्राहकत्वम्। तात्पर्यञ्च विषयविशेषघटितशाब्दबोधघटितमित्यननुगतम्। एवं द्योत्यत्वमपि। एवञ्च द्योत्यार्थविशेषणकबोधे द्योत्यार्थोपस्थितिः कारणमिति न अनुगतकार्यकारणभावः संभवति। अपितु पृथक् पृथगेव, प्रकर्षविशिष्टनमनविषयकशाब्दबोधं प्रति प्रशब्दसमभिव्याहृतनम-धातुलक्षणाग्रहजन्यप्रकर्षविशिष्टनमनोपस्थितिः कारणम्, कुम्भसमीपविषयकशाब्दबोधं प्रति उपपदसमभिव्याहृतकुम्भपदलक्षणाग्रहजन्यकुम्भसमीपोपस्थितिः कारणमिति रीत्या, इति नापूर्वकार्यकारणभावकल्पनागौरवम्।

तस्मात् समासघटकपदानां वृत्त्यैव विशिष्टार्थबोधसंभवात्, न विशिष्टार्थबोधान्यथानुपपत्त्या समासशक्तिः सिद्ध्यति॥

यत्तु, चित्रगुमानयेत्यादौ द्वितीयार्थान्वयानुरोधात् समासे शक्तिः सिद्ध्यतीति, तन्न।

प्रत्ययानां प्रकृतित्वाश्रयार्थान्वितस्वार्थबोधकत्वमेव स्वीक्रियते। गोपदस्य स्वरूपसंबन्धेन प्रत्ययविधानावधित्वरूपप्रकृतित्वाश्रयत्वात् तदर्थेन चित्रगोस्वामिना द्वितीयार्थकर्मत्वान्वयः संभवति। नच दण्डिनं पश्येत्यत्र दण्डे दर्शनकर्मत्वान्वयापत्त्या नायं पक्षो युक्तः इत्युक्तमेवेति वाच्यम्। संख्यातिरिक्तसुबर्थस्य प्रकृत्यर्थविशेष्यतया भाननियमात्, दण्डिनं पश्य इत्यत्र दण्डस्यैव द्वितीयार्थकर्मत्वे विशेषणतया अन्वयः आपादनीयः। तच्च न संभवति, दण्डपदार्थस्य इनिप्रत्ययार्थसंबन्धिविशेषणत्वेनोपस्थितत्वेन 'एकत्र विशेषणतयोपस्थितस्य अन्यत्र विशेषणतया अन्वयो न' इति व्युत्पत्तिविरोधात्। तथा च निरुक्तव्युत्पत्तिबलेन द्वितीयार्थान्वयः संभवति।

अथवा प्रत्ययानां संनिहितपदार्थान्वितस्वार्थबोधकत्वव्युत्पत्तिः स्वीक्रियते। निरुक्तस्थले गोपदस्य द्वितीयाविभक्तिसंनिहितत्वात् तदर्थेन चित्रगोस्वामिना

विभक्त्यर्थकर्मत्वान्वयो न विरुध्यते। उपकुम्भमित्यत्र नवीनमते विभक्तिसंनिहित-कुम्भपदस्यैव कुम्भसमीपे लक्षणास्वीकारान्न तत्र व्यभिचारः॥

वस्तुतस्तु, प्रकृतित्वं प्रत्ययत्वं चानुगताननतिप्रसक्तं दुर्वचम्। तथाहि—न तावत् प्रकृत्युत्तरत्वं प्रत्ययत्वम्, प्रकृतिपूर्वबहुजादिप्रत्ययेष्वव्याप्तेः। नापि उत्तरवृत्तित्वपूर्ववृत्तित्वान्यतरसंबन्धेन प्रकृतिविशिष्टत्वम्, प्रकृतिमध्यवर्तिनि अकच्-प्रत्यये अव्याप्तेः। प्रत्ययविधानावधित्वरूपप्रकृतित्वस्य प्रत्ययत्वघटितत्वेन प्रत्य-यत्वस्य च प्रकृतित्वघटितत्वेनान्योन्याश्रयाच्च। नापि प्रत्ययपदवाच्यत्वं तत्, तत्र ईश्वरसंकेते मानाभावात्। नापि पाणिनिसंकेतसंबन्धेन प्रत्ययपदवत्त्वम्, व्याकरणान्तरप्रणेतृपुरुषान्तरीयसंकेतसंबन्धेन प्रत्ययपदवत्त्वं पुरुषविशेषीयसंकेत-संबन्धेन घटादिपदत्त्वं चादाय विनिगमनाविरहात्। तथा च प्रत्ययत्वस्यानु-गतस्याभावात् प्रकृत्यर्थेत्यादिकस्य अनुगतकार्यकारणभावस्यासंभवेन, अर्थविशेषं निवेश्य, घटपदार्थविषयतानिरूपितविषयतासंबन्धेन शाब्दबोधं प्रति अम्प्रत्यय-जन्यकर्मत्वोपस्थितिः कारणमिति रीत्या, विशिष्य तत्र तत्र कार्यकारणभावो वाच्यः इति, चित्रगुमिति स्थले गोपदार्थचित्रगोस्वामिनिष्ठविषयतानिरूपितविषयता-संबन्धेन शाब्दबोधे अम्जन्यकर्मत्वोपस्थितिः विषयतासंबन्धेन कारणमित्यङ्गीकारे गौरवस्याभावात्। तस्मान्न प्रत्ययार्थान्वयानुरोधात् समासे शक्तिः सिद्ध्यति॥

नच समासस्य प्रातिपदिकसंज्ञासिद्धये शक्तिस्वीकार आवश्यक इति वाच्यम्।

अनन्तसमासपदानामप्रामाणिकानन्तशक्तिकल्पने गौरवात्, अर्थवत्सूत्रे अर्थवत्पदं वृत्तिमदविषयप्रतीत्यविषयार्थकं स्वीक्रियते। तथा च प्रातिपदिकसंज्ञा-प्रयोजकमर्थवत्त्वं वृत्तिमदविषयकप्रतीत्यविषयत्वं वृत्तिमत्तद्घटितोभयसाधारणमिति वृत्तिमद्घटितसमासस्य प्रातिपदिकसंज्ञा सिद्ध्यति।

अथवा, समासस्य अर्थवत्त्वाभावेन अर्थवत्सूत्राप्रवृत्तावपि 'कृत्तद्धित-समासाश्च' (पा. सू. 1-2-46) इति सूत्रेण प्रातिपदिकसंज्ञा सिद्ध्यति। अर्थवच्छब्द-स्वरूपस्य प्रातिपदिकसंज्ञामुक्त्वा, 'कृत्तद्धितसमासाश्च' इति सूत्रकरणेनैव समासो न वृत्तिमानिति स्पष्टं ज्ञायते। नच कृत्तद्धितसूत्रस्य विधायकत्वे

वाक्यस्य प्रातिपदिकसंज्ञाव्यवच्छेदः न स्यादिति वाच्यम् । पदार्थसंसर्गरूप-वाक्यार्थस्य आकाङ्क्षालभ्यत्वात्, वाक्ये तच्छक्तिग्राहकप्रमाणाभावाच्च, वाक्यस्यार्थ-वत्त्वाभावेन अर्थवत्सूत्राप्रवृत्त्या प्रातिपदिकसंज्ञाया अप्राप्तेः तद्व्यवच्छेदस्यानाव-श्यकत्वात् । एवं कृदन्ततद्धितान्तसमासानां पदसमुदायत्वेनार्थवत्त्वाभावात् पूर्व-सूत्रेण प्रातिपदिकसंज्ञाया अप्राप्तौ, कृत्तद्धितेति सूत्रेण प्रातिपदिकसंज्ञा विधीयते । नच हृत्, इयान् इत्यादीनां अर्थवत्त्वेन संज्ञा प्राप्तेति वाच्यम् । तयोरर्थवत्त्वेऽपि प्रथमस्य धातुत्वेन, द्वितीयस्य च प्रत्ययत्वेन, अधातुः अप्रत्ययः इति पर्युदासकरणेन संज्ञाया अप्राप्तत्वात् । नच कृत्तद्धितसूत्रस्य संज्ञाविधायकत्वे 'संज्ञाविधौ प्रत्यय-ग्रहणे तदन्तग्रहणं न' इति परिभाषया कृत्तद्धितान्तलाभो न सम्भवतीति वाच्यम् । परिभाषाया असार्वत्रिकत्वात् । नचैवमपि तद्धितान्तग्रहणे तद्धितपूर्वकस्य बहुपटुशब्दस्य संज्ञा न स्यादिति तद्धितविशिष्टस्य संज्ञा विधीयते इति वक्तव्यम् । तथा च मध्यस्थिततद्धितस्य पचतकि इति भागस्य प्रातिपदिकसंज्ञा स्यादिति वाच्यम् । सूत्रस्थतद्धितपदेन साव्यवहितोत्तरत्वसम्बन्धेन तद्धितविशिष्टप्रकृतिघटित-समुदायतद्धितान्तान्यतरस्य विवक्षणेन सामञ्जस्यात् । अकच्प्रकृतिभूतस्य पचतीति भागस्य तत्प्रत्ययोत्तरत्वाभावेन प्रथमदलस्य, तद्धितान्तत्वाभावेन द्वितीयदलस्य चाभावेन पचतकि इत्यत्रातिव्याप्तेरनवकाशात् । नच कृदन्तस्य संज्ञाविधाने 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति परिभाषया कारक-पूर्वकृदन्तस्य मूलकेनोपदंशेति भागस्य प्रातिपदिकसंज्ञापत्तौ 'सुपो धातुप्राति-पदिकयो' (पा सू 2-4-71) इति तद्घटकसुपो लोपापत्तिरिति वाच्यम् । परिभाषाया असार्वत्रिकत्वेनादोषात् । आकरादौ कृत्तद्धितसूत्रस्य नियमपरत्व-वर्णनं तु वाक्यशक्तिपक्षाभिप्रायेण ।

तस्मात् कृत्तद्धितसूत्रेण समासस्य प्रातिपदिकसंज्ञासिद्धेः न सुबन्तपद-साधुत्वाय शक्तिः स्वीकार्या ॥

नापि पङ्कजपदप्रतिबन्द्या समासशक्तिः सिद्ध्यति । पद्मत्वेन रूपेणोपस्थितये समुदायशक्तेस्तत्रावश्यकत्वात् । लक्षणया तन्निर्वाहासम्भवात् । तथाहि—न तावत् पङ्कजेति समुदायस्य पद्मत्वविशिष्टे लक्षणा, समुदायस्यावाचकत्वेन शक्या-

प्रसिद्धया तत्संबन्धरूपलक्षणाया असंभवात् । नापि डप्रत्ययस्य, प्रत्ययानां प्रकृत्यर्थानन्वितस्वार्थबोधकत्वस्याव्युत्पन्नत्वेन डप्रत्यये प्रकृतिभूतपदार्थानन्वित-पद्मत्वविशिष्टार्थबोधकत्वस्यासंभवात् ।

यदि च नैयायिकमते, यथा, कृतपाकः इति समासे पाककृतिमति न पाकपदस्य लक्षणा, घञन्तस्यावाचकत्वात् । नापि घञ्प्रत्ययस्य, प्रकृत्यर्थानन्वि-तार्थबोधकत्वस्याव्युत्पन्नत्वात् । अपितु पचधातोरेव तादृशार्थे लक्षणा, प्रत्ययानां प्रकृत्येकदेशार्थान्वितस्वार्थबोधकत्वस्वीकारान्न तत्र सुबर्थान्वये विरोधः । तथा, पङ्कजेत्यत्र पङ्कपदस्य तदुत्तरजनेर्वा पद्मत्वविशिष्टे लक्षणा संभवतीत्युच्यते ।

तदापि तत्र समुदायशक्तिरङ्गीकरणीया । पङ्कादिपदशक्तिज्ञानाभावेऽपि पङ्कजपदात् जायमानायाः पद्मत्वविशिष्टोपस्थितेः लक्षणया निर्वाहासंभवात्, शक्यार्थज्ञानाभावेन शक्यसंबन्धरूपलक्षणाग्रहासंभवात् । समासे तु समास-घटकपदशक्तिग्रहसत्त्वे एव विशिष्टार्थबोधो जायते इति लक्षणया निर्वाहः संभवति । समासशक्तिवादिमतेऽपि समासघटकप्रत्येकपदशक्तिज्ञानमपेक्षितम् । राजपुरुषः इति समासघटकराजपदस्य चन्द्रार्थकत्वज्ञानदशायां नृपपुरुषबोधानु-दयात् ।

अतएव एकार्थीभाववादिनां निषादस्थपत्यधिकरणविरोधपरिहारोऽपि संगच्छते । तथाहि—समासस्य शक्तत्वे, निषादस्थपतिशब्दस्य निषादाभिन्न-स्थपतौ निषादसंबन्धिस्थपतौ च शक्तत्वात् लक्षणाकल्पनादिगौरवानवकाशात्, लाघवात् कर्मधारयाश्रयणमिति सिद्धान्तविरोधः, इत्याशङ्कायाः परिहारः,

'पर्यवस्यच्छाब्दबोधाविदूरप्राक्क्षणस्थिते ।
शक्तिग्रहेऽन्तरङ्गत्वबहिरङ्गत्वचिन्तनम् ॥'

इति कारिकया अभिहितः । निषादस्थपतिशब्दस्य हर्यादिपदवत् नानार्थकत्वेन विधिवाक्यगततच्छब्दस्य तात्पर्यसन्देहे सति, समासघटकप्रत्येकपदशक्त्युप-स्थापितार्थातिरिक्ताविषयकत्वादन्तरङ्गः कर्मधारयीयशक्तिग्रहः । तदतिरिक्तार्थ-विषयकत्वेन तत्पुरुषीयशक्तिग्रहः बहिरङ्गः । अन्तरङ्गशक्तिग्रहे लाघवात् कर्म-

धारयसमास स्वीक्रियते इति परिहाराशय.। पदघटकवर्णानामिव समासघटकपदानामनर्थकत्वे उक्तपरिहारासंगति स्पष्टैव ॥

अतएव भूतपूर्वगत्याश्रयणक्लेशं विनैव महाबाहु इत्यत्र आत्व सिद्ध्यति। अन्यथा समासघटकपदस्यानर्थकत्वे 'अर्थवद्ग्रहणे नानर्थकस्य' इति परिभाषया 'आन्महत समानाधिकरणजातीययो' (पा. सू. 6-3-46) इति सूत्रे अर्थवत एव महत्पदस्य गृहीतत्वात् समासघटकमहत्पदस्यात्व न स्यात्। 'जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी।' इति उक्तत्वात् विरोधिरूढ्यभावे अजहत्स्वार्थैव च वृत्ति स्वीकृता।

तथा च समासघटकपदशक्तिज्ञान विना विशिष्टार्थाबोधात् लक्षणया विशिष्टार्थबोधनिर्वाह सभवति। पङ्कजपदे तु प्रत्येकपदशक्तिज्ञान विनापि पद्मत्वविशिष्टोपस्थितिर्जायते इति विशेष। तस्मात् न पङ्कजपदप्रतिबन्द्या समासशक्ति सिद्ध्यति॥

यदपि, पण्डितब्राह्मण इति समासात् ब्राह्मणपण्डितयोरुद्देश्यविधेयभावेनान्वयबोधवारणाय समासे शक्ति स्वीकरणीयेति, तदपि न।

पृथगुपस्थिते उद्देश्यविधेयभावेनान्वयबोधप्रयोजकत्वे नानार्थकहर्यादिपदात् पृथगुपस्थितानां अश्वसूर्यादीनां उद्देश्यविधेयभावेनान्वयापत्ति। नच हरिपदात् एकदा एकस्यैवार्थस्योपस्थितिरिति सभवति। तत्पदस्य यावत्सु अर्थेषु शक्तिर्गृहीता तावतामर्थानां स्मरणस्य पदज्ञाने सत्यवर्जनीयत्वात्। परन्तु तात्पर्यानुरोधेन एकैकस्यार्थस्य शाब्दबोधे भान भवति। नच विभिन्नपदजन्योपस्थितिरेव पृथगुपस्थितिपदेन विवक्षितेति वाच्यम्। एकार्थीभाववादिनामपि समासघटकप्रत्येकपदशक्तिज्ञानस्य पूर्वोक्तरीत्या आवश्यकत्वेन, पदज्ञानस्य च एकसंबन्धिज्ञानविधयैव पदार्थस्मारकतया प्रत्येकपदार्थोपस्थिते पृथगुपस्थितिरूपाया अवर्जनीयत्वात् तथान्वयबोधापत्तेर्दुर्वारत्वात्। यदि च समुदायशक्त्यधीनविशिष्टार्थोपस्थित्यसमानकालीनाया एव पृथगुपस्थिते तादृशशाब्दबोधहेतुत्वोपगमेन न समासात् उद्देश्यविधेयभावेनान्वयबोधापत्तिरित्युच्यते। तदा ब्राह्मणोद्देश्यकाभेदससर्गकपण्डितविधेयकशाब्दबोधे प्रथमान्तब्राह्मणपदप्रथमान्तपण्डितपदसमभि-

-व्याहारः आकांक्षा । तादृशाकांक्षाज्ञानाभावाच्च न समासात् तादृशबोधः इति कृतमनन्तसमासानां शक्तिकल्पनया ॥

एवमेव वषट्कर्तुः प्रथमभक्षः इत्यत्र भक्षोद्देश्यकप्राथम्यविधेयकबोधो न संभवतीति प्राथम्यविशिष्टभक्षविधानोक्तिरपि संगच्छते । एकप्रसरताभङ्गापत्तिः इत्यस्य समासघटकपदयोः उद्देश्यविधेयभावेनान्वयाबोधकत्वनियमभङ्गापत्तिरित्यर्थः । स च नियमः पूर्वोक्ताकांक्षाज्ञानकारणतामूलः । एवं समासघटकपदार्थनिष्ठविधेयतानिरूपितोद्देश्यतासंबन्धेन शाब्दबोधं प्रति समासघटकपदजन्योपस्थितेः विशेष्यतासंबन्धेन स्वातन्त्र्येण प्रतिबन्धकत्वात् न तत्र तथान्वयबोधः संभवति । नचैवं सति एतादृशप्रतिबध्यप्रतिबन्धकभावकल्पनया गौरवमिति वाच्यम् । अनन्तसमासपदानामनन्तशक्तिकल्पनापेक्षया गौरवविरहात् ॥

यदपि, विभाषासूत्रस्य, 'सविशेषणानां वृत्तिर्न' इति वार्तिकस्य च विधित्वकल्पने गौरवमिति, तदपि न । राजसंबन्ध्यभिन्नः पुरुषः इति, नव्यपक्षे स्वत्वसंबन्धेन राजवान् पुरुषः इति च बोधतात्पर्ये, राजपुरुषः इति समासस्य, राजनिरूपितस्वत्ववान् पुरुषः इति बोधतात्पर्ये राज्ञः पुरुषः इति व्यासस्य च सिद्धत्वेन व्यपेक्षावादिनां मतेऽपि विभाषासूत्रस्यानुवादकत्वात् । सविशेषणानामिति वार्तिकस्यापि समर्थसूत्रभाष्यस्थेन 'सापेक्षमसमर्थवद्भवति' इति वचनेन सिद्धस्यैवार्थस्यानुवादकत्वात् न विधित्वकल्पनागौरवम् । वस्तुतस्तु अनन्तसमासपदानामनन्तशक्तिकल्पनापेक्षया स्थितस्य सूत्रस्य वार्तिकस्य च विधित्वकल्पने न गौरवमिति बोध्यम् ॥

तस्मात् शक्तिः पदमात्रवृत्तिः, न पदसमुदायसमासादिवृत्तिरिति व्यवस्थापयन्ति ॥ इति शिवम् ॥

इति पण्डितराजेन सुब्रह्मण्यशास्त्रिणा विरचितायां
शाब्दतरङ्गिण्यां तृतीयस्तरङ्गः ।

---

## अथ चतुर्थस्तरङ्गः

अथ जघन्या वृत्तिर्निरूप्यते। तां लक्षणेति भक्तिरिति च व्यवहरन्ति तान्त्रिकाः।

अत्राहुः लघुमञ्जूषाकृतः—

आरोपितशक्यतावच्छेदकरूपेण शक्यस्यैव तत्पदवाच्यत्वेन प्रसिद्धान्यव्यक्तिबोधे व्यक्तिविशेषबोधे वा लक्षणेति व्यवहारः। छत्रिणो यान्तीत्यादौ अच्छत्रिषु साहचर्यात् छत्रित्वारोपः। काकेभ्यो दधि रक्ष्यतामित्यत्र दध्युपघातकमात्रे काकत्वारोपः। कमलानि कमलानीत्यादौ कमलत्वेनैव व्यक्तिविशेषबोधः। गङ्गायां घोषः इत्यत्र शक्यतावच्छेदकगङ्गात्वेन तीरबोधः।

युज्यते चैतत्। कथमन्यथा गङ्गायां मीनघोषौ स्तः इत्यत्र द्वन्द्वस्य साधुता। तथाहि—देवदत्ते अजधनत्वस्य यज्ञदत्ते अविधनत्वस्य चान्वयतात्पर्येण अजाविधनौ देवदत्तयज्ञदत्तौ इति प्रयोगो न प्रामाणिकः। एवं नीधात्वर्थे व्यापारे अजायाः, संयोगे ग्रामस्य चान्वयतात्पर्येण अजाग्रामौ नयति इति प्रयोगोऽपि न प्रामाणिकः। अनयोश्च प्रयोगयोः प्रामाण्यवारणाय द्वन्द्वार्थस्य एकधर्मावच्छिन्नान्वये एव द्वन्द्वस्य साधुता इति नियमः स्वीकरणीयः। एवञ्च गङ्गायां मीनघोषौ स्तः इत्यत्र गङ्गाशब्दात् लक्षणया तीरत्वेन तीरबोधे, मीनस्य गङ्गात्वावच्छिन्नेन, घोषस्य तीरत्वावच्छिन्नेन चान्वयात् द्वन्द्वार्थस्य एकधर्मावच्छिन्नान्वयाभावात् द्वन्द्वस्य साधुता न स्यात्। गङ्गात्वेनैव तीरस्यापि बोधे उभयोरपि द्वन्द्वार्थयोः गङ्गात्वरूपैकधर्मावच्छिन्नान्वयात् समाससाधुता निर्वहति।

नच लक्ष्यस्यापि शक्यतावच्छेदकरूपेणैव बोधस्वीकारे 'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा।' इत्यभियुक्तोक्तिविरोध इति वाच्यम्। तादृशोक्तेः

---

टिप्पणी—

भज सेवायामिति धातोर्निष्पन्नः भक्तिशब्दः। भज्यते-सेव्यते स्वार्थः अनयेति भक्तिः-लक्षणा इति बोध्यम्।

प्रामादिकत्वात् । तस्याः प्रामाणिकत्वाभिनिवेशे, शक्यादन्येन रूपेण ज्ञाते—शक्यतावच्छेदकभिन्नरूपवत्त्वेन गृहीते तीरत्वविशिष्टतीरादौ, लक्षणा—शक्यतावच्छेदकारोपः इति तदर्थस्वीकारेणाविरोधात् ।

**महाभाष्यकारोऽपि** ईदृशं बोधमनुमन्यते । 'पुंयोगादाख्यायाम्' (पा. सू. 4-1-48) इति सूत्रे भाष्ये 'चतुर्भिः प्रकारैः अतस्मिन् सः इत्येतद्भवति, तात्स्थ्यात् ताद्धर्म्यात् तत्सामीप्यात् तत्साहचर्यात्, मञ्चा हसन्ति, सिंहो माणवकः, गङ्गायां घोषः, यष्टीः प्रवेशय ।' इत्युक्तेः । **कैयटोऽप्याह** स्पष्टमेवारोपम्, 'आरोप्यते ताद्रूप्यं न तु मुख्यम् । बालेषु मञ्चत्वारोपात् मञ्चपदप्रवृत्तिः हसन्तीति पदान्तरप्रयोगात् विज्ञायते' इति ।

न्यायसूत्रकारोऽपि 'सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यः ब्राह्मणबालकटराजसक्तुचन्दनगङ्गाशकटान्नपुरुषेष्वतद्भावेऽपि तदुपचारः' (न्या. सू. 2-2-61) इति सूत्रयामास । 'तस्य भावः तद्धर्मः । तदभावेऽपि तदुपचारः-तच्छब्दव्यवहार इत्यर्थः । स च तद्धर्मारोपेण । आरोपनिमित्तानि च सहचरणादीनि । यष्टीः प्रवेशय इत्यादीनि उदाहरणानि । यष्टित्वारोपो ब्राह्मणे साहचर्यात् । मञ्चत्वारोपो बालेषु तात्स्थ्यात् । गङ्गायां तीरधर्माधारत्वारोपः तत्सामीप्यात् ।' इत्यादिकं तद्व्याख्यातारो वदन्ति ।

एवञ्च शक्यार्थप्रवाहेणात्यन्तसामीप्ये गङ्गायां तीरधर्मं घोषाधारत्वमारोप्य गङ्गायां घोषः इति प्रयोगः । व्यवहितसामीप्ये तु तीरे गङ्गात्वमारोप्य गङ्गायां घोषः इति प्रयोगः । **गोतमसंमतोऽप्यारोपः पतञ्जलिसंमतः** । 'स्वरितेनाधिकारः' (पा. सू. 1-3-11) इति सूत्रे भाष्ये तथाविधस्याप्यारोपस्य कथनात् । **न्यायवार्तिककारोऽपि** 'यष्टिकायां तावदयं यष्टिकाशब्दः यष्टिकात्वजातिनिमित्तकः । तत्र संयुक्तसमवेतां जातिं ब्राह्मणे समवायेनाध्यारोप्य ब्राह्मणं यष्टिकेत्याह ।' इति सहचरणसूत्रव्याख्यानावसरे निरूपयन्, शक्यतावच्छेदकरूपेण लक्ष्यार्थबोधमङ्गीकरोति ॥

नच गङ्गायां घोषः इत्यादौ आरोपितगङ्गात्वेन तीरस्य बोधेऽपि तस्य ज्ञानस्य भ्रमत्वात्, शास्त्रज्ञानवतां सर्वथा भ्रमत्वेन ग्रहाच्च, तद्बोधात् गङ्गागत-

शैत्यपावनत्वादिप्रतीतिरूप फल न सिद्धयेदिति वाच्यम् । गङ्गायां घोष इति वाक्यात् प्रथम प्रत्र ह्यवृत्तिर्घोष इति शाब्दबोधो जायते । तत तत्र अनुपपत्तिप्रतिसन्धानम् । तत तादृशबोधे वक्तृतात्पर्याविषयत्वज्ञानम् । ततश्च गङ्गात्वेन लक्ष्यतीरशाब्दबोध । ततो व्यञ्जनया तीरे मुख्यगङ्गाऽभेदप्रतीति । तया चोक्तप्रयोजन सिद्धयति । बाधग्रहश्च व्यञ्जनाजन्यबोधे अप्रामाण्यज्ञान न जनयति । वस्तुतस्तु, बाधग्रह शाब्दे अनुपपत्तिमूलकारोपितार्थबोधे अप्रामाण्यज्ञान न जनयति इति स्वीक्रियते । तथा च मन्ये गङ्गाऽभेदप्रतीतेरनङ्गीकारेऽपि न क्षति । लक्ष्यार्थबोधे अप्रामाण्यज्ञानानुदयात् तेनैव पूर्वोक्तप्रयोजनस्य सिद्धे ॥

सा लक्षणा द्विविधा गौणी शुद्धा चेति । स्वसादृश्याधिकरणत्वसम्बन्धेन शक्यसम्बन्धार्थप्रतिपादिका गौणी । सादृश्यभिन्नसम्बन्धेन शक्यसम्बन्ध्यर्थप्रतिपादिका शुद्धा । गौर्वाहीक इति गौणीस्थलेऽपि वाहीकस्य शक्यतावच्छेदकगोत्वेनैव बोध । नच तत्र जाड्यादिगुणाना लक्ष्यतानवच्छेदकत्वे, 'लक्ष्यमाणगुणैर्योगात् वृत्तेरिष्टा तु गौणता ।' इत्यभियुक्तोक्तिविरोध इति वाच्यम् ।

लक्ष्यमाणेत्यस्य वाहीके गोशब्दप्रयोगहेतुज्ञानविषयोऽर्थ । गुणैरित्यत्र तृतीयार्थ अभेद योगशब्दार्थसम्बन्धान्वयी । एवञ्च वाहीके गोवृत्तिगुणज्ञानात् गोशब्दप्रयोग, तादृशगुणरूपात् सम्बन्धात् वृत्ते गौणता इत्येवपरत्वात्तदुक्ते ।

गौणीस्थल एव परम्परासम्बन्धस्य लक्षणानियामकत्व, न शुद्धायाम् । शैत्यपावनत्वादौ गङ्गापदशक्यप्रवाहनिरूपितपरम्परासम्बन्धस्य सत्त्वेऽपि 'प्रयोजन न लक्ष्य, सम्बन्धाभावात्' इति **काव्यप्रकाशोक्तेः** । अतएव द्विरेफपदात् स्ववाच्यरेफद्वयवद्भ्रमरपदवाच्य वरूपपरम्परासम्बन्धेन लक्षणया भ्रमरबोध इत्यसगतम् । गौण्यतिरिक्तस्थल परम्परासम्बन्धस्य लक्षणानियामकत्वाभावात् । अपितु द्विरेफपदस्य भ्रमरे रूढिशक्तिरेव । त्वचा ज्ञातमित्यत्र चर्मणि शक्तस्य त्वक्पदस्य त्वगिन्द्रिये निरूढलक्षणा । निरूढलक्षणाव्यतिरिक्ता सर्वापि लक्षणा प्रयोजनवती । अतएव रूढिप्रयोजनान्यतरस्य लक्षणानियामकत्वमुक्त तत्र तत्र ॥

इय लक्षणा प्रकारान्तरेण द्विविधा, जहत्स्वार्था अजहत्स्वार्था चेति । नच सर्वत्र लक्ष्यार्थबोधे स्वार्थस्य शक्यतावच्छेदकस्य प्रकारतया भानात् लक्षणाया

जहत्स्वार्थत्वादिविभागो न संभवतीति वाच्यम्। यत्र शक्यार्थस्य धर्मिणः केनापि रूपेण लक्ष्यार्थान्वयिना अनन्वयः, तत्र जहत्स्वार्थलक्षणा गङ्गायां घोषः इत्यादौ। शक्यार्थस्य धर्मिणः येन केनापि रूपेण लक्ष्यार्थान्वयिना अन्वये अजहत्स्वार्था, काकेभ्यो दधि रक्ष्यताम्, छत्रिणो यान्ति इत्यादौ, इति ॥

अथ एतन्मते लक्षणावृत्तेः स्वरूपं विचार्यते।

'बोधे लक्षणाव्यवहारः' इत्युक्तेः न बोधस्य लक्षणात्वम्, शाब्दबोधौ-पयिकवृत्तेरेव लक्षणात्वात्। तस्मात् बोधे सति लक्षणाव्यवहारः इति तदुक्तिः व्याख्येया।

'शक्यतावच्छेदकारोपो लक्षणेति वैयाकरणाः' इति ग्रन्थान्तरे दर्शनात्, इहापि 'अन्नं प्राणाः, चन्दनं तुला इत्यादौ आहार्यारोपस्यैव लक्षणात्वात्' इत्युक्तेः, 'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा' इति श्लोकवटकलक्षणा-पदस्य शक्यतावच्छेदकारोपार्थकतया व्याख्यानात्, आरोप्य प्रयोगः, इत्युक्तेश्च शाब्दबोधसमानाकारः शब्दप्रयोगहेतुः वक्तृनिष्ठः तीरे गङ्गात्वारोपः गङ्गापदस्य तीरे लक्षणेति प्रतिभाति।

परन्तु, शक्यतावच्छेदकारोपाख्यविलक्षणवृत्तिस्वीकारे सर्वेषां शब्दानां सर्वार्थवाचकत्वस्वीकारो व्याहन्येत। न चैतत्पक्षे सर्वेषां शब्दानां सर्वार्थवाचकत्वं नास्तीति शङ्कनीयम्। 'परे तु' इत्यादिना लक्षणास्वरूपनिरूपणोपक्रमे 'शक्त्यैव बोधे लक्षणाव्यवहारः' इत्युक्तेः, उपसंहारेऽपि, हरिरप्याह—

एकमाहुरनेकार्थं शब्दमन्ये परीक्षकाः।
निमित्तभेदादेकस्य सार्वार्थ्यं तस्य भिद्यते॥

सर्वशक्तेस्तु तस्यैव शब्दस्यानेकधर्मणः।
प्रसिद्धिभेदाद्गौणत्वं मुख्यत्वं चोपचर्यते॥ इति।

इत्यभिधानात्, सर्वेषां शब्दानां सर्वार्थवाचकत्वस्याङ्गीकृतत्वात्। तस्मात् लक्षणाख्यवृत्त्यन्तरस्वीकारो व्यर्थः।

किञ्च, 'अन्वयानुपपत्तिज्ञानपूर्वकं शक्यत्वेन गृहीतार्थसंबन्धज्ञानेन उद्बुद्धशक्तिसंस्कारतो बोधे लक्षणेति व्यवहारः' इति मञ्जूषाग्रन्थं 'बोधे' इति प्रतीकमुपादाय, 'तस्मिन् सति तज्जनकत्वादृशसंस्कारे तच्छक्तौ वा लक्षणेति व्यवहार इत्यर्थः' इति व्याचख्युः वैद्यनाथभट्टाः। अतो ज्ञायते अप्रसिद्धार्थे शक्तिरेव लक्षणेति। नच निरुक्तग्रन्थः परे तुकल्पात् प्राक्तनः न तत्कल्पतात्पर्य-निर्णायकः इति वाच्यम्। पूर्वकल्पादत्र कल्पे लक्ष्ये शक्यतावच्छेदकारोपपरत्वैव विशेषत्वात्। तीरे शक्तेः कण्ठरवेणाभिधानात्। 'परे तु' कल्पेऽपि 'शक्त्यैव' इति ग्रन्थव्याख्याने 'एवेन तस्या अतिरिक्तत्वनिरास इति भावः' इति टीकादर्श-नाच्च स्पष्टं ज्ञायते, शक्त्यतिरिक्ता न लक्षणेति।

अपिच, इयं लक्षणा इत्यनभिधाय, अप्रसिद्धार्थबोधे व्यक्तिविशेषबोधे वा लक्षणेति व्यवहारः इत्यभिधानेनैव अतिरिक्ता लक्षणा नास्तीति गम्यते।

वैयाकरणमते सर्वेषां शब्दानां सर्वार्थवाचकत्वात् तान्त्रिकाणां लक्षणा-व्यवहारः कथमुपपद्यते, इति शङ्कानिरासाय लक्षणानिरूपकग्रन्थावतारत्वेनमर्थ-मुपोद्बलयति।

किञ्च, व्यक्तिविशेषबोधे वा लक्षणेति व्यवहारः इति निरूपयता ग्रन्थकृता 'कमलानि कमलानि' इत्यत्र कमलपदस्य सौरभविशिष्टकमलव्यक्तिविशेषे लक्षणा स्वीकृता। नच तत्र शक्यतावच्छेदककमलत्वस्य कमलव्यक्तिविशेषे आरोपः संभवति। समवायेनैव कमलत्वस्य तत्र सत्त्वात्। नच तत्रापि कमलत्वे व्यक्ति-विशेषमात्रवृत्तित्वमारोप्यैव प्रयोग इति वाच्यम्। निरुक्तारोपः कमलत्वे व्यक्ति-विशेषभिन्नकमलावृत्तित्वारोपे पर्यवसितः। शक्यतावच्छेदकविशेष्यकस्यापि तस्य न शक्यतावच्छेदकारोपपदव्यपदेश्यता, शक्यतावच्छेदकप्रकारकारोपस्यैव शक्य-तावच्छेदकारोपशब्देन व्यवहारात्। अतश्च निरुक्तस्थले लक्षणाव्यवहारो न स्यात्।

तस्मात् शक्तिविशेष एव लक्षणाव्यवहारविषयः॥

एवञ्च लक्षणास्थले शाब्दबोधः शक्यतावच्छेदकरूपेण लक्ष्यार्थविषयकः। प्रयोक्तुरपि तत्समानविषयकः प्रयोगहेतुभूतः शक्यतावच्छेदकारोपः इत्याशयेन 'शक्यतावच्छेदकारोपो लक्षणा' इति ग्रन्थान्तरे व्यवहार उपपद्यते।

एवं ऐदम्पर्येण लक्षणानिरूपकग्रन्थात् पूर्वोक्तार्थावगतौ सत्यां 'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा' इति श्लोकघटकलक्षणापदस्य शक्यतावच्छेदकारोपार्थकतया व्याख्यानात् आरोपस्य लक्षणावृत्तित्वकथनं न युज्यते। तत्र लक्षणापदाल्लक्षणया तादृशार्थलाभसंभवात्। नच लक्षणास्थले सर्वत्र शाब्दबोधः न शक्यतावच्छेदकारोपात्मकः, 'कमलानि कमलानि' इत्यत्र तदसंभवादिति वाच्यम्। तत्रारोपस्यानावश्यकत्वात्। न चैवं सति 'आरोपितशक्यतावच्छेदकरूपेण बोधे लक्षणाव्यवहारः' इति ग्रन्थासंगतिरिति वाच्यम्। आरोपितशक्यतावच्छेदकरूपेण शक्यत्वेन तत्पदवाच्यत्वेन प्रसिद्धान्यव्यक्तिबोधे, शक्त्यैव व्यक्तिविशेषबोधे वा लक्षणाव्यवहारः इति ग्रन्थो योजनीयः। ननु व्यक्तिविशेषेत्यत्रापि आरोपितेत्यादितृतीयान्तस्यान्वयो विवक्षितः। तथा च शक्यत्वेन प्रसिद्धान्यव्यक्तिबोधौपयिकी शक्तिः, व्यक्तिविशेषबोधौपयिकी च शक्तिः लक्षणापदेन व्यवह्रियते इति तदाशयः। नच गङ्गापदस्य तीरवाचकत्वे तीरत्वस्यापि गङ्गात्ववदेव शक्यतावच्छेदकत्वात् गङ्गात्वमात्रस्य शक्यतावच्छेदकत्वकथनं न संगच्छते इति वाच्यम्। आरोपितशक्यतावच्छेदकरूपेण इत्यस्य आरोपितं यत् शक्यतावच्छेदकत्वेन प्रसिद्धं रूपं तेनेति व्याख्याने दोषाभावात्। तथा च अप्रसिद्धार्थबोधौपयिकशक्तेरेव लक्षणापदेन व्यवहृतायाः शक्यतावच्छेदकारोपमूलशक्यसंबन्धभेदात् गौणीत्यादिना विभागः कृतः इति बोध्यम्॥

इदं पुनरत्र चिन्त्यते, एतन्मते गङ्गायां घोषः इति वाक्यात् किमारोपितगङ्गात्वेन तीरशाब्दबोधः, उत गङ्गात्वेनेति।

'आरोपितशक्यतावच्छेदकरूपेण शक्यत्वेन प्रसिद्धान्यव्यक्तिबोधे' इति 'न चैवमारोपितगङ्गात्वेन बोधे' इति च ग्रन्थपर्यालोचनायां आरोपितगङ्गात्वेन तीरबोधः इति प्रतिभाति।

परन्तु, शक्त्या बोधविशेषे लक्षणाव्यवहारः इत्युपक्रान्तम्। आरोपितत्वविशिष्टं च गङ्गात्वं न गङ्गापदशक्यतावच्छेदकमिति तेन रूपेण शक्त्या बोधो न संभवति। आरोपितत्वबोधकं च पदं नास्ति, येन गङ्गात्वे आरोपितत्वस्य बोधो भवेत्। न चारोपितत्वस्य प्रकारतया भानासंभवेऽपि गङ्गात्वसंसर्गतया भानं

स्यादिति वाच्यम् । समवायातिरिक्तसम्बन्धेन जाते स्वरूपतः प्रकारतया भाना-सम्भवात् । नच प्रकारिताशे निरूपितत्वसम्बन्धेन स्वरूपतो गोत्वावगाहिनः अनुव्यवसायस्यानुरोधात् समवायातिरिक्तनिरूपितत्वसम्बन्धेनापि स्वरूपतो भानवत्, लाक्षणिकस्थलीयानुभवानुरोधात् आरोपसम्बन्धेनापि गङ्गात्वस्य (जाते) स्वरूपतो भानं सम्भवतीति वाच्यम् । समवायसंसर्गकगङ्गात्वप्रकारकशाब्दबोधस्यैव गङ्गापद-शक्तिज्ञानप्रयोज्यत्वेन आरोपसंसर्गकगङ्गात्वप्रकारकबोधस्य शक्तिप्रयोज्यत्वाभावेन 'शक्त्यैव बोधे लक्षणाव्यवहार' इति ग्रन्थासंगतेः । तादृशबोधस्य भ्रमत्वानाप-त्तेश्च । तीरे समवायेन गङ्गात्वस्यासत्त्वेऽपि आरोपसम्बन्धेन सत्त्वात् । न चेष्टा-पत्तिः । लक्ष्यार्थबोधे भ्रमत्वज्ञानानुदयप्रयोजककथनस्यासंगतत्वापत्तेः । तस्मात् समवायेनैव गङ्गात्वं तीरे भासते । एवञ्च बोधस्य शक्तिप्रयोज्यत्वं भ्रमत्वञ्चोपपद्यते ।

स्वमतोपष्टम्भकतयोपन्यस्तः 'समवायेन यष्टिकात्वमारोप्य ब्राह्मणं यष्टिके-त्याह ।' इति न्यायवार्तिकग्रन्थोऽपि एतमर्थं उपोद्बलयति । एवञ्च गङ्गात्वे आरोपविषयत्वस्वरसात् वास्तवारोपितत्वाभिप्रायकः 'आरोपितगङ्गात्वेन' इति ग्रन्थः । अतएवाग्रे 'कमलत्वेन व्यक्तिविशेषबोधः', 'कचतमस्यति वदनमित्यत्र कचत्वेन राहुत्वविशिष्टबोधः', 'भावप्रधाननिर्देशस्थले घटत्वप्रकारकघटत्वबोधो लक्षणया' इत्यादिग्रन्थः संगच्छते ॥

नच तीरत्वेनोपस्थिते शक्यसम्बन्धज्ञानस्याशक्यत्वेन नियतोपस्थितिकस्य तीरत्वस्याभाने किं नियामकमिति वाच्यम् । लक्षणास्वभावस्यैव नियामकत्वात् । न च विशेषदर्शिनः पुंसः गङ्गायां घोषः इति वाक्यात् गङ्गात्वेन तीरावगाही शाब्द-बोधो न सम्भवति, आहार्यपरोक्षाप्रसिद्धेरिति वाच्यम् । आहार्यं परोक्षज्ञानं नास्ती-त्यस्य नैयायिकवासनामात्रविजृम्भितत्वात् । अनुभवानुरोधेनाहार्यशाब्दबोधस्याङ्गी-कारात् ॥

*ननु गङ्गायां घोषः इत्यत्र गङ्गापदार्थे प्रवाहे तीरधर्मस्य घोषाधारत्वस्या*-रोपः स्वीकृतः । तत्र पक्षे, किंपदशक्यतावच्छेदकस्य कुत्रारोपः । न तावत् गङ्गापदशक्यतावच्छेदकगङ्गात्वस्य, गङ्गात्वेन प्रवाहस्यैव तत्र बोधात् । नच घोषा-न्वितसप्तम्यर्थाधारत्वस्य प्रवाहे आरोप इति वाच्यम् । घोषान्विताधारत्वस्य किंचि-

त्पदशक्यतावच्छेदकत्वाभावात् । नच गङ्गानिष्ठाधारतायां घोषाधारतात्वस्य सप्तमीशक्यतावच्छेदकस्यारोपः इति वाच्यम् । घोषाधारतात्वेन आधारतायाः सप्तम्यवाच्यत्वेन तादृशाधारतात्वस्य सप्तमीशक्यतानवच्छेदकत्वात् शक्यताव-च्छेदकारोपस्यासंभवः इति चेत्, न ।

यत्र यत्र लक्षणाव्यवहारः प्रामाणिकः, तत्र सर्वत्र यथाकथञ्चिदारोपो वर्तते इत्यत्रैव ग्रन्थकारतात्पर्योपगमात् ॥

नच आयुर्घृतम् इति वेदवाक्यात् आयुष्ट्वेन घृतविषयकशाब्दबोधस्य वाच्यतया, वेदकर्तुरीश्वरस्य तादृशबोधसमानाकारकारोपस्वीकारापत्तिरिति वाच्यम् । तन्मते वेदस्यापौरुषेयत्वेन ईश्वरकर्तृकत्वाभावात् । नच तथापि आयुर्घृतमिति वेदवाक्यस्य भ्रमजनकत्वेनाप्रामाण्यं स्यादिति वाच्यम् । 'प्रजापतिरात्मनो वपा-मुदखिदत्' इत्याद्यर्थवादानामिवास्यापि स्वार्थे प्रामाण्याभावस्येष्टत्वात् ।

ननु 'वृक्षः-महीरुहः' इति व्याख्यानवाक्यात् वृक्षत्वावच्छिन्ने महीरुह-त्वावच्छिन्नाभेदान्वयबोधो न संभवति, उद्देश्यतावच्छेदकविधेयतावच्छेदकयोरैक्ये अभेदान्वयबोधस्याव्युत्पन्नत्वात् । अतः वृक्षपदस्य वृक्षपदप्रतिपाद्ये लक्षणया वृक्षपदप्रतिपाद्यः महीरुहाभिन्न इति बोधो वक्तव्यः । शक्यतावच्छेदकरूपेण लक्ष्यार्थभाने वृक्षत्वेनैव तत्पदप्रतिपाद्यस्य बोधात्, उद्देश्यतावच्छेदकविधेयताव-च्छेदकयोरैक्यापरिहारेण, निरुक्तव्याख्यानवाक्यस्य घटो घटः इति निराकांक्षवाक्य-तुल्यता स्यादिति चेत्, न ।

सर्वस्मिन्नपि ज्ञाने तत्तद्वाचकशब्दानुविद्ध एवार्थो भासते । तदुक्तं हरिणा—

'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥' इति ।

एवञ्च वृक्षविशेषणतया वृक्षशब्दस्य महीरुहविशेषणतया च महीरुहशब्दस्य भानेन, वृक्षमहीरुहशब्दयोः उद्देश्यतावच्छेदकविधेयतावच्छेदकयोः भेदेन न तद्वाक्यस्य निराकांक्षता । न चैवं घटो घट इत्यपि न निराकांक्षं स्यात्, उद्देश्यतावच्छेदक-घटशब्दव्यक्तिभेदस्य विधेयतावच्छेदकघटशब्दव्यक्तौ सत्त्वादिति वाच्यम् ।

शब्दव्यक्त्योर्भिन्नत्वेऽपि समानानुपूर्वीकत्वात्। असमानानुपूर्वीकविभिन्नशब्दोपरागेण एकार्थबोधस्य संमतत्वात्। न चायमपसिद्धान्त। घट कुम्भ इति सामानाधिकरण्येन प्रतीते वैयाकरणमतत्वात्। **श्रीविट्ठलमिश्राः लघुचन्द्रिकाव्याख्याने** गुणगुण्यादीना भेदाभेदविचारावसरे "भूले घट कुम्भ इत्यत्र घटो घट इति वक्तव्ये कुम्भपद, सर्वं शब्दानुविद्ध भासते इत्युपगम्य घटकुम्भादिपर्यायपदानामपि स्वा मकविभिन्नप्रकारकबोधजनकत्वमिति शाब्दिकमतानादरसूचनाय।" इति निरूपयति। तेन स्पष्ट ज्ञायते, घट कुम्भ इति सामानाधिकरण्येन प्रतीतिः वैयाकरणमतेति॥

अथ कमलानि कमलानि इति वाक्यात् शाब्दबोधो न स्यात्, लाक्षणिककमलपदेनापि कमलत्वेनैव व्यक्तिविशेषबोधोपगमे उद्देश्यतावच्छेदकविधेयतावच्छेदकयोर्भेदाभावात्, समानानुपूर्वीककमलपदस्यैव उद्देश्यकोटौ विधेयकोटौ च भानेन वृक्षो महीरुह इत्यत्रेव तत्तद्वाचकपदरूपावच्छेदकभेदस्याप्यभावादिति चेत्, न।

चैत्रस्य गुरु इत्यादिस्थले गुरुपदार्थैकदेशेन गुरुत्वेन षष्ठ्यर्थनिरूपितत्वान्वयबोधस्यानुभवसिद्ध वात् यथा पदार्थ पदार्थेनान्वेति न तदेकदेशेन इति व्युत्पत्ति ससम्बन्धिकार्थकस्थले सकोच्यते। तथा तद्धर्मावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबुद्धि प्रति तद्धर्मभेद कारणमिति कार्यकारणभावोऽपि कमलानि कमलानि इत्यादौ कमलत्वावच्छिन्ने कमलत्वेन व्यक्तिविशेषाभेदान्वयबोधस्यानुभवसिद्ध वात् सकोचनीय। तथा च निरुक्तकार्यतावच्छेदककोटौ लाक्षणिकव्यक्तिविशेषाभेदबोधभिन्नत्व देयमिति प्रत्यक्तृता तात्पर्यात्॥

अथ 'उपकृत बहु नाम' इत्यत्र उपकारशब्द अपकारे लाक्षणिक। तत्र शक्यार्थेनोपकारेण लक्ष्यस्यापकारस्य स्वनिरूपितविरोधाधिकरणत्व परम्परासबन्ध। तदुक्त **वृत्तिवार्तिके**, "नहि साक्षात्सबन्धे सयेव लक्षणेति नियम, व्यतिरेकलक्षणास्थले तन्निरूपितविरोधाधिकरणत्वादिपरम्परासबन्धमात्रेण तादृशेन लक्षणाक्लृप्तेश्च।" इति। एव इन्द्रार्थाया स्थूणाया इन्द्रशब्दो लाक्षणिक। तत्र

स्थूणायां इन्द्रशब्दशक्यार्थसंबन्धः तादर्थ्यम्। तच्च तत्कर्मकपूजाप्रयोजनकत्वम्। तदपि परम्परासंबन्ध एव। तथा च गौण्यतिरिक्तस्थले परम्परासंबन्धस्य लक्षणानियामकत्वाभावकथनं न संगच्छते इति चेत्, न।

विरुद्धत्वं च तादर्थ्यञ्च अखण्डः संबन्धः न परम्परासंबन्धः इत्याशयात्। न चैवं सादृश्याधिकरणत्वमपि अखण्डसंबन्ध इति गौणीस्थले परम्परासंबन्धस्य लक्षणानियामकत्वस्वीकारो व्यर्थ इति वाच्यम्। तस्य अखण्डत्वेन ग्रन्थकारानुभवविरहात्, अखण्डत्वसखण्डत्वादीनां तत्तद्ग्रन्थकारानुभवानुरोधित्वात्॥

ननु निरूढेतरलक्षणास्थले सर्वत्र प्रयोजनं न संभवति। 'अयमर्थः' इति वाक्यं अयमाशयः इति विवृण्वन्ति व्याख्यातारः। तत्र अर्थशब्दः आशये लाक्षणिकः। नहि तत्र किमपि प्रयोजनमस्ति। एवं भावप्रधाननिर्देशस्थलेऽपि। तदर्थवाचकपदस्य अन्यत्र प्रयोगः तद्धर्मप्रतिपत्त्यर्थः इत्युत्सर्गः इत्युक्तत्वाच्च सर्वत्र लक्षणायां प्रयोजनं नेति गम्यते। यदि आयुरेवेदम् इत्यत्र घृते आयुषः अत्यन्ताभेदप्रतीतिरिव, निरुक्तस्थलेष्वपि तत्तत्पदशक्यार्थात्यन्ताभेदप्रतीतिः प्रयोजनं संभवतीत्युच्यते। तदा, त्वचा ज्ञातम् इत्यादिनिरूढलक्षणास्थलेऽपि त्वगिन्द्रिये त्वक्शब्दशक्यचर्मण। अत्यन्ताभेदप्रतीतेः प्रयोजनस्य संभवात् तत्र प्रयोजनाभावकथनमसंगतमिति चेत्।

सत्यं वर्तन्ते प्रयोजनविरहेऽपि लाक्षणिकाः प्रयोगाः। तेषु स्थलेषु काव्यदोष एव। आयुरेवेदमित्यत्र प्रयोजनान्तराभावेन शक्यार्थात्यन्ताभेदप्रतीतिरेव प्रयोजनत्वेन विवक्ष्यते। त्वगिन्द्रिये शक्यार्थचर्मात्यन्ताभेदप्रत्ययं प्रयोजनमनभिसन्धायैव त्वचा ज्ञातमित्यादीन् निरूढलाक्षणिकान् शब्दान् प्रयुञ्जते। अतः तत्र प्रयोजनं नास्तीत्युच्यते इति रसिकानुभवसिद्धः पन्थाः। तमनुसरन्ति एते ग्रन्थकाराः इति बोध्यम्॥

प्राचीनवैयाकरणाश्च स्पष्टमेव लक्षणा नाम वृत्त्यन्तरं नास्तीति वदन्ति। तेषामयमभिसन्धिः। व्यवहारो मुख्यः शक्तिग्राहकः। स च लक्ष्यत्वाभिमतेऽपि तुल्यः। नच प्रवाहे गङ्गाव्यवहारः स्वाभाविकः, तीरे तु औपाधिकः

इति व्यवहारस्य नोभयमाशरण्यमिति वाच्यम्। गङ्गाया घोषः प्रतिवसति तमानयेत्युक्तौ तीरान्तिनघोषानयनरूपव्यवहारेण व्युत्पित्सोः तीरेऽपि गङ्गापद-शक्तिज्ञानसंभवात्। तस्मात् शक्तिग्राहकव्यवहारस्य मुख्यलाक्षणिकोभयसाधारण-त्वात् लाक्षणिकत्वाभिमतेऽपि शक्तिरेव। लक्षणाख्यवृत्त्यन्तरकल्पने गौरवात्। नच गङ्गाया घोष. इत्यत्र गङ्गापदशक्यप्रवाहसंबन्धरूपलक्षणा तीरे क्लृप्तैवेति वाच्यम्। यतः न लक्षणानास्ति वयादिन शक्यसंबन्धमेव निषेधन्ति। अपितु तस्य पदपदार्थसंबन्धत्वं, तज्जन्योपस्थितेः शाब्दबोधानुकूलत्वञ्चेति।

ननु शक्यसंबन्धरूपा लक्षणा क्लृप्ता। तस्याश्च तीरादिरूपसंनिधिस्मृति-जनकत्वमपि क्लृप्तमेव। परन्तु, लक्षणावादिना शक्यसंबन्धप्रयोज्यतीरोपस्थितेः शाब्दबोधानुकूलत्वरूपो धर्म. कल्प्यते। शक्तिवादिना तु गङ्गापदस्य तीरे शक्तिः (धर्मी) कल्पनीया। एवञ्च धर्मिकल्पनातो धर्मकल्पनायाः ज्यायस्त्वात् तदेवोचि-तम्। किञ्च शक्तिवादिनोऽपि गङ्गापदजन्या तीरस्मृतिः तीरशाब्दबोधानुकूलेति संमतम्। तादृशतीरस्मृतिजनकत्वञ्च क्लृप्तस्य शक्यसम्बन्धस्यैव कल्पयितुमुचि-तम्, न तु अक्लृप्तायाः शक्तेः। एवं गङ्गापदस्य लक्षणीयतीरादिषु अनेकार्थेषु शक्तिकल्पनया गौरवमिति चेत्, न।

'इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।
अनादिरर्थैः शब्दानां संबन्धो योग्यता तथा॥'

इति हर्युक्तेः बोधकत्वमेव शक्ति.। गङ्गापदञ्च तीरबोधकमिति तवापि संमतम्। ततश्च गङ्गापदे तीरबोधकत्वरूपाया. तीरे शक्तेः क्लृप्ततया, तत्र शाब्दबोधानुकूल-तीरोपस्थितिजनकत्वकल्पनमप्युचितमेव। एवं लक्षणीयाना सर्वेषामर्थाना बोध-कत्वस्य गङ्गादिपदे क्लृप्तत्वात् नानेकार्थेषु शक्तिकल्पनागौरवम्। नच अस्मा-त्पदादयमर्थो बोद्धव्य. इति ईश्वरेच्छाया. शक्तित्वस्वीकारे, गङ्गापदस्य अनेकार्थेषु शक्तिकल्पनाया गौरवमेवेति वाच्यम्। गङ्गापदात्तीरानुभवस्य जायमानत्वात्, सन्मात्रविषयिण्यामीश्वरेच्छाया तीरादौ गङ्गापदबोद्धव्यत्वावगाहिताया अपि क्लृप्त-त्वेन गौरवविरहात्।

ननु गाव्यादयः अपभ्रंशा न वाचकाः । अतः तेषु शक्तिज्ञानं भ्रम इति निरूपणीयम् । तच्च न संभवति, गाव्यादिशब्दात् गोबोधस्य जायमानत्वेन विद्यमानसर्वविषयिण्या ईश्वरेच्छायाः, गौः गावीशब्दजन्यबोधविषयो भवतु इत्याकारिकायाः संभवेन गावीशब्दे शक्तेः सत्त्वात् । अतः, संबन्धत्वगर्भा ईश्वरेच्छा शक्तिः । ईश्वरेच्छायाश्च नापभ्रंशसंबन्धत्वं कल्प्यते इति, अपभ्रंशे निरुक्तशक्तिज्ञानस्य भ्रमत्वमुपपादनीयम् । तथा च शक्तिवादिना ईश्वरेच्छायां तीराद्यनन्तलक्ष्यपदार्थसंबन्धत्वं कल्पनीयम् । एवं संबन्धत्वगर्भतादृशसंकेतप्रयोज्यायाः तीराद्युपस्थितेः शाब्दबोधानुकूलत्वमपि कल्पनीयमिति गौरवमिति चेत्, न ।

अपभ्रंशानामपि वाचकत्वस्य वैयाकरणसिद्धान्तसिद्धतया, तत्र शक्तिज्ञाने भ्रमत्वोपपादनस्यानावश्यकत्वेन नानापदार्थसंबन्धत्वादिकल्पनागौरवस्यानवकाशात् ।

एवं लक्षणास्वीकारे, शाब्दबोधे शक्तिजन्योपस्थितिलक्षणाजन्योपस्थित्योः कार्यकारणभावस्य कल्पनेन, परस्परं व्यभिचारवारणाय तत्तदुपस्थित्यव्यवहितोत्तरत्वस्य तत्तदुपस्थितिकार्यतावच्छेदके प्रवेशेन, पदार्थोपस्थितौ शक्तिज्ञानलक्षणाज्ञानयोरपि प्रत्येकं कारणत्वकल्पनया च गौरवम् । तस्मात् लक्षणाख्यं वृत्त्यन्तरमेव नास्ति । अतएव 'सर्वे सर्वार्थाः' इति वैयाकरणप्रवादः संगच्छते इति ॥

**तत्रेदं बोध्यम्** । वाचकः, लक्षकः इत्यसंकीर्णः प्रामाणिको व्यवहारः सर्वतान्त्रिकाणामस्ति । गङ्गापदस्य तीरेऽपि शक्तिस्वीकारे, यः शब्दः यस्मिन्नर्थे प्रचुरप्रयोगेण प्रसिद्धः स शब्दः तदर्थवाचकत्वेन व्यवह्रियते । यस्मिन्नर्थे न प्रसिद्धः, तत्र लक्षकत्वेन व्यवह्रियते । तीरादौ गङ्गापदस्य प्रचुरप्रयोगाभावात्, गङ्गापदं तीरवाचकमिति न व्यवहारः, अपितु तीरलक्षकमिति, इति व्यवहारनयने क्लेशः इति ॥

अपि च, बोधकत्वस्य शक्तित्वसंभव एव गङ्गापदे तीरबोधकत्वसत्त्वेन तीरे शक्तिः सिद्धा भवेत् । पदे बोधजनकत्वान्यथानुपपत्त्या कल्प्यमानः संबन्धः न बोधकत्वमित्यादिना बोधकत्वं न शक्तिरिति व्युत्पादितं द्वितीयतरङ्गे । एवञ्च लक्ष्यव्यावृत्तस्यैव शक्तिस्वरूपस्य धर्मिग्राहकमानसिद्धत्वात्, लक्ष्योपस्थितये

लक्षणावृत्तिः स्वीकरणीयैव। नच वाच्यशक्तमाथाऽस्य पदार्थान्तरस्य शक्तिर्त्वं स्वीकुर्वतां मते तथा नेमनेऽपि, ईश्वरसंकेतस्य शक्तित्वमते गङ्गापदस्य तीरे शक्तिः सिद्धैव, गङ्गापदात् तीरबोधोदयेन सन्मात्रविषयकेश्वरेच्छाया, तीरे गङ्गापदबोद्धव्यत्वावगाहित्वादिति वाच्यम्। गङ्गायां घोषः इत्यादौ गङ्गापदसमभिव्याहृतघोषपदादेव तीरान्वितविषयकः शाब्दबोधो जायते इति पक्षे, गङ्गापदजन्यस्य तीरबोधस्याळीकत्वेन तद्विषयकत्वस्येश्वरेच्छायामक्लृप्तत्वात्॥

ननु कुमति. पत्रु. इति सर्वलाक्षणिकस्थलेऽपि शाब्दबोधस्यानुभवसिद्धत्वात् लाक्षणिकस्याप्यनुभावकत्वपक्ष एव साधुः। तत्पक्षे च गङ्गापदजन्यतीरबोधस्य प्रसिद्धत्वात् ईश्वरेच्छायां तीरे गङ्गापदजन्यबोधविषयत्वावगाहित्वं सिद्धमेवेति न शक्ति कल्पनीयेति चेत्, न।

अस्मात्पदादयमर्थो बोद्धव्यः इतीच्छया ईश्वरोच्चरितत्वं शक्तिरिति **मिश्रमते,** गङ्गापदात्तीरबोधो भवतु इतीच्छया ईश्वरोच्चरितत्वस्य गङ्गापदे, तत्प्रयोज्यतीरोपस्थितौ शाब्दबोधानुकूलत्वस्य च कल्पनामपेक्ष्य, क्लृप्तशक्यसंबन्धप्रयोज्योपस्थितेः शाब्दबोधानुकूलत्वमात्रकल्पने लाघवात्॥

यदि च निरुक्तेच्छया ईश्वरोच्चरितत्वं न शक्तिः, अस्मदाद्युच्चरितघटादिपदस्य, पित्रादिभिः सङ्केतितदेवदत्तादिनाम्नश्च ईश्वरोच्चरितत्वाभावेन अवाचकत्वापत्तेः। अतः निरुक्तसङ्केत एव शक्तिः। सा च सिद्धैवेत्युच्यते।

तदापि लक्षणा स्वीकरणीयैव। तथाहि—एकैकस्य संस्कृतशब्दस्य सन्त्यनेके अपभ्रंशाः। गवादिवाचकत्वस्य अनेकेषु कल्पनाया गौरवमिति, संस्कृतशब्दे एव शक्ति, नापभ्रंशेषु। तदुक्तं जैमिनिना 'अन्याय्यश्चानेकशब्दत्वम्' इति। एवञ्च अपभ्रंशा न वाचकाः। न चैव सति घटपदस्यैव घटवाचकत्वं न कलशादिपदानाम्, अनेकत्र घटवाचकत्वकल्पनाया गौरवादिति पर्यायोच्छेद इति

---

टिप्पणी—

पदाना साधुत्व वाचकत्वमेव। वाक्यस्य तु तत्तद्विशिष्टार्थबोधोपयिकाकाङ्क्षाशालित्वम्। ननु पुण्यजनकतावच्छेदक वैजात्य मानाभावादिति बोध्यम्॥

वाच्यम् । तत्र विनिगमनाविरहात् कलशादिपदेष्वपि शक्तिः सिद्ध्यति । अत्र तु संस्कृतस्य सर्वदेशेषु एकत्वं, अपभ्रंशानां तु देशभेदेन नानात्वमिति अस्ति विनिगमकम् । अतः संस्कृतशब्दे एव शक्तिः । अतएव शक्तिग्राहककोशेषु अपभ्रंशाः पर्यायतया न परिगण्यन्ते । अन्यथा साधूनामेव कोशादौ परिगणनमिति नियमकल्पनेन गौरवं स्यात् ।

अथ अपभ्रंशानामवाचकत्वे कथं तेभ्यः शाब्दबोधः इति चेत्, न ।

व्युत्पन्नस्य गाव्यादिशब्दश्रवणे साधोः गोशब्दस्य स्मरणं जायते । तेनैव तस्य शाब्दबोधः । असंस्कृतज्ञानां देशभाषामात्रविदाञ्च अपभ्रंशेषु शक्तत्वभ्रमात् शाब्दबोधः । कथं तेषां अपभ्रंशेषु शक्तत्वभ्रमो जात इति चेत्, इत्थम् । केनचित् गौरिति शब्दे प्रयोक्तव्ये प्रमादात् गावीशब्दे प्रयुक्ते, व्युत्पन्नः तेन गावीशब्देन गोशब्दमुन्नीय ततो गां प्रतीत्य व्यवहृतवान् । पार्श्वस्थश्च व्युत्पित्सुः, गावीशब्दादेवायं गां प्रतीतवानित्यवगम्य गावीशब्दमेव गोशक्तत्वेन प्रतीत्य अन्येषां व्युत्पादको बभूव । ततोऽन्येषां तेषु शक्तत्वभ्रमो जातः ।

एवञ्च अपभ्रंशे ईश्वरसंकेतस्य सत्त्वेऽपि तस्य अपभ्रंशसंबन्धत्वे मानाभावः इति संबन्धत्वघटितशक्तेः तत्र भ्रमो वाच्यः । तथा च लक्षणाया अनङ्गीकारे गङ्गापदसंकेतस्य तीरादिनानापदार्थसंबन्धत्वं, तत्प्रयोज्यतीराद्युपस्थितेः शाब्दबोधानुकूलत्वञ्च कल्पनीयम् । लक्षणास्वीकारे तु क्लृप्तसंबन्धभावशक्यसंबन्धप्रयोज्यतीरोपस्थितेः शाब्दबोधानुकूलत्वमात्रं कल्पनीयमिति लाघवम् । तस्मात् गङ्गापदस्य तीरे लक्षणैवोचिता ॥

अथवा, अपभ्रंशात् गवादिरूपार्थबोधेऽपि गावीशब्दात् बोधो भवतु, बोधविषयो गौर्भवतु इत्याकारक एवेश्वरसंकेतः, तावतैव तस्य सर्वविषयकत्वनिर्वाहात् । तथा च गवांशे गावीशब्दजन्यबोधविषयत्वस्य बोधविषयतात्वेन प्रकारत्वेऽपि, मानाभावेन गावीशब्दजन्यबोधविषयतात्वेनाप्रकारत्वात्, ईश्वरसंकेतीयगावीशब्दजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वस्य गवि अभावेन, तत्र तदवगाहिज्ञानस्य भ्रमत्वम् । एवञ्च गङ्गापदस्य तीरशक्तत्वे गङ्गापदजन्यबोधविषयः तीरं भवतु इत्याकारिका ईश्वरेच्छा वाच्येति, गङ्गापदजन्यबोधविषय-

तात्वे ईश्वरसङ्केतीयनानापदार्थनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकत्व,तत्प्रयोज्य-तीराद्युपस्थिते शाब्दबोधानुकूलत्व च कल्पनीयम् । गङ्गापदस्य तीरलक्षकत्वे तु, गङ्गापदात् बोधो भवतु, बोधविषय तीर भवतु इत्याकारिकैव ईश्वरेच्छा कल्प्यते । तावतापि तस्या सर्वविषयकत्वनिर्वाहात् । एवञ्च गङ्गापदजन्यबोधविषयतात्वे न नानापदार्थनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकत्व कल्प्यते । अपितु क्लृप्तशक्यसम्बन्धप्रयोज्यतीराद्युपस्थिते शाब्दबोधानुकूलत्वमात्र कल्प्यते इति लाघवम् । तस्मात् लक्षणा स्वीकरणीया । इत्थञ्च लक्षणासिद्धौ तन्निबन्धन-कार्यकारणभावकल्पनाधिक्य न दोष, फलमुखत्वात् ॥

शक्तिज्ञानस्य पदनिष्ठप्रकारतानिरूपितशक्तित्वावच्छिन्नसांसर्गिकविषयता-निरूपितार्थनिष्ठविशेष्यताशालिज्ञानत्वेन लक्षणाज्ञानसाधारणरूपेण शाब्दबोधे कारणत्वम् । कारणतावच्छेदककोटौ शक्तित्वपर्याप्तावच्छेदकताकसांसर्गिक-विषयता न निवेश्यते । शक्यसम्बन्धसंसर्गकपदप्रकारकार्थविशेष्यकज्ञानेऽपि शक्ते. संसर्गतया भानात् निरुक्तकारणतावच्छेदक लक्षणाज्ञानसाधारणमिति **दीक्षित-श्रीकण्ठभट्टाचार्याः** ॥

अथ अतिरिक्ताया लक्षणावृत्ते स्वरूप विविच्यते ।

केचित् प्राचीननैयायिका , लक्ष्यार्थबोधे लक्षणाज्ञानकारणताया सर्व-सम्प्रतिपन्नत्वात्, गङ्गाया घोष इत्यादौ तीरविषयकशाब्दबोधे शक्यग्राहसम्बन्धि-तीरतात्पर्यज्ञानस्य कारणत्वेन क्लृप्तत्वात्, लक्ष्यार्थबोधकारणज्ञानविषयस्य तात्पर्यस्य लक्षणात्वकल्पनमुचितमिति, शक्यसम्बन्धिप्रतीतीच्छयोच्चरितत्वपर्यवसित शक्य-सम्बन्धिनि तात्पर्यं लक्षणेति वदन्ति ॥

अन्ये तु शक्ये तात्पर्यस्य लक्षणात्वाभावात् अशक्ये तात्पर्यं लक्षणेति निरूपयन्ति ।

---

टिप्पणी—

लक्षणाया अङ्गीकारेऽपि न कार्यकारणभावकल्पनागौरवम्, लक्ष्योप-स्थितिसाधारणेन शक्तिप्रयोज्योपस्थितित्वेन, वृत्तिज्ञानजन्योपस्थितित्वेन च कारणत्वाङ्गीकारसम्भवादिति द्वितीयतरङ्गोक्तमप्यत्रानुसन्धेयम् ।

अपरे तु प्रयोक्तुरभिप्रायविशेषाज्ञाने लक्ष्यतीराज्ञानात् अवश्यं ज्ञेयः, स्वार्थसंबन्धेन गङ्गापदं तीरं बोधयिष्यतीति प्रयोक्तुरभिप्रायो लक्षणेति प्रतिपन्नाः ।

अन्ये **जरन्नैयायिकाः**—शक्यादशक्योपस्थितिः लक्षणा । गङ्गायां घोषः इति वाक्यश्रवणे गङ्गापदात् शक्यस्य प्रवाहस्य स्मृतिर्जायते । ततः तत्र घोषाधारत्वान्वयानुपपत्तिप्रतिसन्धानम् । ततः स्मृतगङ्गापदात् पुनः शक्यप्रवाहस्य स्मृतिः । स्मृतेन तेन स्वसंबन्धिनः तीरस्य स्मृतिः । सा लक्षणा । ततः तीरान्वयबोधः । नच वारद्वयं शक्यप्रवाहोपस्थितिकल्पनायां गौरवात् शक्यसंबन्धाख्यसंबन्धेन गङ्गापदमेव तीरस्मारकं स्वीक्रियतामिति वाच्यम् । संबन्धिज्ञानं तत्तत्संबन्धिज्ञानत्वेन अपरसंबन्धिस्मारकमिति, गङ्गापदस्य शक्तिसंबन्धेन प्रवाहस्मृतिप्रयोजकत्वं, प्रवाहस्य स्वसंबन्धितीरस्मृतिप्रयोजकत्वं च क्लृप्तम् । एवञ्च स्मारकत्वेन क्लृप्ताभ्यां गङ्गापदप्रवाहाभ्यामेव शाब्दबोधोपयोगिन्याः तीरोपस्थितेः संभवात्, गङ्गापदस्य शक्यसंबन्धेन तीरस्मारकत्वं न कल्प्यते गौरवात् । इत्थञ्च **लाक्षणिकं पदं नानुभावकम्** इति प्रवादोऽपि संगच्छते । पदं हि वृत्त्या स्वजन्योपस्थितिद्वारा शाब्दबोधे कारणम् । गङ्गापदञ्च न शाब्दबोधविषयसंसर्गप्रतियोगितीरस्मारकमिति न तीरानुभावकमिति प्रतिपादयन्ति ।

---

**टिप्पणी**—

'शब्दव्यापारतो यस्य प्रतीतिस्तस्य मुख्यता ।
अर्थावसेयस्य पुनर्लक्ष्यमाणत्वमुच्यते ।।'

'यस्य तु शब्दव्यापारगम्यार्थपर्यालोचनया अवगतिः तस्य लाक्षणिकत्वम् ।' इति निरूपयन्तो **मुकुलभट्टाः** शक्यादशक्योपस्थितिः लक्षणेति पक्षमनुसरन्ति ।।

अर्थप्रतीतिलक्षणक्रियायां पदं कारकमिति, तत्र क्रियानुकूलव्यापारेण भाव्यमिति, पदगताभिधां व्यापारपदेन व्यपदिशन्तीति बोध्यम् ।

'मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।
अन्योऽर्थो लक्ष्यते यत् सा लक्षणारोपिता क्रिया ।।'

इति काव्यप्रकाशव्याख्यानावसरे शक्यसंबन्धेनाशक्यप्रतिपत्तिर्लक्षणेति प्राचीनमतेनेदं लक्षणमिति **प्रदीपकाराः** निरूपयन्ति ।

केचन मीमांसकाः, शक्यनिष्ठः अशक्यसंबन्धो लक्षणा । सा च पदार्थवृत्तिः । शक्त्या गङ्गापदेन स्मृतः प्रवाहः स्वसंबन्धि तीरं स्मारयति । अतः शक्यार्थः लक्ष्यार्थस्मारकः । अतएव शक्यादशक्योपस्थितिर्लक्षणेति वृद्धतार्किकाः । तत्र शक्यादिति ल्यब्लोपे पञ्चमी । शक्यमाश्रित्येत्यर्थः । अशक्यस्योपस्थितिः येनेति बहुव्रीहिणा अशक्योपस्थितिपदात् अशक्योपस्थितिप्रयोजकः लभ्यते । तथा च शक्याश्रितः अशक्योपस्थितिप्रयोजकः संबन्धो लक्षणेति फलितम् । अन्यथा यथाश्रुते वृत्तिज्ञानप्रयोज्यपदार्थज्ञानस्य शाब्दबोधहेतुत्वं, नतु शाब्दहेतुपदार्थज्ञानस्यैव वृत्तित्वमिति असंगत्यापत्तेः । एवञ्च गङ्गापदार्थप्रवाहनिष्ठः तीरसंयोगो लक्षणेति वदन्ति ।

**वृत्तिवार्तिककृतस्तु**, मुख्यार्थसंबन्धेन शब्दस्य प्रतिपादकत्वं लक्षणा । प्रतिपादकतामात्रं चाभिधायामतिप्रसक्तम्, शक्त्या प्रतिपादकत्वस्याभिधात्वात्, इत्याहुः ।

---

टिप्पणी—

*पदार्थवृत्तिर्लक्षणेति मते, पदेन बोध्यं शक्यमिति, पदार्थेन बोध्यं लक्ष्यमिति च व्यवह्रियते । अभिहितान्वयवादे, पदार्थसंसर्गो वाक्यार्थः लक्ष्यः । गङ्गायां घोषः इत्यत्र गङ्गापदार्थेन लक्ष्यस्य तीरस्य स्मृतिर्जायते । स्मृतये च प्रवाहतीरयोः सबन्धज्ञानमावश्यकम् । वाक्यार्थस्तु अपूर्वः इति शाब्दबोधात् प्राक् तस्य स्मृतिर्नास्ति । अतश्च वाक्यार्थे संबन्धज्ञानं नापेक्षितम् । इत्थञ्च तीरस्य लक्ष्यत्वं गङ्गापदाभिहितप्रवाहस्मार्यत्वम् । वाक्यार्थस्य तु पदार्थानुभाव्यत्वम् । पदार्थबोध्यत्वात् वाक्यार्थे लक्ष्यत्वव्यवहारः । निरूपिततत्त्वमेतत् प्रथमतरङ्गे ॥*

पदार्थव्यापार एव लक्षणा पदे आरोप्य पदवृत्तितया व्यवह्रियते इत्यपि, 'लक्षणारोपिता क्रिया' इति काव्यप्रकाशभाग विवृण्वन्ति । तत्र क्रियापद व्यापारार्थकम् ।

"वाच्यस्यार्थस्य वाक्यार्थे सबन्धानुपपत्तितः ।
तत्संबन्धवशप्राप्तस्यान्वयाल्लक्षणेष्यते ॥"

इति अन्विताभिधानवादिना लक्षणालक्षणं प्रथमतरङ्गे निरूपितं बोध्यम् ॥

अपरे तु मीमांसकाः, वाक्ये लक्षणायाः स्वीकारानुरोधेन बोध्यसंबन्धो ति वदन्ति।

तेषामयमभिसन्धिः—गभीरायां नद्यां घोषः इत्यत्र गभीरनदीतीरवृत्तिर्घोषः शाब्दबोधोऽनुभूयते। स च पदलक्षणया न निर्वहति। तथाहि—न् नदीपदस्य नदीतीरे लक्षणेति युक्तम्। गभीराभेदस्य तीरे बाधेनानन्वया- । नदीपदलक्ष्यार्थैकदेशनद्यां गभीरपदार्थस्याभेदान्वये, पदार्थः पदार्थे- ति न तदेकदेशेन इति व्युत्पत्तिविरोधः। नापि गभीरपदस्य तीरे लक्षणा। दार्थस्यानन्वयापत्तेः। नच विशेष्यवाचकनदीपदस्य गभीरनदीतीरे लक्षणा, दस्य तादृशार्थे लक्षणातात्पर्यग्राहकञ्च गभीरपदमिति वाच्यम्। विनिगमना- हेण गभीरपदमेव गभीरनदीतीरलक्षकं, नदीपदं तात्पर्यग्राहकमित्यस्यापि चत्वात्, विनिगमनाविरहेण सिद्धं चेदुभयमपि सिद्धमेव इति न्यायेन उभयोः योः लक्षणाद्वयं स्यात्। अतः गभीरायां नद्यामिति पदसमुदायरूपवाक्यस्यैव ीरनदीतीरे एका लक्षणा स्वीकर्तुं युक्ता। तादृशपदसमुदायेन बोध्यायाः ीराभिन्ननद्याः संबन्धस्य तत्तीरे सत्त्वात्।

नच नदीपदशक्यार्थस्य तीरे साक्षात् संबन्धोऽस्ति। गुणवाचकगभीर- ार्थगाम्भीर्यस्य तु तीरे नदीद्वारकः परम्परासंबन्धः। तेन गभीरपदात् लक्ष्यार्थोप- तिमपेक्ष्य, नदीपदात् साक्षात्संबन्धेन तादृशार्थोपस्थितिः शीघ्रमेव संभवतीति निगमकमस्ति नदीपदे लक्षणायामिति वाच्यम्। 'निम्नं गभीरं गम्भीरम्' इति ोशात् गभीरशब्दस्य गाम्भीर्यविशिष्टवाचकत्वेन गभीरपदार्थतीरयोः साक्षा- ंबन्धस्यैव सत्त्वेन उक्तविनिगमनानवकाशात्। नच लाघवात् नीलादिपदाना- ेव गभीरपदस्यापि गाम्भीर्ये धर्मे शक्तिरिति वाच्यम्। गुणे स्वारसिकस्य नीलो र्णः इत्यादेः प्रयोगस्येव, गाम्भीर्ये गभीरपदस्य स्वारसिकप्रयोगाभावेन तस्य ाम्भीर्यवाचिताविरहात्। अन्यथा घटादिपदानामपि लाघवात् नैयायिकमते टत्वमात्रवाचकतापत्तेः।

नच विशेषणवाचकपदोत्तरविभक्तेः प्रयोगसाधुत्वमात्रार्थत्वात्, विशेष्य- वाचकनदीपदोत्तरसप्तम्येव आधेयत्वबोधिका। सा च न गभीरपदार्थगभीरनदी-

तीरान्विताधेयत्वावगाहिशाब्दबोधं जनयेत् । प्रत्ययानां स्वप्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः, गभीरपदस्य च तदप्रकृतित्वात् । अतः आधेयत्वार्थकसप्तमीप्रकृतौ नदीपदे एव लक्षणोचितेति वाच्यम् । गभीरपदस्य तादृशनदीतीरलक्षकत्वे तस्य विशेषणपदत्वाभावेन तदुत्तरसप्तम्या आधेयतार्थकतासंभवात् । प्राधम्यात् गभीरपदस्य लक्षणाङ्गीकारे, अन्यत्र विशेषणपदोत्तरविभक्तेः साधुतासंपादकत्वेऽपि, अत्र विशेष्यवाचकपदोत्तरविभक्तेः साधुतासंपादकत्वकल्पनसंभवात्, विशेषणपदोत्तरविभक्तित्वेन सामान्यतः साधुत्वार्थकताकल्पनायां मानाभावाच्च ॥

ननु, कीदृशवाक्ये लक्षणा स्वीक्रियते । न तावत् गभीरायां नद्यामिति वाक्ये । तदुत्तरं सप्तम्या विरहेण लक्ष्यगभीरनदीतीरान्विताधेयत्वबोधासंभवात् । नच तादृशवाक्यलक्ष्यस्य आधेयतासंबन्धेनैव घोषपदार्थे अन्वयः संभवतीति वाच्यम् । तादृशसमुदायस्य अर्थवत्त्वे नामत्वात् तदर्थस्य आधेयतासंबन्धेन घोषनामार्थे अन्वयस्य नामार्थयोरिति व्युत्पत्तिविरुद्धत्वात् । नापि गभीरायां नदीति भागे लक्षणा । अभेदान्वयबोधे समानविभक्तिकत्वस्य तन्त्रत्वात्, गभीरायां नदीति भागेन गभीराभिन्ननदीबोधासंभवेन तादृशसमुदायबोध्याप्रसिद्धया तत्संबन्धात्मकलक्षणाया असंभवात् । यदि, समानविभक्तिकत्वं नाभेदान्वयबोधे तन्त्रं, स्तोकं पचतीत्यत्र स्तोकपदासमानविभक्तिकपचधातूपस्थापिते पाके द्वितीयान्तस्तोकपदार्थाभेदान्वयबोधात् । अपितु विरुद्धविभक्तिराहित्यमेव । गभीरपदोत्तरविभक्तिविरुद्धविभक्तिराहित्यञ्च नदीपदे वर्तते इति तद्भागबोध्यः प्रसिद्ध इतीति मन्यते । तदापि, गभीरनदीतीरान्विताधेयत्वबोधो न स्यात्, प्रत्ययानां स्वप्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः, गभीरायां नदीति भागस्य च सप्तमीप्रकृतित्वाभावादिति चेत्, न ।

**नवीना आलङ्कारिकाः—**

शक्यतावच्छेदकारोपविषयनिष्ठः शक्यसंबन्धो लक्षणा। गङ्गापदशक्यप्रवाहसामीप्यं गङ्गापदस्य तीरे लक्षणा। तया च गङ्गापदात् तीरत्वविशिष्टस्य स्मृतिर्जायते। यद्रूपविशिष्टतया गृहीते संबन्धग्रहः जातः, एकसंबन्धिज्ञाने सति तेनैव रूपेणापरसंबन्धिनः स्मरणस्यानुभवसिद्धत्वात्। परन्तु पदजन्यतीरत्वविशिष्टोपस्थित्या गङ्गात्वेन तीरविषयकः, गङ्गावृत्तिर्घोषः इत्याकारकः शाब्दबोधो जायते। तीरे घोषः इति प्रयोक्तव्ये सति, गङ्गापदशक्यार्थप्रवाहगतशैत्यपावनत्वादिप्रतिपत्तये हि गङ्गायां घोषः इति प्रयुज्यते। गङ्गात्वेन तीरशाब्दबोधे सत्येव तीरे गङ्गावृत्तिधर्मविशेषप्रतिपत्तिर्जायते। तदुक्तं **काव्यप्रकाशे**, "तटादीनां गङ्गादिशब्दैः प्रतिपादने तत्त्वप्रतिपत्तौ हि प्रतिपिपादयिषितप्रयोजनसंप्रत्ययः।" इति।

इत्थञ्चानुभवानुरोधात् शक्यतावच्छेदकप्रकारकलक्ष्यार्थविषयकशाब्दबोधे लक्षणाज्ञानस्य कारणत्वं कल्प्यते। न च पदार्थोपस्थितिशाब्दबोधयोः समानप्रकारकयोरेव कार्यकारणभावात्, तीरत्वप्रकारकतीरस्मृतेः गङ्गात्वप्रकारकतीरशाब्दबोधो न संभवतीति वाच्यम्। लाक्षणिकबोधातिरिक्तशाब्दबोधे एव समानप्रकारकपदार्थोपस्थितेः हेतुत्वं कल्प्यते, निरुक्तानुभवानुरोधादेव। न च गङ्गात्वेन रूपेण घोषाधारत्वानन्वयनिश्चयस्य सत्त्वात् गङ्गात्वेन घोषाधारत्वावगाही शाब्दबोधो न संभवतीति वाच्यम्। समानप्रकारकत्वे सति समानविशेष्यकस्यैवायोग्यताज्ञानस्य प्रतिबन्धकत्वात्, गङ्गात्वेन प्रवाहे घोषाधारत्वानन्वयनिश्चयेऽपि गङ्गात्वेन तीरे घोषाधारत्वशाब्दबोधे बाधकाभावात्। तस्मात् लक्षणया गङ्गापदात् तीरत्वेनोपस्थितस्यापि तीरस्य गङ्गात्वेनैव शाब्दबोधः, इति **वदन्ति**॥

**नव्यनैयायिकास्तु—**

सर्वेषां शब्दानां सर्वार्थवाचकत्वे मानाभावात् गङ्गापदस्य तीरे न शक्तिः। गङ्गापदोपस्थापिततीरस्य शाब्दबोधे भानात्, शाब्दबोधौपयिकतीरस्मृतिप्रयोजकः गङ्गापदतीरयोः कश्चन संबन्धो वाच्यः। पदज्ञानस्य एकसंबन्धिज्ञानविधयैव पदार्थोपस्थितिजनकत्वनियमात्। यत्र शक्यसंबन्धज्ञानादेव तीरमुपस्थितं तत्र

तीरान्वितशाब्दबोधस्य सर्वानुभवसिद्धत्वात् शाब्दबोधौपयिकपदार्थस्मृत्यौपयिकत्वेन संप्रतिपन्नः सत सिद्धसंबन्धभावः शक्यसंबन्धः तादृशः संबन्ध इति सैव लक्षणा। गङ्गायां घोषः इत्यत्र गङ्गापदस्य स्वशक्यप्रवाहसामीप्यं लक्षणा।

यथा विशेष्यस्य धूमानुयोगिकत्वात् संसर्गविशेषणसंयोगस्य चक्षुरिन्द्रियप्रतियोगिकत्वाच्च, संयुक्तविशेष्यकज्ञानप्रकारीभूतं धूमत्वं चक्षुरिन्द्रियव्यवहितधूमयोः संबन्धः। तथा सामीप्यस्य विशेष्यस्य लक्ष्यतीरानुयोगिकत्वात्, विशेषणीभूतायाः शक्तेः पदप्रतियोगिकत्वाच्च शक्यसंबन्धः गङ्गापदतीरयोः संबन्धः। स च स्वप्रतियोगिवाचकत्वरूपपरम्परासंबन्धेन शब्दनिष्ठत्वात् शब्दव्यापारः इति व्यवह्रियते।

शक्यसंबन्धिप्रतीतीच्छयोच्चरितत्वपर्यवसितं शक्यसबन्धिनि तात्पर्यं तु न लक्षणा। यतः वृत्त्या पदोपस्थापितार्थे प्रकरणादिना वक्तृतात्पर्यज्ञानं जायते। लक्ष्यार्थस्मृतये लक्षणाया वृत्तेर्ज्ञानमपेक्षितम्। शाब्दबोधानुकूलपदार्थस्मृत्यौपयिकसंबन्धस्य वृत्तित्वात्। तात्पर्यस्य लक्षणात्वे तज्ज्ञानं पदार्थस्मृतेः पूर्वं न संभवतीति सा वृत्तिर्न स्यात्। शक्यसंबन्धस्यैव लक्षणात्वसंभवेन तदतिरिक्तांशस्य वैयर्थ्यञ्च। एवं तात्पर्यानुपपत्तेः लक्षणाबीजत्वं न स्यात्, स्वानुपपत्तेः स्वबीजत्वासंभवात्। अपि च, प्रवाहे तात्पर्यं गङ्गापदस्य शक्तिः स्यात्।

न चेष्टापत्तिः, शक्त्यतिरिक्ताया लक्षणाया एवासिद्धिप्रसङ्गात्। यदि तात्पर्यनिर्वाहकतया तात्पर्यातिरिक्ता शक्तिः स्वीकरणीया, स्वस्य स्वनिर्वाहकत्वानुपपत्तेरिति मन्यते। तदा लक्ष्यार्थतात्पर्यनिर्वाहकतया तात्पर्यातिरिक्तैव लक्षणावृत्तिः स्वीकरणीयेत्युक्तमेव।

एतेन, अशक्ये तात्पर्यं लक्षणेत्यपि निरस्तम्।

किञ्च, घटमानयेति वाक्यजन्यशाब्दबोधे भासमाने घटकर्मत्वयोः पदार्थयोः संसर्गे (आधेयत्वे) वक्तुस्तात्पर्यमस्तीति अशक्ये संसर्गे लक्षणा स्यात्। न च शक्यसंबन्धो लक्षणेति मतेऽपि आधेयत्वरूपसंसर्गे घटपदशक्यघटस्य प्रतियोगित्वादिः संबन्धोऽस्तीति संसर्गस्य लक्ष्यत्वं दुर्वारमिति वाच्यम्। लाक्षणिकव्यतिरिक्तेऽपि गङ्गाया मीनः इत्यादौ गङ्गापदशक्यप्रवाहसंबन्धः तीरे वर्तते।

तीरान्वितसप्तम्यर्थाधारताबोधः संभवतीति वाच्यम् । तथा सति शब्दं जानातीति वाक्यात् आकाशविषयकत्वाश्रगाहिशाब्दबोधापत्तेः । आकाशस्य द्वितीयाप्रकृत्यर्थशब्देन समवायेनोपस्थापितत्वात्, तदन्वितविषयत्वबोधकतायाः द्वितीयायां संभवात् । समवायेन प्रकृत्यर्थोपस्थापितार्थान्वितस्वार्थबोधकतायाः प्रत्यये स्वीकाराभावे, यत्र लक्ष्यार्थे शक्यस्य संबन्धः समवायः, तत्र घटादितात्पर्येण प्रयुक्ते नीलमानयेत्यादौ नीलरूपविशिष्टघटावन्वितकर्मतादिविभक्त्यर्थविषयकः शाब्दबोधो न स्यात् । नीलपदशक्यार्थनीलरूपेण समवायेनैव तद्विशिष्टघटस्योपस्थापितत्वात् ।

न च प्रत्ययानां प्रकृतितात्पर्यविषयार्थान्वितस्वार्थबोधकत्वमिति व्युत्पत्तिः स्वीक्रियते । तीरस्य गङ्गापदतात्पर्यविषयत्वात् तेन विभक्त्यर्थान्वयः । शब्दं जानातीत्यत्र आकाशस्य शब्दपदतात्पर्यविषयत्वाभावात् न तेन विभक्त्यर्थान्वय इति वाच्यम् । स्वोपस्थापकप्रकृतिकत्वरूपप्रकृत्यर्थत्वापेक्षया स्वप्रतिपादनेच्छयोच्चरितप्रकृतिकत्वरूपस्य प्रकृतितात्पर्यविषयत्वस्य गुरुत्वेन प्रत्ययजन्योपस्थितिजन्यतावच्छेदकस्यातिगुरुत्वेनायुक्तत्वात् ।

न च प्रकृत्यर्थत्वं वृत्त्या प्रकृतिजन्योपस्थितिविषयत्वम् । वृत्तित्वं च शाब्दबोधानुकूलपदार्थोपस्थितिप्रयोजकपदतदर्थसंबन्धत्वम् । एवञ्च निरुक्तवृत्तिज्ञानसहकृतप्रकृतिज्ञानजन्योपस्थितिविषयत्व प्रकृत्यर्थत्वमिति पर्यवसितम् । तदपेक्षया च न प्रकृतितात्पर्यविषयत्वं गुरुभूतमिति वाच्यम् । वह्नितात्पर्येण धूमोऽस्ति इति प्रयुज्यते । तत्र धूमपदस्य न वह्नौ लक्षणा, धूमपदोपस्थितधूमेन वह्नेरनुमातुं शक्यत्वेन अन्यलभ्यत्वात्, अनन्यलभ्यस्य शब्दार्थत्वात् । तत्र धूमपदतात्पर्यविषयवह्निना प्रत्ययार्थान्वयबोधः स्यात् । तस्मात् प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिरेव स्वीकरणीया । तत्र च तीरान्विताधारताबोधो न स्यादित्युक्तमेव ।

व्युत्पत्त्यन्तरकल्पनापेक्षया, स्मृतिप्रयोजकत्वेन क्लृप्तसंबन्धभावस्य शक्यसंबन्धस्य, शक्तेरिव पदवृत्तित्वकल्पनमेव लाघवादुचितमित्यपि बोध्यम् ॥

एतेन, शक्यनिष्ठः अशक्यसंबन्धः लक्षणा पदार्थवृत्तिः इत्यपि परास्तं वेदितव्यम् । निरुक्तसरण्या तीरान्वितप्रत्ययार्थाधारताबोधानुपपत्तेः ॥

'मुख्यार्थसंबन्धेन शब्दस्य प्रतिपादकत्वं लक्षणा।' इति वृत्तिवार्तिकं तु समालोच्यते।

मुख्यार्थसंबन्धेनेति तृतीयान्तार्थस्य मुख्यार्थसंबन्धप्रयोज्यत्वस्य, शब्दस्येति षष्ठ्यन्तार्थस्य शब्दनिष्ठत्वस्य च प्रतिपादकत्वे अन्वयात्, मुख्यार्थसंबन्धाधीनं शब्दनिष्ठं प्रतीतिजनकत्वं लक्षणेति वाक्यार्थः संपद्यते।

तत्र गङ्गाशब्दस्य तीरप्रतीतिजनकतायां मुख्यार्थसंबन्धः कथं प्रयोजक इति वक्तव्यम्। संबन्धिनो गङ्गापदस्य अपरसंबन्धितीरस्मृतिजनकतायां संबन्धविधया मुख्यार्थसंबन्धः प्रयोजकः इति यद्युच्यते। तदा शाब्दबोधानुकूलपदार्थोपस्थित्यौपयिकसंबन्धत्वरूपं वृत्तित्वं मुख्यार्थसंबन्धस्य क्लृप्तमिति तस्यैव लक्षणात्वमुचितम्, न तु तत्प्रयोज्यप्रतीतिजनकतायाः, मानाभावात् गौरवाच्च। न च मुख्यार्थसंबन्धेनेति तृतीयार्थः अवच्छिन्नत्वं प्रतिपादकत्वेऽन्वेतीति मुख्यार्थसंबन्धावच्छिन्ना प्रतिपादकता लक्षणेति वाक्यार्थ इति वाच्यम्। लक्ष्यनिष्ठस्य मुख्यार्थसंबन्धस्य शब्दनिष्ठायां प्रतीतिजनकतायामवच्छेदकत्वासंभवात्। स्वप्रतियोगिवाचकत्वसंबन्धेन तस्य पदनिष्ठत्वेऽपि, जनकतावच्छेदकस्य मुख्यार्थसंबन्धस्यैव वृत्तित्वसंभवे, निरुक्तपरम्परया तदवच्छिन्न प्रतीतिजनकतायाः लक्षणात्वकल्पने गौरवात्।

न च प्रतिपादकत्वं प्रतिपत्त्यनुकूलो व्यापारः। तृतीयान्तार्थं मुख्यार्थसंबन्धप्रयोज्यत्वं प्रतिपत्तावन्वेति। एवञ्च मुख्यार्थसंबन्धप्रयोज्यप्रतीत्यनुकूलव्यापारः लक्षणेति वाक्यार्थः इति वाच्यम्। क्लृप्तसंबन्धभावस्य मुख्यार्थसंबन्धस्य लक्ष्योपस्थितिप्रयोजकतया, तस्यैव लक्षणाव्यापारत्वसंभवेन व्यापारान्तरकल्पनायां मानाभावात्, मुख्यार्थसंबन्धो लक्षणा इत्येवाभिधातुमुचितत्वात्।

यदि च धान्येन धनवानित्यत्रेव मुख्यार्थसंबन्धेनेत्यत्र तृतीयार्थः अभेदः। स च व्यापारान्वयी। मुख्यार्थसंबन्धाभिन्नः प्रतिपत्त्यनुकूलव्यापारो लक्षणेति वाक्यार्थः इति मन्यते। तदा लक्षणायां संबन्धनिमित्तकत्वप्रतिपादकेन "तस्मात् सादृश्यगर्भतदन्यसंबन्धनिमित्ततया गौणी शुद्धा चेति लक्षणाया एव द्वैविध्यम्।" इत्यग्रिमग्रन्थेन नानुकूलता इति॥

वाक्ये लक्षणानुरोधात् बोध्यसम्बन्धो लक्षणेत्यपि न समञ्जसम् ।

पदविशेषघटितानुपूर्व्याः लक्षकतावच्छेदकत्वकल्पने गौरवात्, उभयवादिसंप्रतिपन्नया पदलक्षणयैव निर्वाहसंभवाच्च । तथाहि—गभीरायां नद्यां घोषः इत्यत्र गभीराभिन्ना नदीति बोधानन्तरं नदीपदं गभीरपदं वा गभीरनदीतीरं लक्षयति न वाक्यम् । विनिगमनाविरहात् पदद्वये लक्षणास्वीकारेऽपि नान्यतरपदवैयर्थ्यम् । नदीपदेन गभीरनदीतीरबोधे जननीये गभीरपदसमभिव्याहारो नियामकः । गभीरपदेन तादृशबोधे जननीये नदीपदसमभिव्याहारो नियामकः इति परस्परतात्पर्यग्राहकत्वात् ।

वस्तुतस्तु, नदीपदस्यैव गभीरनदीतीरे लक्षणा । गभीरपदं तात्पर्यग्राहकम् । नीलायां यमुनायां घोषः, शुक्लायां गङ्गायां घोषः, इत्यादौ नीलशुक्लादिविशेषणपदशक्यार्थरूपेण लक्ष्यस्य तीरस्य परम्परासम्बन्धः, विशेष्ययमुनागङ्गादिपदार्थेन तु साक्षात्सम्बन्धः इति विनिगमकसद्भावेन विशेष्यवाचकपदे एव लक्षणायाः क्लृप्तत्वात्, गभीरायां नद्यां घोषः इत्यत्रापि विशेष्यवाचकनदीपदे एव तत्कल्पनाया उचितत्वात् । तस्मात् पदलक्षणयैवोपपत्तेः वाक्ये लक्षणा नावश्यकी ।

गभीरायां नदीति भागस्य गभीरनदीतीरलक्षकत्वे गभीरायां नदीं व्रजेत् इति वाक्यादपि गभीरनदीतीरकर्मकव्रजनादिशाब्दबोधः स्यात् । एवं, लक्षकस्य गभीरायां नदीति भागस्य नामत्वात् तदन्तर्गतगभीरपदोत्तरसप्तमी लुप्येत । 'सुपो धातुप्रातिपदिकयोः' (पा. सू. 2-4-71) इत्यनुशासनात् । न च तस्य प्रातिपदिकसंज्ञैव नास्ति, 'कृत्तद्धितसमासाश्च' (पा. सू. 1-2-46) इति नियमकरणात्, पदसमुदायरूपस्य निरुक्तस्य समासत्वाभावादिति वाच्यम् । तथा सति गभीरायां नदीति भागोत्तरं सप्तम्या एवासंभवात् । प्रातिपदिकात्सुबुत्पत्तेरेव 'ङ्याप्प्रातिपदिकात्' (पा. सू. 4-1-1)' इत्यनुशासनसिद्धत्वात् । गभीरायां नद्यामिति भागस्य गभीरनदीतीरवृत्तिलक्षकत्वे लक्ष्यार्थस्य घोषपदार्थे अभेदान्वयो न संभवति । तत्प्रयोजकस्य पदयोः समानविभक्तिकत्वस्य विरहात् । तस्मात् वाक्ये लक्षणा न संभवति ।

किञ्च, स्वबोध्यसंबन्ध इत्यत्र स्वबोध्यत्वं स्वजन्योपस्थितिविषयत्वं, स्वजन्यशाब्दबोधविषयत्वं वा विवक्षितम्। आद्ये समवायेन घटपदजन्यस्मृतिविषयाकाशसंबन्धस्य पटे सत्त्वात् पटस्य घटपदलक्ष्यत्वव्यवहारापत्तिः। द्वितीये गङ्गायां घोषः इत्यत्र गङ्गापदस्य लाक्षणिकत्वानुपपत्तिः। बाधज्ञानपर्यवसितस्य अन्वयानुपपत्तिज्ञानस्य प्रतिबन्धकस्य सत्त्वेन तत्र गङ्गापदात् प्रवाहान्वितविषयकशाब्दबोधाजननात् प्रवाहस्य गङ्गापदबोध्यत्वाभावात् तत्संबन्धस्य लक्षणात्वानुपपत्तेः। अतः शक्त्या स्वजन्योपस्थितिविषयत्वमेव स्वबोध्यत्वं वक्तव्यम्। एवञ्च शक्तिप्रयोज्यस्वजन्योपस्थितिविषयसंबन्धापेक्षया लाघवात् शक्यसंबन्धस्यैव लक्षणात्वमुचितं वोध्यम्॥

तथा च गङ्गापदस्य तीरे शक्यसंबन्धः (लक्षणा) संबन्धः इति, एकसंबन्धिनः गङ्गापदस्य ज्ञाने अपरसंबन्धिनः तीरस्य स्मृतिर्जायते। गङ्गापदस्य येन येनार्थेन संबन्धग्रहो जातः तस्य सर्वस्यापि स्मरणे, स्मृतशक्यार्थप्रवाहस्य घोषपदार्थान्वयानुपपत्तिप्रतिसन्धाने सति, वृत्त्युपस्थापिते तीरे प्रकरणादिना तात्पर्यज्ञानमुदेति। ततः तीरान्वितविषयकः शाब्दबोधो भवति। न च प्रवाहवृत्तिर्घोषः इति बोधाजनने कथं तत्रानुपपत्तिप्रतिसन्धानं संभवतीति वाच्यम्। वाक्यार्थस्यापूर्वत्वेऽपि शाब्दबोधात्पूर्वं तात्पर्यज्ञानस्येव, तत्तत्पदार्थस्मरणे सति अनुपपत्तिप्रतिसन्धानस्यापि संभवाविरोधात्।

यद्रूपवत्त्वेन गृहीते संबन्धज्ञानं, एकसंबन्धिज्ञानेन तेनैव रूपेण अपरसंबन्धिनः स्मृतिरनुभवसिद्धा। तीरत्वविशिष्टे संबन्धज्ञानं जातमिति गङ्गापदात् तीरत्वेनैव तीरस्य स्मृतिः। समानप्रकारकयोरेव पदार्थोपस्थितिशाब्दबोधयोः कार्यकारणभावात् तीरत्वेनैव तीरशाब्दबोधः।

इत्थञ्च शक्यतावच्छेदकप्रकारकलक्ष्यार्थबोधे लक्षणाज्ञानस्य कारणत्वं, समानप्रकारतया पदार्थोपस्थितिशाब्दबोधयोः कार्यकारणभावस्य लाक्षणिकबोधातिरिक्तविषयकत्वं च न कल्पनीयम्। न च गङ्गात्वेन तीरस्याभाने गङ्गागतशैत्यपावनत्वादीनां न तीरे प्रतीतिरिति प्रयोजनं न लभ्येतेति वाच्यम्। तीरस्य गङ्गापदप्रतिपाद्यत्वज्ञानात् मानसात् गङ्गागतशैत्यपावनत्वादीनां तीरे प्रतीतिः संभवति। स्पष्टश्चायमर्थः **काव्यदर्पणे**।

ननु देवदत्ते अजधनत्वस्य यज्ञदत्ते अविधनत्वस्य चान्वयतात्पर्येण अजाविधनौ देवदत्तयज्ञदत्तौ इति प्रयोगवारणाय समस्यमानपदार्थयोरेकधर्माव-च्छिन्नान्वये एव द्वन्द्वसमाससाधुतायाः स्वीकरणीयतया, गङ्गापदलक्ष्यतीरस्य तीरत्वेन बोधे गङ्गायां मीनघोषौ स्तः इत्यत्र मीनघोषयोरेकधर्मावच्छिन्नान्वयाभावात् द्वन्द्वो न साधुः स्यादिति गङ्गात्वेन लक्ष्यतीरबोध आवश्यक इति चेत्। न।

समस्यमानपदार्थयोरेकपदोपस्थाप्यान्वयित्वे द्वन्द्वसमाससाधुतास्वीकारेऽपि निरुक्तप्रयोगवारणसंभवात्। तत्र एकपदोपस्थाप्यान्वयाभावात्। गङ्गायां मीन-घोषौ स्तः इत्यत्र तीरत्वेन भासमानस्यापि तीरस्य मीनान्वयिप्रवाहोपस्थापकगङ्गा-पदेनैवोपस्थापितत्वात् तदन्वयेऽपि द्वन्द्वसाधुतानिर्वाहात्। न चैवं नियमस्वीकारे अजाग्रामौ नयतीति साधु स्यात्, नीधातुनोपस्थापितसंयोगे ग्रामस्य, तेनैवोपस्थापि-तायाः संयोगावच्छिन्नक्रियायामजायाश्चान्वयविवक्षायाम् एकपदोपस्थाप्यान्वयि-त्वस्याक्षतत्वादिति वाच्यम्। तुल्यतया एकपदोपस्थाप्यान्वयितायाः एव द्वन्द्व-साधुताप्रयोजकत्वोपगमात्। नीधातोः संयोगावच्छिन्नक्रियानुकूलव्यापारे शक्त-त्वात्, तेन धातुना संयोगस्य व्यापारविशेषणतावच्छेदकतया, क्रियायाः व्यापार-विशेषणतया चोपस्थितत्वात्, तयोस्तुल्यतया एकपदोपस्थाप्यत्वाभावात् निरुक्ता-न्वयविवक्षायां द्वन्द्वस्यासाधुत्वात्। गङ्गायां मीनघोषौ स्तः इत्यत्र लक्ष्यतीरस्यापि शक्यप्रवाहस्येव विशेष्यतया गङ्गापदेनोपस्थापितत्वात् तुल्यतया एकपदोपस्थाप्या-न्वयित्वसत्त्वेन द्वन्द्वसाधुतानिर्वाहश्च।

अथवा गङ्गायां मीनघोषौ स्तः इत्यत्र गङ्गापदस्य गङ्गातीरोभयत्वावच्छिन्ने लक्षणा। मीनघोषोभयत्वावच्छिन्नं गङ्गातीरोभयत्वावच्छिन्नवृत्ति इति शाब्दबोधः। तदुत्तरं मीने प्रवाहवृत्तित्वस्य घोषे तीरवृत्तित्वस्य च मानसो बोधो जायते। इत्थञ्च समस्यमानपदार्थयोः एकधर्मावच्छिन्नान्वयनियमस्वीकारेऽपि न दोषः। गङ्गापदलक्ष्यतावच्छेदकोभयत्वरूपैकधर्मावच्छिन्नान्वयित्वस्याक्षतत्वात्। तस्मात् शक्यतावच्छेदकरूपेण लक्ष्यार्थभानं नावश्यकमिति बोध्यम्।

लाक्षणिकवाक्यजन्यः शाब्दबोधः न भ्रमः, तीरत्वादिनैव लक्ष्यतीरा-वगाहनात्। 'आयुर्घृतम्' इति वेदवाक्यजन्यशाब्दबोधः प्रमैवेति, शाब्दबोध-

समानाकारज्ञानवतः वेदकर्तुः भ्रमवत्त्वं नापादयितुं शक्यते। अन्यथा आयुष्ट्वेन घृतशाब्दबोधस्य भ्रमत्वात् प्रयोगहेतुभूततत्समानाकारज्ञानवतः वेदकर्तुरीश्वरस्य भ्रमवत्त्वं आपद्येत।

कमलानि कमलानि इत्यत्र लाक्षणिककमलपदात् सौरभविशिष्टकमलत्वेन बोधः। दण्डवान् रक्तदण्डवानित्यत्रेव विधेयांशे अधिकावगाहिबोधजननात् न व्युत्पत्तिविरोधः। वृक्षः महीरुहः इति व्याख्यानवाक्ये वृक्षपदस्य तत्पदप्रतिपाद्ये लक्षणा। वृक्षपदप्रतिपाद्यत्वमहीरुहत्वयोः उद्देश्यतावच्छेदकविधेयतावच्छेदकयोः भेदादभेदान्वयबोधः सम्यगुपपद्यते।

'अतद्भावेऽपि तदुपचारः' इति न्यायसूत्रावयवं, अतच्छब्दस्य तेन शब्देनाभिधानमिति विवृण्वन्ति **न्यायभाष्यकाराः**। "सहचरणात्, यष्टिकां भोजयेति यष्टिकासहचरितब्राह्मणोऽभिधीयते" इत्यादिना तेन शब्देनाभिधाने निमित्ततया सहचरणादिकमेव निरूपयन्ति, न त्वारोपम्। इत्यत्र केषांचित् प्राचीननैयायिकानां शक्यतावच्छेदकारोपस्वीकारोऽपि नादरणीयः। तथैव सम्यगुपपद्यते 'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा।' इत्यभियुक्तोक्तिः॥

केचित्, शक्याविनाभाव एव लक्षणा। शक्यविनाभूतस्यार्थस्य लाक्षणिकस्थले शाब्दबोधाभावात्। मञ्चाः क्रोशन्ति इत्यादावपि पुरुषे मञ्चपदलक्ष्यार्थे शक्यार्थाविनाभावः क्रोशनकाले वर्तते इति न लक्षणानुपपत्तिरिति मन्यन्ते॥

तन्न समञ्जसम्। घटमुच्चारय इत्यादौ घटशब्दस्य स्वस्मिन् लक्षणायाः नैयायिकसिद्धाया अनुपपत्तेः। घटपदशक्यार्थेन घटपदस्य देशतः कालतो वा अविनाभावस्याभावात्। यत्रान्वययोग्यौ शक्याविनाभूतौ द्वावर्थौ संभवतः, तत्र एक एव शक्याविनाभूतोऽर्थः शाब्दबोधे भासते इत्यस्य तात्पर्येणैव निर्वाह्यत्वात्, शक्यसंबन्धमात्रस्य लक्षणात्वेऽपि, तात्पर्यविरहेणैव शक्यविनाभूतस्यार्थस्य शाब्दबोधवारणसंभवात्, शक्याविनाभावस्य लक्षणात्वस्वीकारस्य व्यर्थत्वाच्च॥

तस्मात् शक्यसंबन्धो लक्षणा। संबन्धश्च साक्षात्परम्परासाधारणः। गङ्गायां घोषः इत्यत्र तीरे शक्यप्रवाहस्य साक्षात्संबन्धः। इन्द्रा स्थूणा इत्यादौ

तत्कर्मकपूजाप्रयोजनकत्वादिकं परम्परासंबन्धः । लक्षणयापि शैत्यपावनत्वादीनां प्रतीतिः संभवतीति वादिनां 'प्रयोजनं न लक्ष्यं संबन्धाभावात्' इति ग्रन्थसंगमनस्यानावश्यकत्वात् ।

उपचाराख्या लक्षणाव्यतिरिक्ता जघन्या वृत्तिरस्ति । अनियतसंबन्धेन अन्यत्र वृत्तिरुपचारः । यथा मञ्चाः क्रोशन्ति इत्यत्र मञ्चपदस्य पुरुषे । मञ्चपुरुषसंबन्धस्यानियतत्वात् । नियतसंबन्धेनान्यत्र वृत्तिः लक्षणा । यथा गङ्गायां घोषः इत्यत्र गङ्गापदस्य तीरे । प्रवाहतीरयोः संबन्धस्य नियतत्वात्, इति एके वदन्ति ।

तन्न, संबन्धे अवान्तरवैलक्षण्यसत्त्वेऽपि शक्यसंबन्धस्योभयत्र तुल्यत्वात् उपचारस्य लक्षणायामेवान्तर्भावस्योचितत्वात् न समञ्जसमिति मन्तव्यम् ।

ननु तथापि लक्षणातिरिक्ता गौणी जघन्या वृत्तिरस्ति । सिंहो माणवकः इत्यत्र सिंहशब्दस्य माणवके वृत्तिर्गौणी । न चात्र शक्यसिंहसादृश्यसंबन्धेन सिंहपदस्य माणवके वृत्तिः लक्षणैवेति शङ्कनीयम् । यतः शक्यसंबन्धरूपा वृत्तिः संबन्धितीरादिकमुपस्थापयति । तस्य शाब्दबोधे भानार्थेव लक्षणावृत्तेः स्वीकारात् । न तु तस्यैव शाब्दबोधे भानम् । स्वोपस्थापकत्वाभावात् । ततश्च सिंहसादृश्यस्य लक्षणात्वे तस्य शाब्दबोधे भानं न निर्वहति । तस्मात् शक्यवृत्तिलक्ष्यमाणगुणसंबन्धः गौणी वृत्तिः । सिंहपदस्य सिंहवृत्तिशौर्यादिगुणलक्षणया तद्वति माणवके वृत्तिः । तदुक्तम्—'लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता' इति । अत एवेयं गौणी वृत्तिद्वयात्मिका लक्षणापेक्षया दुर्बलेत्युच्यते इति चेत्, न ।

सादृश्यविशिष्टानुयोगिकः शक्यसंबन्धः गौणी वृत्तिः । "सादृश्यलक्षणा गौणीति तल्लक्षणात्" इति माधवीयशक्तिवादविवृतेः । सिंहशब्दस्य सादृश्यविशिष्टे लक्षणा । सादृश्यं च सिंहवृत्तिशौर्यादिगुणवत्त्वम् । तच्च लक्ष्यतावच्छेदकम् । तदवच्छिन्नानुयोगिकः शक्यसंबन्धः लक्षणैव । सादृश्यपर्यवसितशौर्यादिगुणैः स्वावच्छिन्नानुयोगिकत्वसंबन्धात् सा गौणीति व्यवह्रियते । 'लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता' इत्यस्यायमेवार्थः । गुणानां लक्ष्यमाणत्वकथनं लक्ष्यतावच्छेदकत्वाभिप्रायकम् वृत्तौ स्वावच्छिन्नानुयोगिताकत्वरूपयोगविशेषपरिचया-

येव। इत्थञ्च लक्ष्यतावच्छेदकगुणानां शाब्दबोधे भानमुपपद्यते। अतः गौणी न वृत्तिद्वयात्मिका अतिरिक्ता।

लक्षणा अनादितात्पर्यविषयीभूतार्थनिष्ठा निरूढलक्षणा। तात्पर्ये अनादित्वं च स्वप्रयोज्यशाब्दबोधध्वंसकालीनस्वप्रयोज्यशाब्दबोधसामान्यकत्वम्।

सादितात्पर्यवती लक्षणा आधुनिकलक्षणा। सा आधुनिकलक्षणा, सांप्रतिकलक्षणा, स्वारसिकलक्षणा इत्येवं व्यवह्रियते। पराक्रान्तं च लक्षणाविभागे सूरिभिः, विशिष्याऽऽलंकारिकैः।

सर्वथा मुख्येव जघन्या वृत्तिरपि पदमात्रवृत्तिः इति प्रतिपादयन्ति ॥[1]

इति पण्डितराजेन सुब्रह्मण्यशास्त्रिणा विरचितायां

शाब्दतरङ्गिण्यां चतुर्थस्तरङ्गः।

---

टिप्पणी—

पदमात्रवृत्तिरिति। मात्रपदेन पदसमुदायस्य पदार्थस्य च व्यवच्छेदः॥

## अथ पञ्चमस्तरङ्गः ।

अथ, मुख्यजघन्याभ्यां व्यतिरिक्ता व्यञ्जनापि वृत्तिः स्वीकरणीया। कथमन्यथा, 'वयस्था नागरासङ्गादङ्गानां हन्ति वेदनाम्', 'अयं गौरवितो महान्', 'सुरभि मांसं भक्षयति' इत्यादौ नानार्थस्थले शक्त्या प्रकृतार्थान्वयबोधानन्तरं अप्रकृतार्थान्वयबोधो घटते। नानार्थशब्दात् यावत्सु अर्थेषु शक्तिर्गृहीता तावतां सर्वेषामुपस्थितिर्जायते। ततः प्रकरणादिभिः अर्थविशेषतात्पर्यनिर्णये, तात्पर्यविषयार्थस्य अन्वयबोधः जायते, नान्यस्यार्थस्य। शक्तिप्रयोज्यशाब्दबुद्धौ तात्पर्यज्ञानस्य हेतुत्वात्। अतः प्राकरणिकार्थबोधानन्तरं तस्मादेव शब्दात् जायमानः अप्राकरणिकार्थविषयकः शाब्दबोधः न शक्तिसाध्यः इति व्यञ्जनयैव निर्वाह्यः।

तदुक्तम्—

अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।
संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम्॥ इति।

अत्र वाचकताया नियन्त्रणं एकार्थमात्रविषयकतात्पर्यनिर्णयजननद्वारा शाब्दबोधानुकूलत्वम्। अवाच्यार्थः—अतात्पर्यार्थः। तात्पर्यविषयातिरिक्तार्थबोधानुकूलः व्यापारः व्यञ्जनमिति तदर्थः।

न च प्रकृतार्थान्वयबोधानन्तरं पदज्ञानस्य नाशात् कथं तेनैव अप्रकृतार्थान्वयबोधः इति शङ्कनीयम्। प्रकृतार्थबोधरूपव्यापारद्वारा पदज्ञानस्य अप्रकृतार्थान्वयबोधकारणताया दोषाभावात्।

---

टिप्पणी—

(1) वयस्था-युवतिः नागरपुरुषसंगमात् अङ्गाना वेदनां हन्ति इत्येकोऽर्थः। वयस्था-हरीतकी नागरेण-शुण्ठ्या सह योगात् (भक्षिता सती) अङ्गानां वेदना हन्ति इत्यपरोऽर्थः। (2) अयं गौरवितः-पूजितः महान् इत्येकोऽर्थः। अयं गौः अवितः-मेषात् महान्-महत्परिमाणः इत्यपरोऽर्थः। (3) सौरभविशिष्टं मांसमित्येकोऽर्थः। सुरभेः-धेनोः मांसमित्यपरोऽर्थः बोध्यः॥

एवं,

मुखं विकसितस्मितं वशितवक्रिम प्रेक्षितम्
समुच्चलितविभ्रमा गतिरपास्तसंस्था मतिः ।
उरो मुकुलितस्तनं जघनसंसबन्धोद्धुरम्
बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥

इत्यत्र विकसितपदेन जायमानः कुसुमतुल्यसौरभवत्त्वबोधः अनुभवसिद्धः व्यञ्जनां विना न निर्वहति । विकसितपदस्य प्रफुल्लः वाच्यार्थः । तस्य स्मितेनान्वयानुपपत्त्या लक्षणया विस्तृतरूपार्थस्य बोधः । प्रकटितस्मितवत् मुखमिति बोधानन्तरं कुसुमतुल्यसौरभवत्त्वबोधो जायते। लक्षणाबीजान्वयानुपपत्तेरभावात् कुसुमतुल्यसौरभवत्त्वे लक्षणा नेति, व्यञ्जनव्यापारेणैव स बोधो निर्वहणीयः ।

एवं, 'जगन्नाथस्यायं सुरधुनि समुद्धारसमयः' इत्यत्र' जगन्नाथशब्देन अनेकपापविशिष्टवत्त्वेन लक्षणया तस्यैव बोधानन्तरं पापानां पदान्तरेणानिर्वचनीयत्वस्य बोधः व्यञ्जनयैव भवति ।

अपि च,

गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान् ॥

इत्यत्र वाक्यार्थबोधानन्तरं जायमानः, तव गमने मम मरणं भविष्यति इति बोधोऽनुभवसिद्धः व्यञ्जनयैव निर्वाह्यः ।

एवं, 'गतोऽस्तमर्कः' इति वाक्यप्रयोगे, मानिनीं प्रति हठं मा गाः इति, ब्राह्मणान् प्रति सन्ध्योपास्यतामिति, वणिजः प्रति पण्यान्यपसार्यन्तामिति च बहूनां बहुविधार्थप्रत्ययो भवति । स च शक्त्या लक्षणया वा न घटते इति व्यञ्जनावृत्तिः स्वीकरणीयेति चेत् ।

अत्राहुः—

शाब्दबोधजनकपदार्थोपस्थितिजनकज्ञानविषयः पदतदर्थसंबन्धो हि वृत्तिः । शाब्दविषयस्य पदार्थस्य पदात् शक्तिरूपसंबन्धज्ञानेन यथोपस्थितिः, न

तथा व्यञ्जनारूपपदतदर्थसम्बन्धज्ञानेन शाब्दविषयतादृशपदार्थोपस्थितिर्भवति। अत वृत्तिलक्षणमेव न व्याप्नोति व्यञ्जनाम्।

'सोऽव्यादिष्टभुजङ्गहारवलयस्त्वां सर्वदो माधव !' इत्यादाविव नानार्थस्थलेऽपि प्रकृताप्रकृतयोरर्थयो शक्त्यैव बोधे बाधकाभावात्, न प्राकरणिकार्थबोधानन्तर अप्राकरणिकार्थबोधानुरोधेन व्यञ्जनावृत्ति स्वीकार्या।

अपि च, तत्तदर्थकशाब्दसामान्य प्रति तत्तदर्थनिस्तात्पर्यत्वधिय प्रतिबन्धकत्वात्, शक्त्युपस्थितैकविधार्थान्वयबोधानन्तर अन्यविधार्थान्वयबोधस्यासम्भवात् न तदनुरोधेन व्यञ्जनावश्यकता।

प्रकृतार्थान्वयमतेरनन्तर जायमान एव प्रत्यय चमत्कारजनक इत्यनुभवोऽपि उपनयवशेन जायमानमानसविशिष्टप्रत्ययेनोपपद्यते। चमत्कारजनकबोधेन शाब्देनैव भवितव्यमिति नियमविरहात्।

'मुख विकसितस्मितम्', 'जगन्नाथस्याय सुरधुनि समुद्धारसमय' इत्यादौ न लक्षणामूलव्यञ्जनया, विकसितपदेन कुसुमतुल्यसौरभरत्वस्य, जगन्नाथपदेन पापाना पदान्तरेणावाच्यत्वस्य च बोध। किन्तु लक्षणयैव। न चान्वयानुपपत्तिरूपस्य लक्षणाबीजस्याभावात् नात्र लक्षणेति वाच्यम्। लक्षणाजन्यान्वयानुभव सामान्य प्रति अन्वयानुपपत्तिज्ञानस्य हेतुताया मानाभावात्। यष्टी प्रवेशय, काकेभ्यो दधि रक्ष्यतामित्यादौ लाक्षणिकबोधात् पूर्वं अन्वयानुपपत्तिज्ञानविरहेण व्यभिचाराच्च।

'गच्छ गच्छसि चेत् कान्त' इत्यादावपि अनुमानेनैव, तव गमने मम मरण भविष्यति इति प्रत्यय, मरण विना पुनर्जन्मासम्भवात्। नियत सम्बन्धमवलम्ब्यैव शब्द अर्थविशेषव्यञ्जक इति व्यक्तिवादिनापि वक्तव्यम्। स एव नियत सम्बन्ध अनुमानसञ्ज्ञभूता व्याप्तिरिति न व्यञ्जना कल्पनीया। अवश्याश्रयणीयसम्बन्धनिरोधमूलकेनानुमानेनैव विवक्षितप्रतीतिनिर्वाहात्।

टिप्पणी—

तत्तदर्थकशाब्दसामान्य प्रति तत्तदर्थनिस्तात्पर्यकत्वधिय प्रतिबन्धकत्व जगदीशभट्टाचार्यै सिद्धान्तितम्। नैतेषा मते तात्पर्यज्ञानस्य शाब्दबोधहेतुत्वमिति बोध्यम्॥

एवं व्यञ्जनास्थले सर्वत्र मानसबोधेनैव चमत्कारनिर्वाहात् न व्यञ्जना स्वीकरणीया। न च मानसस्य चमत्कारजनकत्वकल्पनायां गौरवमिति वाच्यम्।

व्यक्तिवादिना, व्यञ्जनाख्या अतिरिक्ता वृत्तिः, अज्ञाताया एव तस्याः शाब्दबोधकारणता च कल्पनीया। एवं तत्तत्पदार्थविषयकशाब्दबुद्धिं प्रति पदवृत्तिज्ञानजन्यपदार्थोपस्थितेः कारणतायां, व्यङ्ग्यार्थस्य पदवृत्तिज्ञानजन्योपस्थितिविरहेण व्यभिचारवारणाय, कार्यतावच्छेदककोटौ व्यञ्जनावृत्त्यजन्यत्वं निवेशनीयम्। एवं व्यङ्ग्यार्थबोधे व्यभिचारेण तात्पर्यज्ञानस्याकारणत्वात् तात्पर्यज्ञानकार्यतावच्छेदककोटावपि व्यञ्जनावृत्त्यजन्यत्वं निवेशनीयमिति च गौरवम्। ईदृग्गौरवापेक्षया मानसज्ञानस्य चमत्कारजनकत्वकल्पनायां गौरवविरहात्॥

तस्मात् शाब्दहेतुपदार्थोपस्थापकपदतदर्थसंबन्धरूपा वृत्तिः मुख्यजघन्यभेदेन द्विविधैवेति॥

रसिकास्तु—

अर्थप्रतीतिक्रियायाः कारकः शब्दः। कारकेण क्रियानुकूलव्यापारवता भवितव्यम्। शब्दे अर्थप्रतिपादनानुकूलव्यापार एव वृत्तिः इत्यभिधीयते। सा च त्रिविधा अभिधा लक्षणा व्यञ्जना चेति। यथा वह्निनिष्ठायाः दाहजननसामर्थ्यात्मकशक्तेः दाहजनने स्वरूपत उपयोगेऽपि पदगता बोधजननसामर्थ्यात्मिका शक्तिः ज्ञातैवोपयुज्यते, तथा पदवृत्तिषु अभिधाया लक्षणायाश्च ज्ञाताया एवोपयोगेऽपि व्यञ्जना स्वरूपसती अर्थप्रतीतावुपयुज्यते।

आवश्यकी च व्यञ्जनावृत्तिः। तथाहि—स्वाधीनेऽपि वाचकशब्दप्रयोगे लाक्षणिकान् शब्दान् प्रयुञ्जते व्युत्पन्नाः। अतः गङ्गातटे घोषः इत्यनुक्त्वा गङ्गायां घोषः इत्यभिधानं किमपि प्रयोजनं प्रतिपादयितुमेवेति निश्चीयते। तच्च प्रयोजनं शैत्यपावनत्वादिकम्। तत्प्रतीतिश्च व्यञ्जनाव्यापारादृते न संभवति।

गङ्गापदस्य हि न शैत्यादौ अभिधा व्यापारः, संकेतग्रहसापेक्षाया एव तस्या उपयोगात्, संकेतस्य च तत्र विरहात्। नापि लक्षणा। गङ्गाशब्देन तटलक्षणायां, मुख्यार्थप्रवाहस्य घोषान्वयबाधः, तटस्य मुख्यार्थप्रवाहसंबन्धः, गङ्गागतशैत्यपावनत्वादिविशेषप्रतिपादनं प्रयोजनं चेति त्रितयं हेतुः। न च

शैत्यपावनत्वादौ लक्षणाया तन्निमित्तमस्ति। यदि तटं मुख्यं स्यात्, तदा तस्य बाधो भवेत्। तटस्य मुख्यत्वमेव न। तटेन संबन्धोऽपि गङ्गागतशैत्यपावनत्वादि-विशेषस्य नास्ति। लक्षणया शैत्यपावनत्वादिप्रतिपादनस्य प्रयोजनान्तरं च नास्ति। अतः लक्षणाहेतुविरहात् न प्रयोजन लक्षणया बोधयितु शक्यते। यदि [illegible] वैयात्यात् शैत्यपावनत्वादिप्रतिपादनस्यापि प्रयोजनान्तरमुच्यते। तदा तस्य प्रयोजनस्य प्रतिपत्तिः लक्षणया। तथा प्रतिपादनस्य च प्रयोजनान्तरं वक्तव्यम्। एव तस्य तस्यापीति मूलक्षयकारिणी अनवस्था स्यात्।

ननु शैत्यपावनत्वादिविशिष्टतटमेव गङ्गापदेन लक्ष्यते। न च प्रयो-जनस्यापि लक्ष्यकोटौ प्रवेशात् न लक्षणाप्रयोजनमस्तीति शङ्कनीयम्। गङ्गातटे घोषः इत्यतोऽधिकस्यार्थस्य प्रतीतेरेव प्रयोजनत्वादिति चेत्।

न, गङ्गागतशैत्यपावनत्वादिविशिष्ट तटं यदि लक्ष्यं भवेत्, तदा तद्विशिष्टत्वं लक्ष्यतावच्छेदकं भवेत्। न चैवं संभवति। गङ्गागतशैत्यपावन-त्वादिवैशिष्ट्यस्य तटे प्रमाणान्तरागोचरत्वात्। पावनत्वादिसामान्यविशिष्टस्य लक्ष्यतायां, पावनत्वादिविशेषस्य प्रतीतिर्न स्यात्।

तस्मात् यादृशप्रयोजनप्रतिपादनाय लक्षणा आश्रीयते, तादृशप्रयोजनस्य प्रतीतिः व्यञ्जनाव्यापार विना न संभवतीति व्यञ्जनावृत्तिरावश्यकी॥

नानार्थादिस्थले प्रकृतार्थबोधानन्तरमप्रकृतार्थस्य शक्त्यैव बोधोदगमेऽपि प्रकृताप्रकृतयोरुपमा व्यञ्जनयैव प्रतीयते॥

काव्यस्य हि जीवितं रसः। तत्प्रतीतिश्च चमत्कारकारिणी। रसप्रतीतिश्च व्यञ्जनयैव नाभिधया। रसः इति, शृङ्गार इति वा पदेनाभिधानेऽपि विभावानु-भावादीनामप्रतीतौ चमत्कारो नोदेति। विभावादीना प्रतीतौ तु शब्देनानभि-धानेऽपि उदेति चमत्कारः। एवमन्वयव्यतिरेकाभ्या विभावादिमुखेन रसप्रतीति-रेव चमत्कारकारिणीति निश्चिनुमः। तदुक्तम्—'रसः स्वप्नेऽपि न वाच्यः।' इति। न च विभावादिवाचकपदं विना तदप्रतीते. तत्पदेन रसो लक्ष्यतां, किं व्यञ्जनयेति वाच्यम्। मुख्यार्थबाधादीना लक्षणानिमित्तानामसभवात्। रसादीना-

मानन्दमयसंविद्विश्रान्तिरूपतया प्रयोजनान्तरस्य सुतरामसंभवेन लक्षणाया दुर्वचत्वात्। अतो व्यञ्जनावृत्तिरावश्यकी ॥

यत्तु, शब्दश्रवणानन्तरं यावानर्थः प्रतीयते, तत्र सर्वत्रापि शब्द एव निमित्तम्। शब्दस्य च व्यापारः अभिधा। सा दीर्घदीर्घतरा। यथा बलवता प्रेरितः इषुः एकेनैव वेगाख्येन व्यापारेण वर्मच्छेदं, उरोभेदं, प्राणहरणं च रिपोः विधत्ते। तथा शब्दः एकेनैव अभिधाव्यापारेण पदार्थस्मरणं, वाक्यार्थानुभवं, व्यङ्ग्यत्वाभिमतार्थप्रतीतिं च विधत्ते। अतः व्यङ्ग्यत्वाभिमतोऽप्यर्थः वाच्य एव। तात्पर्यविषयस्यैव शब्दार्थत्वात्। अतो व्यञ्जनावृत्तिर्नास्तीति।

तन्न। वाक्यार्थानुभवस्यैव अभिधासाध्यत्वविरहेण तदनन्तरभाविव्यङ्ग्यार्थप्रतीतेः सुतरां तदसाध्यत्वात्। वेगव्यापारस्य स्वरूपत एव जनकतया दीर्घदीर्घतरत्वसंभवेऽपि, अभिधाया ज्ञाताया एवार्थप्रतिपत्त्यनुकूलत्वात् व्यङ्ग्यत्वाभिमतनिष्ठत्वेन पूर्वं तज्ज्ञानाभावेन तया तथा बोधासंभवात्, संकेतग्रहसापेक्षाया एवाभिधायाः उपयोगात् व्यङ्ग्ये संकेतग्रहाभावेन सुतरां अभिधया निर्वाहासंभवात् ॥

अपि च काव्यज्ञदृष्ट्या व्यञ्जनावृत्तिरवश्यं स्वीकरणीया। अन्यथा कष्टत्वादयः अनित्यदोषाः, असाधुत्वादयः नित्यदोषाः इति विभागो न स्यात्। वाच्यार्थस्याविशेषेण कष्टत्वादीनां सर्वत्र दुष्टत्वस्य अदुष्टत्वस्य वा प्रसङ्गात्। व्यञ्जनाभ्युपगमे तु व्यञ्जनीयस्य बहुविधत्वेन रौद्रादौ व्यञ्जनीये कष्टत्वस्यानुकूलता, शृङ्गारादौ व्यञ्जनीये प्रतिकूलता इति विभागव्यवस्था युज्यते। एवं पर्यायेषु मध्ये कस्यचिदेव कुत्रचिदेव काव्यानुगुणत्वम्। यथा, 'द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः।' इत्यत्र कपालिपदस्यैव व्यञ्जनीयजुगुप्सानुकूलत्वं, न पिनाकिपदस्य, इति व्यवस्थानिर्वाहायापि व्यञ्जनावृत्तिः स्वीकरणीया।

गतोऽस्तमर्कः इत्यत्र वाच्यार्थः सर्वान् प्रत्यविशिष्ट एक एव। व्यङ्ग्यार्थस्तु तत्तत्पुरुषभेदेन अनेकः इति संख्याभेदेन, वाच्यार्थस्य व्याकरणकोशादिमात्रेणावगमः, व्यङ्ग्यस्य तु प्रतिभानैर्मल्येनाप्यधिकेनेति ज्ञापकभेदेन, वाच्येन व्युत्पन्नसामान्यस्य प्रतीतिमात्रं जायते, व्यङ्ग्येन तु विदग्धपदवाच्यस्य सहृदयस्य चमत्कृतिः इति कार्यभेदेन च वाच्यव्यङ्ग्ययोरर्थयोः भेदोऽवसेयः ॥

ननु शब्दव्यापारजन्यशाब्दबोधानन्तरं व्यङ्ग्यत्वाभिमततत्तदर्थविषयक-मानसप्रत्ययो जायते। स एव चमत्कारकारणम्। तथा च चमत्कारजनकप्रतीतिविषयस्य न शब्दव्यापारबोध्यतेति, न तद्बोधनाय व्यञ्जनावृत्तिरपेक्षणीयेति चेत्।

न। व्यङ्ग्यत्वाभिमतार्थविषयकस्य अनेन वाक्येनेममर्थं अवगच्छामीति अबाधितानुभवस्य सर्वसिद्धत्वेनापलपितुमशक्यत्वात्, तदर्थस्य शब्दव्यापारगम्यत्व-ध्रौव्यात् व्यञ्जनाव्यापारस्यावश्याभ्युपेयत्वात्।

अन्यथा गौरस्ति इत्यादावपि गवि अस्तित्वान्वयबोधस्य मानसत्वमेव, न शाब्दत्वम्। शाब्दबोधाख्यविलक्षणप्रमाङ्गीकारे गौरवात्। गवादिपदाच्च गवादि-पदार्थस्मृतिमात्रमेव इति स्वीकर्तुमुचितत्वात्, शाब्दानुभवलक्षणविलक्षणप्रमित्य-सिद्ध्या शब्दप्रामाण्यस्यैव विलोपापत्तिः।

न च शाब्दबोधाख्यविलक्षणप्रमानङ्गीकारे, पदस्मृतानामर्थानां मानसान्वय-धीकाले अपदार्थानामपि स्वसामग्रीबलेन प्रत्यक्षस्यापत्तिः। प्रत्यक्षसामान्ये शाब्द-सामग्र्याः प्रतिबन्धकत्वकल्पनया तद्वारणं च अन्वयबोधस्य मानसप्रत्यक्षत्ववादिना न वक्तुं शक्यते। शाब्दस्यापि प्रत्यक्षत्वेन तत्र सामग्र्याः प्रतिबन्धकत्वायोगात्। अतः विलक्षणः शाब्दानुभवः स्वीकार्य इति वाच्यम्। शाब्दान्यप्रत्यक्षत्वावच्छिन्नं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वकल्पनेन मानसान्वयधीकाले अपदार्थप्रत्यक्ष-वारणसंभवात्। शाब्दबोधाख्यविलक्षणप्रमितीनां शब्दप्रामाण्यस्य च कल्पना-पेक्षया निरुक्तशाब्दसामग्रीप्रतिबध्यतावच्छेदककोटौ शाब्दान्यत्वनिवेशे गौरव-विरहात्।

यदि च गौरस्तीति शब्दात् गौरस्तितां शृणोमि, शाब्दयामि इत्य-बाधितानुव्यवसायबलात् अन्वयानुभव, विलक्षण एव शाब्दबोधात्मकः। शब्द-जन्यपदार्थस्मरणजन्यत्वेन मानसमेवान्वयज्ञानं शाब्दतया तत्र भासते इत्युक्तेः स्वारसिकत्वाभावात्, अनुभवस्य व्याख्यानानपेक्षत्वाच्च इत्युच्यते। तदा चमत्कारकारणीभूतस्य व्यङ्ग्यत्वाभिमतार्थज्ञानस्यापि शाब्दत्वेन अबाधितसकलानु-भवसिद्धस्य शाब्दत्वमेवेति तदर्थप्रतिपत्तये व्यञ्जनावृत्तिः स्वीकरणीयैव॥

ननु व्यङ्ग्यव्यञ्जकभावः अनुमेयानुमापकभाव एव पर्यवस्यति । वाक्यात् असंबद्धो न प्रतीयते । सर्वस्मात् सर्वोपलब्धिप्रसङ्गात् । संबन्धेन च नियतेन भाव्यम् । नियतसंबद्धमपि स्वाधिकरणत्वेनाज्ञाते न व्यङ्ग्यं प्रतिपादयति । सर्वत्र तत्प्रतीतिप्रसङ्गात् । इत्थञ्च व्यञ्जकस्य व्यङ्ग्येन व्याप्तत्वं, पक्षधर्मत्वं चावश्यकमिति, अनुमानेनैव व्यङ्ग्यत्वाभिमतार्थस्य प्रतीतिः ।

तथाहि—

भम धम्मिअ वीसद्धो सो सुणओ अज्ज मारिओ तेण ।
गोलाणईकच्छकुडङ्गवासिणा दरिअसीहेण ॥

भ्रम धार्मिक विस्रब्धः स शुनकोऽद्य मारितस्तेन ।
गोदानदीकच्छनिकुञ्जवासिना दृप्तसिंहेन ॥ (छाया)

संकेतनिकेतनीभूतं गोदावरीतीरनिकुञ्जं पुष्पापचयहेतोः कदाचित् संचरतः धार्मिकस्य तत्र संचरणनिवारणाय अविनयवत्याः कस्याश्चिदियमुक्तिः । निकुञ्जवासिसिंहकृतया श्वनिवृत्त्या गृहे भ्रमणविधिर्वाच्यः । तेन निकुञ्जे भ्रमणायोग्यत्वमनुमीयते । भीरुभ्रमणस्य भयकारणभावपूर्वकत्वात् निकुञ्जे भयकारणसिंहस्य सत्त्वात् तस्य भीरुभ्रमणायोग्यता सिद्ध्यति । इदं गोदावरीनिकुञ्जं भीरुभ्रमणायोग्यं सिंहवत्त्वात् इत्यनुमानम् ।

एवमेव,

निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरः
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥

इत्यत्र नायकसमीपं प्रेषितां प्रातः नायकसकाशादागच्छन्तीं दूतीं प्रति विदग्धाया नायिकाया वचनेऽपि, संभोगचिह्नेन स्तनतटे चन्दनच्यवनादिना रन्तुमेव नायकसमीपं गतासीति अनुमितिर्जायते । तथा च व्यङ्ग्यत्वाभिमतस्यार्थस्य अनुमानेन प्रतीतेः न व्यञ्जनावृत्तिः स्वीकरणीयेति चेत् ।

न, इदं गोदावरीनिकुञ्ज भीरुभ्रमणायोग्यं सिंहवत्त्वादित्यत्र यदि श्वभीरोः अवीरस्य भ्रमणायोग्यत्व साध्यते, तदा व्यभिचारः। तादृशस्यापि पुंसः, प्रभुनिदेशेन, आचार्याज्ञया, प्रियायामनुरागेण, निधिलाभादिशङ्कया वा सिंहवत्यपि देशे भ्रमणदर्शनात्। वीरस्वभावस्य श्वभीरोः भ्रमणायोग्यत्वस्य साध्यतायां हेतोर्विरोधः। स्पर्शशङ्कया श्वतो बिभ्यतोऽपि वीरस्य मृगयाकुतूहलिनः सिंहवति देशे भ्रमणदर्शनेन हेतोः साध्यसामानाधिकरण्यविरहात्। एव पक्षे निकुञ्जे सिंहवत्त्वहेतो, न निश्चयः इत्यसिद्धिश्च। न च अविनयवत्या वाक्यादेव सिंहवत्त्वस्य हेतोर्निश्चयः इति वाच्यम्। तदीयवाक्यस्यानिश्चायकत्वात् अर्थेन समं संबन्धानियमात्।

एवं स्तनतटे चन्दनच्यवनादीनि न संभोगानुमापकानि। तेषां स्नानसाधारण्येन संभोगप्रतिबद्धत्वाभावेनानैकान्तिकत्वात्। तस्मात् तत्तदर्थबोधाय व्यञ्जनावृत्तिः स्वीकरणीया।

न चानैकान्तिकानां चन्दनच्यवनादीनां कथं व्यञ्जकत्वमिति वाच्यम्। तस्याधमस्यान्तिकम् इत्यधमपदसाहित्यात् तथात्वसंभवात्। न चाधमपदार्थपर्यालोचनया अनुमापकत्वमपि संभवतीति वाच्यम्। निर्धारितस्यैवाधमत्वस्यानुमितावुपयोगात्, नायके अधमत्वस्य प्रमाणान्तरेणानवधृतत्वात् अनुमानासंभवात्। व्यञ्जनायां व्याप्तेः पक्षधर्मतायाश्च निर्धारण नाङ्गम्। परंतु संभावितादपि व्यङ्ग्यं प्रतीयते। तस्मात् नानुमानेन व्यङ्ग्यत्वाभिमतार्थस्य प्रतीतिरिति व्यञ्जनावृत्तिः स्वीकरणीयैव॥

व्यञ्जनया प्रतीयमानः व्यङ्ग्य इत्युच्यते। स च वक्तृप्रकरणादिवशादनियतः। तथाहि—गतोऽस्तमर्कः इति वाक्ये, राज्ञः सेनापतीन् प्रति शत्रूणां हठेनामर्दनावसर इति, दूतीनां अभिसारिकाः प्रति अभिसरणमुपक्रम्यतामिति, सख्याः वासकसज्जिकां प्रति प्राप्तप्रायस्ते प्रेयानिति, कर्मकरस्य सह कर्म कुर्वतः प्रति कर्मकरणात् निवर्तामहे इति, भृत्यस्य धार्मिकं प्रति सान्ध्यो विधिरुपक्रम्यतामिति, आप्तस्य कार्यवशेन बहिः गच्छन्तं प्रति दूरं मागा इति, गृहिणः गोपालकं प्रति सुरभयः गृहं प्रवेश्यन्तामिति, दिवसे अतिसंतप्तस्य बन्धून् प्रति संतापोऽधुना

च नार्थापत्तावन्तर्भवति, तर्हि अस्तु सापि शब्दवृत्तिरिति न काप्यस्माकं क्षतिः।' इत्युपसंहरन्ति।

नैयायिकैः व्यञ्जना निरस्ता। तथापि **शक्तिवादमाधवीयविवृतिः** व्यञ्जनाप्रस्तावे, पक्षद्वयं निरूप्य, पक्षयोरनयोर्युक्तता सुधीभिर्विवेचनीया इति ब्रूते।

अनेन व्यञ्जनानिराकरणे निर्भराभावो गम्यते।

एवं व्यञ्जनाविचारावसाने, "यदि पुनरानुभाविको लोकाना स्वरसवाही शब्दादमुमर्थं प्रत्येमीत्यनुभवः, तदा वैयञ्जनिकी वृत्तिः गीर्वाणगुरूणामप्यशक्य-वारणेति व्यञ्जनावृत्तिसिद्धिः निष्प्रत्यूहैवेति मन्तव्यम्।" इति **नीलकण्ठीय-**ग्रन्थः स्पष्टमेव व्यञ्जनानिराकरणे निर्भरविरहं प्रतिपादयति। अतः प्रायः सर्व-दार्शनिकसमता अनुभवारूढा व्यञ्जनावृत्तिः सर्वथा स्वीकरणीयेति॥

इति पण्डितराजेन सुब्रह्मण्यशास्त्रिणा विरचितायां

शाब्दतरङ्गिण्यां पञ्चमस्तरङ्गः।

---

# अथ षष्ठस्तरङ्गः ।

अथवाक्यार्थबोधः चिन्त्यते ।

पदैः वृत्त्या स्मृतानां पदार्थानां संसर्गं वाक्यार्थाभिधमवगाह्य जायमानः विशेषणविशेष्यभावापन्ननानापदार्थविषयकः शाब्दबोधः वाक्यार्थबोधः इत्यभिधीयते । तत्र मुख्यविशेष्यतया को भासते इत्यत्र विप्रतिपद्यन्ते तीर्थकराः ॥

तत्र प्राथमिकशाब्दबोधकारणतालाघवं मूलयुक्तिमवलम्बमानाः केचन दार्शनिकाः, आख्यातार्थमुख्यविशेष्यकमेव सर्वत्र शाब्दबोधं मन्यन्ते । अन्ये तु, **निरुक्तमहाभाष्यादि**वचनं प्रमाणीकुर्वन्तः, तदुपोद्बलकयुक्तिजातं च निरूपयन्तः, धात्वर्थमुख्यविशेष्यकं बोधं प्रतिपन्नाः । परे तु, व्यवहारातिप्रसङ्गाप्रसङ्गवारणे बद्धदृष्टयः, पदोपस्थापितानां अनेकधा एकशाब्दबोधीयसांसर्गिकविषयतायां विद्वेषिणः, योग्येन साक्षात् संबन्धेन तत्तत्पदार्थस्य तत्र तत्रान्वयं स्वीकुर्वन्तः, अनुभवं च प्रमाणीकुर्वन्तः, प्रथमान्तपदसमभिव्याहारे प्रायः प्रथमान्तार्थमुख्यविशेष्यकं, क्वचित् निपातार्थमुख्यविशेष्यकं, अन्यत्र धात्वर्थमुख्यविशेष्यकं, अपरत्र आख्यातार्थमुख्यविशेष्यकं च बोधमुपपादयन्ति । वर्णयन्ति च तात्पर्यं तदनुसारेणानुशासनानाम् ।

तदेतत् पक्षत्रयमपि विविच्य प्रदर्श्यते ॥

**अत्र मीमांसकाः—**

तण्डुलमित्यादीनि द्वितीयाद्यन्तपदानि विना क्रियापदं निराकांक्षं बोधं न जनयन्तीत्यविवादम् ।

अतो ज्ञायते क्रियापदं द्वितीयान्तादिपदार्थस्य विशेष्यसमर्पकमिति । द्वितीयाद्यर्थश्च प्रातिपदिकार्थस्य विशेष्यः, प्रकृतिप्रत्ययौ सहार्थं ब्रूतः, तयोस्तु प्रत्ययः प्राधान्येन इति व्युत्पत्तेः । तिङन्तघटकधातोरर्थस्य आख्यातार्थ एव

---

**टिप्पणी—**

वाक्यार्थमेव, पदार्थानामन्वितावस्थेति, अन्विताः पदार्थाः इति च तत्र तत्र व्यवहरन्ति दार्शनिकाः ॥

विशेष्य:, निरुक्तस्मृतेः। आख्यातस्य च कालः संख्या कृत्यपरपर्यायभावना कर्तृत्वं (अखण्ड) इति सन्ति बहवोऽर्थाः। तेष्वपि भावनैव विशेष्यः। तत्रैव आख्यातार्थकालसंख्यादिकं विशेषणतया भासते। 'भावप्रधानमाख्यातम्' इति निरुक्तस्मृतेः।

इयं च न प्रत्ययार्थभावनायाः भावशब्दितधात्वर्थनिरूपितविशेष्यत्वं बोधयितुं प्रवृत्ता। 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोस्तु प्रत्ययः प्राधान्येन' इत्यनेनैव सिद्धत्वात्। नापि 'धात्वर्थः केवलः शुद्धः भाव इत्यभिधीयते' इत्युक्तभावपदार्थस्य धात्वर्थस्य तिङर्थापेक्षया प्राधान्यं बोधयितुं प्रवृत्ता। तयोस्तु प्रत्ययः प्राधान्येन इत्येतद्विरुद्धार्थकल्पनाया अयुक्तत्वात्।

भावपदं च वैयाकरणैरेव धात्वर्थे परिभाषितम्। सापि परिभाषा व्याकरणशास्त्रे एव 'भावे (घञ्)' (पा. 3-3-18) इत्यत्र प्रवर्तते, न तु 'तस्य भावस्त्वतलौ' (पा. सू. 5-1-119) इत्यत्र। निरुक्तस्मृतिगतं च भावपदं धात्वर्थपरमित्यत्र नास्ति प्रमाणम्। तस्मात् णिजन्तभूधातोरच्प्रत्ययान्तस्य व्युत्पत्त्या भवनानुकूलव्यापाररूपा भावनैव भावपदेनोच्यते। आख्यातार्थेषु भावनाकालसंख्यादिषु कस्य प्राधान्यं, कस्य गुणत्वमिति विचिकित्सायां, 'भावप्रधानम्' इति निरुक्तस्मृतिः भावनातिरिक्ताख्यातार्थं प्रति आख्यातार्थभावनाया एव प्राधान्यं ब्रूते। एवञ्च धात्वर्थादीनां विशेष्यभूता भावनैव वाक्यजन्यबोधे मुख्यविशेष्यतया भासते॥

ननु द्वितीयाद्यन्तपदस्य क्रियापदसाकाङ्क्षत्वेऽपि प्रथमान्तपदस्य तदाकाङ्क्षायां प्रमाणाभावेन प्रथमान्तार्थस्य क्रियाविशेषणत्वं नास्तीति चेत्, न।

चैत्रः इत्येतावन्मात्रोक्तौ न निराकाङ्क्षशाब्दबोधो जायते। किं करोति इत्याद्याकांक्षाया नियमेनोत्पादात्। न च चैत्रः इत्येतावन्मात्रस्य तादृशबोधाजनकत्वेऽपि चैत्रः पण्डितः इति वाक्यात् पण्डिताभिन्नः चैत्रः इति निराकाङ्क्षशाब्दबोधोदयात् प्रथमान्तार्थस्य क्रियासाकाङ्क्षत्वे प्रमाणाभावः इति वाच्यम्। 'अस्तिर्भवन्तीपरः प्रथमपुरुषः अप्रयुज्यमानोऽप्यस्ति' इति कात्यायनस्मरणस्यैव प्रथमान्तपदस्य क्रियापदसाकाङ्क्षत्वे प्रमाणत्वात्। न च तत्र तत्र योग्यतानुसारेण अस्तिव्यतिरिक्ततत्तत्क्रियापदाध्याहारस्यावश्यकत्वात् 'अस्तिर्भवन्तीपरः' इति

न्यर्थमिति वाच्यम्। वेदे अस्त्यध्याहारनियमार्थत्वात्। सर्वत्र वाक्ये क्रियापदमस्ति। प्रथमान्तपदमपि क्रियापदसाकांक्षमेव। अतो न प्रथमान्तार्थः वाक्यार्थबोधे विशेष्यः इति सूचनेन, प्रथमान्तार्थमुख्यविशेष्यकत्वभ्रमनिरासस्यैव तदनुशासनफलत्वाच्च।

न चोक्तानुशासनबलात् चैत्रः इत्यादिप्रथमान्तपदानामस्तिपदसाकांक्षत्वेऽपि 'अहं पण्डितः त्वं, पण्डितः' इत्यादौ प्रथमपुरुषभिन्नस्थले प्रथमान्तस्य क्रियापदसाकांक्षत्वे प्रमाणाभाव इति वाच्यम्। प्रातिपदिकार्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यतासंबन्धेन सुबूजन्योपस्थितिः कारणम्, लिङ्गसंख्याव्यतिरिक्तसुबर्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति क्रियापदजन्योपस्थितिः कारणमिति क्लृप्तकार्यकारणभावयोरेव तत्र क्रियापदसाकांक्षत्वे प्रमाणत्वात्।

प्रथमाप्रकृत्यर्थः प्रथमार्थे, प्रथमार्थश्च क्रियायां विशेषणतया भासते। न च प्रथमायाः संख्यातिरिक्तार्थवत्त्वाभावात्, संख्यायाश्च प्रकृत्यर्थविशेषणतयैवान्वयात्, प्रथमाप्रकृत्यर्थः कस्मिन् प्रथमार्थे विशेषणतयाऽन्वेतीति वाच्यम्। 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' (पा. सू. 2-3-46) इत्यनुशासनेन प्रथमायाः संख्यातिरिक्तार्थवत्त्वात्। संख्यावाचिका प्रथमा, प्रातिपदिकार्थे प्रातिपदिकेन विवक्षिते तदुत्तरं प्रथमा भवति इति चार्थवर्णने वैरूप्यापत्तेः। तस्मात् प्रातिपदिकार्थ एव प्रथमार्थः। न च तस्य प्रातिपदिकेनैव लाभात् प्रथमायाः तदर्थे साधुत्वार्थं तदर्थानुवादकतेति युक्तम्। चैत्रपदस्य स्वोत्तरप्रथमायाः चैत्ररूपार्थविशेषतात्पर्यग्राहकत्वात्। प्रकृतिप्रत्ययार्थयोश्च न भेदेनान्वयः, बाधितत्वात्। नाप्यभेदेन, तयोरभेदान्वयस्याव्युत्पन्नत्वात्, उद्देश्यतावच्छेदकविधेयतावच्छेदकयोर्भेदाभावेन तथा बोधासंभवाच्च। एवञ्च प्रथमार्थ एव चैत्रादिः आख्यातार्थभावनायां प्रकारतया भासते।

अपि च, प्रातिपदिकस्य व्यर्थत्वापरपर्यायतात्पर्यग्राहकत्वकल्पनममृष्यमाणो वार्तिककारः 'अभिहिते प्रथमा' इत्यनुशशास। अभिहितकारकवाचिनी प्रथमेति तदर्थः। एवञ्च, चैत्रः पचति इत्यादौ कर्तृत्वं प्रथमार्थः। आधेयतासंबन्धेन प्रकृत्यर्थचैत्रत्वावच्छिन्नान्वितं तत् आख्यातार्थभावनायामन्वेति। न च कर्तृत्वादे-

राख्यातामिहितस्य भावनायामन्वितत्वात् पुन प्रथमया कर्तृत्वबोधन व्यर्थमिति वाच्यम्। आख्यातेन चैत्रत्वावच्छिन्नवृत्तित्वेन कर्तृत्वस्याबोधनात् तथा कर्तृत्वबोधाय प्रथमया कर्तृत्वाभिधानस्यावश्यकत्वात्।

न च प्रथमान्तपदेन चैत्रत्वावच्छिन्नवृत्तित्वेन कर्तृत्वबोधनात् आख्यातेन सामान्यत कर्तृत्वबोधो विफल इति वाच्यम्। आख्यातेन कर्तृत्वाभिधाने एव चैत्रादिपदोत्तरप्रथमाया साधुत्वात्। 'यद्वृत्तिकारकत्व स्वान्वयिक्रियाप्रतिपादकेन पदेन वृत्त्या प्रतिपाद्यते तत्त्व प्रथमाप्रयोजकमभिहितत्वम्' इत्युक्त **भाट्टदीपिकायाम्**। अतश्च प्रथमाया साधुत्वाय आख्यातेन सामान्यत कर्तृत्वाभिधानमावश्यकम्।

कर्तृत्वञ्चाखण्डो धर्म, नानुकूलकृतिमत्त्वम्। तथा सति चैत्रेण पाक क्रियते इत्यत्र चैत्रेण पाक इत्येतावतैव पाके चैत्रकर्तृकत्वबोधसम्भवात् क्रियते इति पदप्रयोगोऽनर्थक स्यात्। अखण्डस्य कर्तृत्वस्य तृतीयाबोधकत्वे तु कृतिसाध्यत्वबोधनाय क्रियते इति प्रयोग सार्थक। कृत्यभिधानञ्च न प्रथमाप्रयोजक, चैत्रेण सुप्यते इत्यत्रापि चैत्रपदात् प्रथमापत्ते। चैत्रेण स्वाप क्रियते इति विवरणानुसारेण तत्राप्याख्यातस्य कृतिरूपभावनाबोधकत्वस्य आवश्यकत्वात्। अत अखण्डकर्तृत्वाद्यभिधानमेव प्रथमाप्रयोजकम्। आख्यातबोधित कर्तृत्व प्रथमार्थ। सुबर्थप्रकारकशाब्दबुद्धित्वावच्छिन्न प्रति क्रियापदजन्योपस्थिति विशेष्यतासम्बन्धेन कारणमिति कार्यकारणभावबलात् तदपि भावनायामेवेति।

एवञ्च सुबन्तपदानां स्वार्थविशेष्यसमर्पक क्रियापदम्। तत्रापि धात्वर्थस्य आख्यातार्थो विशेष्य, तयोस्तु प्रत्यय प्राधान्येनेति व्युत्पत्ते। आख्यातार्थेषु भावनैव विशेष्य, 'भावप्रधानमाख्यातम्' इति निरुक्तस्मृते। अत वाक्यजन्यशाब्दबोधे भावनैव मुख्यविशेष्यतया भासते॥

अपि च, ओदन पचति इत्यत्र प्रथमान्तपदाभावेन भावनाप्रकारकशाब्दबोधासम्भवेन सामग्रीवशात् भावनाविशेष्यकबोधे बाधकाभाव। एवञ्च भावनाया कुत्रचित् मुख्यविशेष्यतया भानस्य सिद्धत्वात् सर्वत्रैव बोधे तस्या एव मुख्यविशेष्यतया भान युक्तम्।

'तद्भूतानां क्रियार्थेन समाम्नायः' (पू. सू. 1-1-24) इति सूत्रयन् महर्षिः जैमिनिरपि क्रियापदबोध्यभावनामुख्यविशेष्यकं बोधं स्वानुभवसिद्धं ब्रूते ॥

ननु तिङुपात्तसंख्यायाः प्रथमान्तपदोपस्थाप्ये चैत्रादावन्वयात्, चैत्र इव मैत्रो गच्छति इत्यादौ इवशब्दार्थसादृश्यविशेषणीभूते चैत्रादौ अन्वयाभावाच्च, तिङुपात्तसंख्या अन्याविशेषणीभूतप्रथमान्तपदोपस्थाप्ये अन्वेतीति फलितम्। एवञ्च आख्यातार्थभावनाया अपि आश्रयतासंबन्धेन तत्रैवान्वयो युक्तः। कालादिव्यतिरिक्ताख्यातार्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति अन्याविशेषणीभूतप्रथमान्तपदजन्योपस्थितिः विशेष्यतासंबन्धेन कारणमिति कार्यकारणभावकल्पने लाघवात्। इत्थञ्च चैत्रः पचति इति वाक्यात् पाकानुकूलकृतिमानेकत्वविशिष्टः चैत्रः इति प्रथमान्तार्थमुख्यविशेष्यक एव बोधः स्वीकर्तुमुचितः। अपि च, पण्डितश्चैत्रः इत्यत्र पण्डिताभिन्नः चैत्रः इत्याकारकः प्रथमान्तार्थमुख्यविशेष्यको बोधः अकामेनापि स्वीकरणीयः। न ह्यत्राख्यातमस्ति, यस्यार्थो मुख्यविशेष्यतया भासेत। चैत्रादिपदोत्तरप्रथमा च न विशेष्यतया प्रातिपदिकार्थान्वययोग्यमर्थमभिधत्ते। एवञ्च प्रथमान्तार्थमुख्यविशेष्यकबोधस्य सिद्धत्वात् सर्वत्रैव तस्य मुख्यविशेष्यतया भानमुचितमिति चेत् , न।

आख्यातार्थकृतौ, आधेयतासंबन्धेन आख्यातार्थवर्तमानादिकालान्वयस्येव, प्रथमान्तार्थचैत्रादेरपि तेन संबन्धेनान्वयस्यापि वक्तुं शक्यतया, आख्यातार्थकृतेः प्रथमान्तार्थे विशेषणतयैव भाने नियामकाभावात् निरुक्तकार्यकारणभावो निष्प्रमाणकः। न चास्माकमनुभव एव नियामक इति वाच्यम्। जैमिन्यादिमहर्ष्यनुभवविरुद्धानुभवस्य शपथैकनिर्णेयत्वात्। न हि न्यायदर्शनकारो महर्षिः प्रथमान्तार्थमुख्यविशेष्यकबोधस्य स्वानुभवसिद्धतां सूचयत्यपि।

किञ्च, तिङुपात्तसंख्या प्रथमान्तार्थे अन्वेति इत्येवासंगतम्। चैत्रः इति सुबेकवचनात् एकत्वस्य शीघ्रमुपस्थितत्वात् तस्य चैत्रे अन्वयेनैव निराकांक्षत्वात्, तिङुपस्थितसंख्यान्वये आकांक्षाविरहात्। न च चैत्रो मैत्रश्च गच्छतः इत्यत्र सुपा

---

टिप्पणी—

अपि चेत्यादिकं नैयायिकमतेन। तेन पूर्वं सर्वत्र वाक्ये क्रियापदावश्यकत्वस्य, प्रथमायाः अभिहितकारकवाचित्वस्य चोक्तावपि न विरोधः ॥

द्वित्वस्यानुपस्थितेः आख्यातोपात्तद्वित्वस्य प्रथमान्तार्थे अन्वयः आवश्यक इति वाच्यम्। तत्र आख्यातेन द्वित्ववत् चैत्रपदोत्तरसुपा एकत्वमपि बोध्यते। एकत्वान्वयानुभवस्य द्वित्वान्वयानुभवस्य वा अशाब्दत्वं वक्तव्यम्। तत्र च सुबुपात्तैकत्वान्वयबोध एव शाब्दः, न पदान्तरोपस्थापितद्वित्वान्वयानुभवः इत्येव कल्पयितुमुचितम्।

वस्तुतः, आख्यातार्थसंख्यायाः निरूढलक्षणया आख्यातबोध्ये कर्तर्येवान्वयः, एकपदोपात्तत्वात् इति न कुत्रापि आख्यातार्थसंख्यायाः प्रथमान्तार्थेऽन्वयः इति बोध्यम्। अपि च आख्यातार्थसंख्याभावनोभयसाधारण्येन कालाद्यतिरिक्ताख्यातार्थनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन आख्यातपदजन्यशाब्दबुद्धित्वावच्छिन्नं प्रति प्रथमान्तनामपदजन्यान्याविशेषणीभूतार्थविशेष्यकोपस्थितिः विशेष्यतासंबन्धेन कारणमिति कार्यकारणभावो न संभवति। चैत्रो न पचतीत्यत्र भवद्भिः पाकानुकूलकृत्यभाववान् एकत्वविशिष्टश्चैत्रः इत्यकारकबोधस्य स्वीकारात्, तत्र च नञर्थाभावस्य भावनाविशेष्यत्वात् प्रथमान्तार्थस्य सख्याविशेष्यत्वाच्च। नच कालादिव्यतिरिक्तनिपातासमभिव्याहृताख्यातार्थनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबुद्धिं प्रति तादृशप्रथमान्तपदजन्योपस्थितिः कारणमिति स्वीकारात्, चैत्रो न पचति इत्यत्र प्रथमान्तार्थस्य भावनाविशेष्यत्वविरहेऽपि न क्षतिरिति वाच्यम्। एवं सति निपातसमभिव्याहृताख्यातार्थसंख्यायाः प्रथमान्तार्थे अन्वयो न स्यात्, तत्स्थलीयसंख्यान्वयबोधस्य प्रथमान्तपदजन्योपस्थितिकार्यतावच्छेदकानाक्रान्तत्वेन सामग्रीविरहात्। नच निपातसमभिव्याहृताख्यातार्थसंख्यानिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधे प्रथमान्तपदजन्योपस्थितिः कारणं, तादृशाख्यातार्थभावनाप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधे निपातजन्योपस्थितिः कारणमिति कल्पनया, संख्याविशेष्यत्वं प्रथमान्तार्थस्य, भावनाविशेष्यत्वञ्चाभावस्योपपादयितुं शक्यमिति वाच्यम्। तथा सति अनेककार्यकारणभावकल्पनया गौरवात्।

निपातसमभिव्याहारस्थले सर्वत्रास्या रीतेरसंभवाच्च। चैत्र एव पचति इत्यत्र निपातसमभिव्याहारे आख्यातार्थसंख्याभावनयोरुभयोरपि प्रथमान्तार्थे चैत्रेऽन्वयात्

एवञ्च तत्तत्स्थलानुरोधात् अन्यादृशकार्यकारणभावकल्पनाया आवश्यकत्वेन अनेककार्यकारणभावकल्पनागौरवं न कथमपि परिहर्तुं शक्यते ।

अस्मन्मते तु नामार्थभिन्नः सुबर्थलिङ्गसंख्याव्यतिरिक्तः सर्वोऽपि भावनायामेवान्वेतीति लाघवं बोध्यम् ।

अपि च, अन्याविशेषणीभूतप्रथमान्तपदार्थे कालाद्यतिरिक्ताख्यातार्थान्वयः इति न संगच्छते । भवतां मते चैत्र एव पचतीत्यत्र आख्यातार्थसंख्याभावनयोरुभयोरपि चैत्रेऽन्वयस्वीकारात्, चैत्रस्य च एवकारार्थान्ययोगव्यवच्छेदैकदेशे भेदे प्रतियोगितया विशेषणत्वात् । नच विशेष्यत्वाभावविशिष्टविशेषणत्वाभाववत्त्वमेव अन्याविशेषणत्वं विवक्षितम् । निरुक्तवाक्याच्च चैत्रः पाकानुकूलकृतिमान्, चैत्रान्यः पाकानुकूलकृत्यभाववानिति बोधो जायते । तत्र च विशेषणत्वविशेष्यत्वाभ्यां चैत्रस्य भानात् विवक्षितान्याविशेषणत्वमस्तीति तत्र संख्याभावनयोरन्वयो नानुपपन्नः इति वाच्यम् । तथा सति मुख्यविशेष्यस्य चैत्रस्य तदन्यस्य च भेदेन वाक्यार्थभेदात् वाक्यभेदापत्तेः । चैत्रे पचति सति मैत्रे चापचति, कीदृशौ चैत्रमैत्रौ इति प्रश्ने, 'चैत्र एव पचति' इत्युत्तरापत्तेश्च । न च उक्तवाक्यात् मैत्रत्वेन तद्बोधाभावात् कथं तस्योत्तरत्वापत्तिरिति वाच्यम् । तथापि कीदृशौ चैत्रतदन्यौ इति प्रश्नस्योत्तरत्वापत्तेः दुर्वारत्वात् ।

किञ्च, ओदनं पचति इत्यत्र भावनाप्रकारकबोधप्रयोजकस्य प्रथमान्तपदस्याभावात् कथं प्रथमान्तार्थमुख्यविशेष्यको बोधः । न चानुभवानुसारेण

---

**टिप्पणी—**

एवकारस्य अन्यः अभावश्च खण्डशः अर्थः । धात्वर्थान्विताख्यातार्थकृतेः प्रतियोगितया एवार्थे अभावे अन्वयः । प्रथमान्तार्थस्यापि एवार्थैकदेशे अन्यत्वे प्रतियोगितया अन्वयः । व्युत्पत्तिवैचित्र्याच्च एवकारार्थभावस्य तदर्थान्यस्मिन्नन्वयः । धात्वर्थान्विताख्यातार्थस्य प्रथमान्तार्थस्य च वारद्वयं बोधे प्रवेशः इति नैयायिकप्रक्रिया ।

चैत्रान्यावृत्तिपाकानुकूलकृतिमान् चैत्रः इति बोधात् एवकारस्थले न वाक्यभेदः इत्यपि पक्षान्तरमस्तीति बोध्यम् ॥

भावनाप्रकारकबोधत्वावच्छिन्नं प्रत्येव आख्यातपदज्ञानस्य कारणत्वात्, तादृशबोधनिर्वाहाय तत्र प्रथमान्तपदमध्याह्रियते इति वाच्यम्। भावनाप्रकारकबोधस्य शपथैकनिर्णेयत्वेन तादृशकार्यकारणभावस्यैवाकल्पनात्। तथा कार्यकारणभावकल्पने 'चैत्रेण सुप्यते' इति भावाख्यातस्थलेऽपि प्रथमान्तपदाध्याहारापत्तेश्च। यदि च तत्र आख्यातार्थविशेष्यक एव बोध., भावनाप्रकारकबोध प्रति च भावाख्यातभिन्नाख्यातपदज्ञानं कारणमित्युच्यते, तदा कारणत्वान्तरकल्पनागौरवं दुर्वारम्।

किञ्च, प्रथमान्तार्थविशेष्यकबोधस्वीकारे, चैत्रः कीदृशः इति प्रश्ने, चैत्रः पचति इति वाक्यमुत्तरं स्यात्। तेन चैत्रविशेष्यकस्य पाकभावनाप्रकारकस्य बोधस्य जननात्।

न च भावनाविशेष्यकबोधपक्षेऽपि चैत्रः पचति इति वाक्यं कीदृशी कृतिः इति प्रश्नस्योत्तरं स्यात्, चैत्रकर्तृकपाककृतेर्बोधकत्वादिति वाच्यम्। स्त्रीलिङ्गविशिष्टकृतिविषयकप्रश्नस्य स्त्रीलिङ्गविशिष्टकृतिबोधकपदघटितमेवोत्तरवाक्यं भवितुमर्हति। आख्यातोपात्ता कृतिस्तु लिङ्गानन्वयिनीति न तादृशं वाक्यमुत्तरं भवति। अनया च सरण्या प्रथमान्तार्थविशेष्यकबोधपक्षे चैत्रः कीदृशः इति प्रश्नोत्तरत्वापत्तिवारण न संभवति। मुख्यविशेष्यस्य चैत्रस्य लिङ्गसंख्यादिविशिष्टस्यैव चैत्रः पचतीति वाक्येन बोधात्। तस्मात् आख्यातार्थभावनाप्रकारकप्रथमान्तार्थमुख्यविशेष्यको बोधः न संगच्छते।

अपितु आख्यातार्थभावनामुख्यविशेष्यक एव बोधः समुचितः।

आख्यातार्थसंख्यापि सामानाधिकरण्यसंबन्धेन तस्यामेवान्वेति। एवं कालोऽपि आधेयतासंबन्धेन तत्रैवान्वेति। नश्यतीत्यत्र तु निरूढलक्षणया आख्यातोपस्थापिते प्रतियोगित्वे (भावनायां) वर्तमानः कालः स्ववृत्त्युत्पत्तिकनाशनिरूपितत्वसंबन्धेनान्वेति, न तु स्ववृत्तिनाशनिरूपितत्वेन संबन्धेन। चिरध्वस्ते घटे, नश्यति इति प्रयोगापत्तेः। एवं संबन्धभेदेऽपि कालः सर्वत्र भावनायामेवान्वेति।

न च सर्वत्र विशेष्यभावनाया एकत्वेऽपि तत्र तत्र संबन्धानां विलक्ष-
त्, तत्तत्संसर्गकबोधे तत्तत्समभिव्याहारज्ञानस्य कारणतानां कल्पनीयतया
कारणभावानन्त्यं दुर्वारमिति वाच्यम्। यथा घटवत् द्रव्यमिति वाक्यात्
र्थद्रव्यविशेष्यकः घटप्रकारकः शाब्दबोधो जायते। तत्र च संबन्धः संबन्ध-
संसर्गमर्यादया भासते। न तु विशिष्य संयोगत्वसमवायत्वादिना।
एव संयोगेन घटाभाववत् द्रव्यमिति ज्ञानदशायामपि घटवत् द्रव्यमिति
यजबुद्धिरनुभवसिद्धोपपद्यते। संबन्धसामान्यसंसर्गकशाब्दबोधे जाते, संबन्धस्य
शेष्य जिज्ञासायां, प्रमाणान्तरेण संबन्धविशेषतात्पर्ये अवधृते, तत्र तत्र संबन्धे
ब्दबोधः पर्यवस्यति। एवमेव वर्तमानकालवती भावना इति शाब्दबोधे संबन्ध-
शेषः विशिष्य न संसर्गमर्यादया भासते। अपि तु संबन्धत्वेन। तदनन्तरं
शिष्य संबन्धावगतौ सत्यां, बोधः तत्र पर्यवस्यति। एवञ्च संबन्धसामान्य-
सर्गककालप्रकारकभावनाविशेष्यकबोधे तादृशतिङ्समभिव्याहारज्ञानं कारण-
त्येक एव कार्यकारणभाव इति न तदानन्त्यम्।

एवं कर्त्राख्यातस्य कर्तरि, कर्माख्यातस्य कर्मणि च निरूढलक्षणा।
चतीत्येतावन्मात्रश्रवणेऽपि, पाककर्ता एको न वेति संशयो नोदेति। उदेति
त्र पाककर्ता कः इति जिज्ञासा। पचतीत्यतः पाककर्तृबोधं विना नैतदुभय-
ुपपादयितुं शक्यते। अतः कर्तृबोधाय आख्यातस्य कर्तरि लक्षणास्वीकार
आवश्यकः। कर्तरि लकारविधायकमनुशासनमपि संगतं भवति।

कर्तृत्वञ्च अखण्डो धर्मः, न कृत्याश्रयत्वमिति पूर्वमेव निवेदितम्। अत
एव दम्पत्योः कर्तृत्वं व्यासज्यवृत्ति इति सिद्धान्तः संगच्छते। अन्यथा कृत्याश्र-
यत्वस्य पतिनिष्ठस्य पत्नीनिष्ठस्य च भिन्नभिन्नत्वात् व्यासज्यवृत्तित्वं नोपपद्येत।
अनेकनिष्ठस्यैकस्य द्वित्वादेः व्यासज्यवृत्तित्वदर्शनात्।

आख्यातलक्ष्यः कर्तापि स्वनिष्ठकर्तृतानिरूपकत्वसंबन्धेन भावनाया-
मेवान्वेति।

एवं पचतीत्यादौ धात्वर्थः पाकः कर्मतासंबन्धेन भावनायामन्वेति, नतु
अनुकूलतासंबन्धेन। पचति इत्यस्य 'पाकं करोति' इति विवरणदर्शनात्।

ओदनं पचति इत्यादौ च ओदनस्य कर्मत्वेनान्वितत्वात् पाकः करणत्वेन भावनायामन्वेति, पाकेनौदनं करोति इति विवरणात्। न च पाकं प्रति कृते-कारणतया कृतिनिरूपितकरणत्वस्य पाके अयोगात् तस्य करणतया भावनान्वयो न युज्यते इति वाच्यम्। स्वनिष्ठकरणतानिरूपकौदनोद्देश्यकत्वसम्बन्धेन पाकस्य भावनायामन्वयस्वीकारात्, करणत्वस्य संसर्गघटकत्वात् संसर्गत्वव्यवहारोपपत्तेः।

एवञ्च धात्वर्थः यथायथं कर्मत्वकरणत्वान्यतरसंसर्गेण भावनायामन्वेति।

ओदनं पचति इत्यत्र द्वितीयार्थः कर्मत्वम्। तच्च परसमवेतक्रियाजन्य-फलशालित्वसमनियतमखण्डम्। तत्रैव द्वितीयार्थसंख्यापि सामानाधिकरण्य-सम्बन्धेनान्वेति समानपदोपात्तत्वात्। कर्मत्वे च प्रकृत्यर्थः आधेयतया अन्वेति। तच्च स्वनिरूपकपाकानुकूलत्वसम्बन्धेन भावनायामेवान्वेति।

न च द्वितीयार्थकर्मत्वं निरूपकत्वेन साक्षात्सम्बन्धेन धात्वर्थे एवान्वेतु इति वाच्यम्। पाकं करोति, पाकेनौदनं करोति इत्यादिविवरणात् धात्वर्थः करोत्यर्थभावनाकारकम्। धात्वर्थसाधारण्येन कारकप्रकारकशाब्दबुद्धित्वाव-च्छिन्नं प्रति भावनाविशेष्यतासम्बन्धेन लिङ्गानन्वयिपदजन्योपस्थितिः कारणमित्येक-कार्यकारणभावकल्पने लाघवात् कर्मत्वादीनामपि भावनायामेव योग्येन सम्बन्धे-नान्वयो युक्तः। अन्यथा अनेककार्यकारणभावकल्पनागौरवात्। एवं धात्वर्थ-पाकान्वयार्थमुपस्थितं भावनाविशेष्यत्वमिति तस्यैव कर्मत्वादिप्रकारतानिरूपितत्वं कल्पयितुमुचितम्। न त्वनुपस्थितस्य धात्वर्थविशेष्यत्वस्य। एवं, काष्ठैरोदनं पचति इति वाक्यं, काष्ठैः पाकेन ओदनं करोति इति विवृण्वन्ति। तत्र काष्ठ-करणत्वादीनां करोत्यर्थान्वयित्वं सम्प्रतिपन्नमिति विव्रियमाणवाक्येऽपि विभक्त्यर्थ-करणत्वादीनां करोत्यर्थभावनायामन्वयो युज्यते। एवमेव तत्तद्विभक्तिबोध्यं कर्तृत्व-सम्प्रदानत्वादिकमपि अखण्डमेव स्वनिरूपकधात्वर्थानुकूलत्वसम्बन्धेन भावनाया-मन्वेति॥

न चानुभवानुसारेण व्युत्पत्तिभेदमङ्गीकृत्य तस्य तस्य पदार्थस्य योग्येन साक्षात्सम्बन्धेन स्वस्वविशेष्ये अन्वय एव समीचीन इति वाच्यम्। तथा सति राजपुरुषः इति समासस्थले नामार्थयोरपि भेदेनान्वयव्युत्पत्तिं स्वीकृत्य राज्ञ एव

चैत्र एव पचति इत्यत्र चैत्रवृत्ति चैत्रायावृत्तिश्चैत्रकर्तृका पाकभावना इति बोध । नीलो घट इत्यत्र अस्तीति क्रियापदमध्याहरणीयम्। आख्यातार्थः आश्रयत्वम्। नीलपदार्थ घटपदार्थश्च स्वकर्तृकस्थितिनिरूपितत्वसम्बन्धेन भावनाया (आश्रयत्वे) अन्वेति। नीलघटयोरभेदबोधो मानस । यदि अभेदबोधस्य शाब्दत्वे आग्रह, तदा नीलस्य स्वाभिन्नघटकर्तृक स्थितिनिरूपितत्वसम्बन्धेन भावनायामन्वय । नीलविशिष्टा घटविशिष्टा च स्थितिभावनेति बोध ।

घट पटो न इत्यत्र भवतीति क्रियापदमध्याह्रियते। पटपद पटभिन्ने लाक्षणिकम्। नञ्पद तात्पर्यग्राहकम्। पटपदार्थश्च स्वाभिन्नघटकर्तृकस्थितिनिरूपितत्वसंबन्धेन भावनाया (आश्रयत्वे) अन्वेति। घटोऽपि स्वनिष्ठकर्तृत्वघटितसबन्धेन तत्रैवान्वेति।

तस्मात् प्रातिपदिकार्थव्यतिरिक्त सुबर्थलिङ्गसख्याव्यतिरिक्तश्च सर्वोऽपि भावनायामन्वेतीति व्युत्पत्तिकल्पनालाघवस्य केनाप्यपलपितुमशक्यत्वात् सर्वत्र भावनामुख्यविशेष्यक एव बोध मद्दर्ष्यनुभवसिद्धो युज्यते इति **निरूपयन्ति**॥

**वैयाकरणास्तु—**

। वाक्य नाम सुबन्ततिङन्तचय । सुबन्त नामपदेन व्यवह्रियते। 'नमति-आख्यातार्थं प्रति विशेषणीभवतीति नाम' इति, 'वाक्ये हि आख्यात प्रधान, तदर्थत्वात् गुणभूत नाम।' इति **निरुक्तभाष्यकारो** बभाषे। सुबन्तार्थश्च आख्यातशब्दिततिङन्तार्थविशेषणम्। तिङन्तजन्यबोधे च धात्वर्थो भाव एव विशेष्य । तिङर्थस्तु कर्त्रादि तत्र विशेषणम्।

ननु प्रकृतिप्रत्ययौ सहार्थं ब्रूत, तयोस्तु प्रत्यय प्राधान्येन इति व्युत्पत्ते. तिङर्थ एव धात्वर्थविशेष्यो भवितुमर्हति इति चेत्, न।

'भावप्रधानमाख्यातम्' इति निरुक्तस्मृते धात्वर्थस्य भावस्यैव विशेष्यता सिद्ध्यति! तथाहि। 'चत्वारि पदजातानि, नामाख्यातोपसर्गनिपाता' इत्युपक्रम्य, 'सत्त्वप्रधानानि नामानि' इति नामलक्षण, 'भावप्रधानमाख्यातम्' इति आख्यातलक्षणञ्च निरूपयति **निरुक्तकारः**। "प्रकृति प्रत्ययो विभक्ति-

द्वितीयाविभक्तिरहिताः 'जानामि सीता जनकप्रसूता ।', 'श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयः शुभाः ।' इत्यादयः प्रयोगा उपपद्यन्ते । धावनविशिष्टमृगस्य दर्शनकर्मत्वबोधे विशेषणीभूतधावनस्यापि दर्शनकर्मतया बोधः सिद्ध इति महाभाष्योक्तं धावनक्रियाया दर्शनक्रियाकर्मत्वं चोपपद्यते, इति चेत् ।

न । एवंरीत्या वाक्यैकवाक्यताया उपपादनेऽपि भाष्यसिद्धायाः पदैकवाक्यताया असंभवात् । किञ्च नीलविशिष्टघटस्य दर्शनकर्मत्वे प्रतिपिपादयिषिते, नील घटं जानाति इति प्रयोगो न स्यात् । विशिष्टस्य वाक्यार्थत्वात् तद्बोधकस्य पदसमुदायरूपवाक्यस्य अप्रातिपदिकत्वेन द्वितीयाया अनुपपत्तेः । तस्मात् प्रथमान्तार्थविशेष्यकबोधस्वीकारे पश्य मृगो धावति इत्यत्र एकवाक्यता न स्यात् ।

अस्मन्मते तु मृगो धावति इत्यतो मृगकर्तृकं धावनं बोध्यते । धावनञ्च कर्मतासंबन्धेन दर्शने अन्वेति । मृगकर्तृकधावनकर्मकं दर्शनमिति बोधः । अत्र न क्वापि व्युत्पत्तिर्विरुध्यते । कर्मबोधकस्य धातुत्वेन प्रातिपदिकसंज्ञाविरहात् न द्वितीयापत्तिः । नच मृगीयधावनस्य विशिष्टस्य कर्मत्वे विशेषणीभूतमृगस्यापि कर्मत्वात्, तद्बोधकमृगपदस्य प्रातिपदिकत्वात् तदुत्तरं द्वितीयापत्तिरिति वाच्यम् । मृगस्य धावनविशेषणत्वेन तत्प्रयुक्तस्यान्तरङ्गसंस्कारस्य प्रथमारूपस्यानिवृत्तेः । 'श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयः शुभाः ।' इत्यादिप्रयोगास्त्वार्षाः ।

एतेन, दृशिधातोः धावनकर्तृमृगकर्मकदर्शने, मृगकर्तृकोत्कटधावने वा लक्षणा । इतराणि पदानि तात्पर्यग्राहकाणि । अत्र च न कोऽपि व्युत्पत्तिविरोधः इति परास्तम् ।

उक्तरीत्या विनैव लक्षणां निर्वाहे लक्षणाश्रयणस्यानुचितत्वात्, अनेकेषां पदानां व्यर्थत्वापरपर्यायतात्पर्यग्राहकत्वकल्पनाया अयुक्तत्वाच्च ।

ननु, भवन्मते आनय मृगो धावतीत्येकं वाक्यं न स्यात् । मृगकर्तृकधावनस्य आनयनक्रियाकर्मत्वेनान्वयायोगात् । अस्मन्मते तु धावनकर्तृमृगस्य आनयनकर्मतयान्वयसंभवाद् भवत्येकवाक्यतेति चेत् ।

न । शिखी ध्वस्तः इत्यत्र शिखायां ध्वस्तत्वपर्यवसानवत्, 'सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे' इति न्यायेन मृगविशिष्टस्य धावनस्य आनयनकर्मत्वान्वयबोधः मृगकर्मकानयने पर्यवस्यति । तस्मात् प्रथमा- न्तार्थमुख्यविशेष्यकबोधो न समञ्जसः ॥

अपि च, स्वस्वामिभावसंबन्धेन राजविशिष्टः पुरुषः स्वस्वामिभावसंबन्धेन भार्याविशिष्टः इति बोधतात्पर्येण राजपुरुषो भार्यायाश्च इति न प्रयुज्यते । एवं घटत्वविशिष्टे समवायेन द्रव्यत्ववैशिष्ट्यान्वयतात्पर्येण घटो द्रव्यत्वस्य इत्यपि न प्रयुज्यते । अतः एकविशेषणवैशिष्ट्येनोपस्थिते तज्जातीयसंबन्धेन विशेषणान्त- रान्वयो नेति व्युत्पत्तिः स्वीकरणीया । स्वस्वामिभावसंबन्धेन राजविशिष्टे पुरुषे सजातीयस्वस्वामिभावसंबन्धेन भार्यावैशिष्ट्यं बोधयितुं न शक्यते इति न तादृशः प्रयोगः । एवञ्च चैत्रः पचति इति वाक्यात् चैत्रत्वविशिष्टविशेष्यकः पाकानुकूल- कृतिप्रकारको बोधो न संभवति । उक्तव्युत्पत्तिविरोधेन समवायेन चैत्रत्वविशिष्टे सजातीयसमवायेन कृतिवैशिष्ट्यस्य बोधयितुमशक्यत्वात् । किञ्च धात्वर्थप्राधान्या- भावे 'पचति व्रजति' इति प्रयोगापत्तिः । पाककर्तुः व्रजनकर्तृत्वात् । अस्म- न्मते तु पाककर्तृकव्रजनस्य बाधितत्वान्न तथा प्रयोगः आपादयितुं शक्यते । तस्मात् निरुक्तमहाभाष्यकारादिमहर्षिसंमतः धात्वर्थमुख्यविशेष्यक एव बोधः समञ्जसः ॥

**अत्रेयं प्राचीनवैयाकरणसंमता बोधसरणि :—**

चैत्रः तण्डुलं पचति इत्यत्र तण्डुलपदोत्तरद्वितीयाया आश्रयोऽर्थः 'कर्मणि द्वितीया' (पा. सू. 2-3-2) इत्यनुशासनात् कर्म द्वितीयावाच्यम् । क्रिया फलं च धातोः लभ्यते । जन्यत्वं च विनैव पदवाच्यतां संसर्गमर्यादया । अतः अनन्यलभ्यः आश्रयः द्वितीयार्थः । तत्र प्रकृत्यर्थः अभेदेनान्वेति । देवतातद्धित- स्थले आग्नेयम् इत्यादौ प्रकृतिप्रत्ययार्थयोरभेदान्वयस्य सर्वसिद्धत्वात् । आश्रयश्च स्ववृत्त्याश्रयत्वनिरूपकत्वसंबन्धेन विक्लित्तिरूपफले, तच्च जनकतासंबन्धेन धात्वर्थे कृतिपर्यन्तव्यापारे अन्वेति । कर्त्राख्यातस्य पूर्वोक्तनयेन आश्रयः संख्या वर्तमान- कालश्चार्थः । प्रथमान्तचैत्रपदार्थः अभेदेन आख्यातार्थाश्रये, संख्या समानपदो- पात्ताश्रये, वर्तमानकालः धात्वर्थव्यापारे, तिङर्थोऽपि धात्वर्थे अन्वेति । तथा च

तण्डुलाभिन्नाश्रयकविक्लित्यनुकूल एकचैत्राभिन्नाश्रयक वर्तमानो व्यापार इति तद्वाक्याधीनो बोध ।

चैत्रेण तण्डुल पच्यते इत्यत्र कर्माख्यातस्य कर्तृतृतीयायाश्चाश्रयोऽर्थ, निरुक्तयायात्। तृतीयार्थ धात्वर्थे व्यापारे, प्रथमान्ततण्डुलपदार्थाभिन्नाख्या-तार्थाश्रयश्च धात्वर्थे फले, फल च व्यापारे अन्वेति। तण्डुलाभिन्नाश्रयक-विक्लित्यनुकूल चैत्राभिन्नाश्रयक वर्तमानव्यापार इति शाब्दबोध ।

चैत्रेण सुप्यते इत्यत्र तिङ् धात्वर्थानुवादक लट्त्वादिना वर्तमानकाल-बोधक । चैत्राभिन्नाश्रयक वर्तमानस्वाप इत्यन्वयबोध ।

चैत्रो न पचति इत्यत्र चैत्रकर्तृकपाकाभाव इति बोध । प्रकारतासम्बन्धेन नञर्थविशेष्यकशाब्दबोध प्रति धातुजन्यभावनोपस्थिते विशेष्यतासम्बन्धेन हेतुत्वात्।

---

टिप्पणी—

*धातुजन्यभावनोपस्थितेरिति।* भावनापदेन धात्वर्थव्यापार व्यप-दिशन्ति वैयाकरणा । 'भावो भावना सैवोत्पादना क्रिया' इति तदुक्ते ॥

अत्रेद बोध्यम्—चैत्रो न पचति इति चैत्रकर्तृकपाकाभावबोधस्वीकारे पचत्यपि चैत्रे, न पचति चैत्र इति प्रयोगापत्ति । तादृशपाकाभावस्य अन्यनिष्ठत्वेन विषयाबाधात्। अत नञ चैत्रनिष्ठाभावे लक्षणा अङ्गीकर-णीया । चैत्रकर्तृकपाकप्रतियोगिक चैत्रनिष्ठाभाव इति बोध । अथवा धात्वर्थस्य पाकस्य समभिव्याहृतप्रथमान्तपदोपस्थापितत्वोपलक्षितानुयोगि-कत्वविशिष्टाभावीयानुयोगिताविशेषसम्बन्धेन नञर्थाभावे अन्वय स्वीक्रियते इति विनैव लक्षणा अतिप्रसङ्गवारण सभवति । अन्यनिष्ठपाकाभावे चैत्र-पदोपस्थापितत्वोपलक्षितचैत्रानुयोगिकत्वविशिष्टाभावीयानुयोगिताविशेषस्य पाकसबन्धत्वाभावात् ।

एवमपि यादृशराजादिकर्तृक पाक एवाप्रसिद्ध, तादृश राजा न पचति इति वाक्यस्य प्रामाण्य न घटते । राजकर्तृकपाकरूपप्रतियोगिन अप्रसिद्धचा तदभावस्याप्रसिद्धत्वेन बोधनासभवात्। अत तत्र नञसम-भिव्याहृतपचधातो पाकाभावे लक्षणा नञ तात्पर्यग्राहकता च स्वीकृत्य राजाश्रयक पाकाभाव इति बोधो वर्णनीय । पाकाभावस्य राज्ञि बाधा-भावाच्च वाक्यप्रामाण्यम् इति ॥

नीलो घटः इत्यत्र नीलपदोत्तरप्रथमार्थः प्रातिपदिकार्थः अभेदेन घटपदार्थे अन्वेति इति ॥

## नव्यवैयाकरणानां बोधपद्धतिस्तु—

द्वितीयायाः कर्मत्वशक्तिमान्, विशेषणत्वं, क्रियाकारकभावसंबन्धश्चार्थः। क्रियाजन्यफलाश्रयत्वातिरिक्तैव कर्मत्वशक्तिः अखण्डा। अतएव क्रियाजन्यफलाश्रयत्वात् कर्मत्वम् इति प्रयोग उपपद्यते। अन्यथा कर्मत्वात् कर्मत्वमितिवत् अयोग्यं तादृशवाक्यं स्यात्। 'कर्मणि द्वितीया' (पा. सू. 2-3-2) इति सूत्रस्वरसात् कर्मत्वशक्तिमानर्थः। 'कष्टं श्रितो भवतीत्यत्र क्रियाकारकयोरभिसंबन्धस्य द्वितीया वाचिका भवति' इति समर्थसूत्रभाष्यात् क्रियाकारकभावसंबन्धोऽर्थः। भेदसमानाधिकरणविशेषणत्वज्ञाने एव संबन्धाकांक्षा जायते इति विशेषणत्वमप्यर्थः। कर्मत्वादिशक्तिश्च द्वितीयाद्योत्या प्रकृत्यर्थविशेषणमेव। पञ्चकं प्रातिपदिकार्थः इति व्यवस्थापितत्वात्। आख्यातस्यापि कर्तृत्वादिशक्तिमानर्थः। कर्मीभूततण्डुलविशिष्टः चैत्राभिन्नकर्तृको वर्तमानः पाकः इति चैत्रः तण्डुलं पचतीति वाक्याधीनो बोधः। कर्माख्याते च धातुतः व्यापारावच्छिन्नफलमुपस्थाप्यते। धात्वर्थफलमुख्यविशेष्यकश्च बोधो जायते। अतएव, "इष्यते पुत्रः इत्यर्थे पुत्रीयतीति न। भिन्नार्थकत्वात्। किन्तु पुत्रमिच्छतीत्यर्थ एव।" इति 'सुप आत्मनः' (पा. सू. 3-1-8) इति सूत्रस्थं भाष्यमुपपद्यते। कर्माख्याते कर्त्राख्याते च व्यापारमुख्यविशेष्यकबोधस्वीकारे तयोर्भिन्नार्थकत्वाभावेन भाष्यासंगतेः स्पष्टत्वात्।

चैत्रो न पचतीत्यत्र आरोपिता चैत्रकर्तृकपाकक्रिया इति शाब्दबोधः। ततः पाकाभावबोधो मानसो जायते।

चैत्र एव पचति इत्यत्र एवार्थः अवधारणम्। तच्च ज्ञानविशेषः अवधारणत्वेन भासते। अवधारणविषयचैत्रकर्तृकः पाकः इत्यन्वयबोधः।

---

टिप्पणी—

व्यापारावच्छिन्नफलमिति। फलं व्यापारश्च धात्वर्थः इति प्राचीनवैयाकरणाः। फलावच्छिन्नव्यापारे, व्यापारावच्छिन्नफले च धातोः शक्तिद्वयम्। कर्त्राख्याते आद्यस्य, कर्माख्याते द्वितीयस्य च बोधः इति नवीनवैयाकरणाः।

इति निरूपयन्ति ॥

नैयायिकास्तु—

पण्डितश्चैत्र. इति वाक्यात् पण्डितामिन्नश्चैत्रः इदि बोधोऽनुभूयते । न चात्र धात्वर्थ. आख्यातार्थो वा मुख्यविशेष्यतया भासते इति वक्तुं शक्यम् । तिङन्तस्यैवाश्रवणात् । दृश्यन्ते च बहुलमाख्यातरहिता. प्रयोगाः—

'शशी दिवसधूसरः, विगतयौवना कामिनी
सरो विगतवारिजं, मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः, सततदुर्गतः सज्जनः
नृपाङ्गणगतः खलः, मनसि सप्त शल्यानि मे ॥'

इत्यादय. । नच तत्र अस्तीति क्रियापदमध्याहर्तव्यम्, 'अस्तिर्भवन्तीपरः प्रथमपुरुषः अप्रयुज्यमानोऽप्यस्ति' इति कात्यायनस्मरणात् । तदर्थ एव तत्र बोधे मुख्यविशेष्यतया भासते इति वाच्यम् । त्वं पण्डित·, अहं पण्डितः इत्यादौ प्रथमपुरुषास्तिपदाध्याहारस्यायोग्यतया निरुक्तस्मरणाप्रवृत्तेः क्रियापदाध्याहारे मानाभावात् प्रथमान्तार्थमुख्यविशेष्यकस्यैव बोधस्योदयात् ।

नच प्रातिपदिकार्थप्रकारकशाब्दबोधं प्रति विशेष्यतया सुब्जन्योपस्थितिः कारणं, सुबर्थप्रकारकशाब्दबोधं प्रति क्रियापदजन्योपस्थितिः कारणमिति अनुगतकार्यकारणभाव एव तत्रापि योग्यस्य क्रियापदस्याध्याहारे प्रमाणमिति वाच्यम् । सुप्त्वप्रातिपदिकत्वादीनामनुगतानतिप्रसक्तानां दुर्निर्वचतया, प्रातिपादिकार्थत्वादेरनुगतस्य कार्यकारणभावस्यासंभवात् । तथाहि सुप्त्वं न जाति. अमत्वादिना सांकर्यात् । नापि सुप्पदवाच्यत्वं तत्, तत्पदस्य ईश्वरसंकेते मानाभावात् । नापि पाणिनिसंकेतसंबन्धेन सुप्पदवत्त्वम्, व्याकरणान्तरप्रणेतृपुरुषीयसंकेतसंबन्धेन तत्पदवत्त्व, पुरुषविशेषीयसंकेतसंबन्धेन पदान्तरवत्त्व चादाय विनिगमनाविरहात् । एवं प्रातिपदिकत्वमप्यनुगतं दुर्वचम् । तथा च तत्तत्प्रातिपदिकार्थविभक्त्यर्थान्

टिप्पणी—

मिथ. साकाङ्क्षशब्दस्य व्यूहो वाक्यम् । अस्तिर्भवन्तीपर —लडन्त. असधातुरित्यर्थ. ।

शयितव्यमिति च प्रथमान्तपदम्। नच तस्य तिङ्सामानाधिकरण्यमस्ति। यदि तत्रापि प्रथमासाधुत्वाय अस्तिपदमध्याह्रियते, तदा सुबन्तचयपर्याप्तत्व तद्वाक्यस्य न सम्भवति। यदि च तिङ्समानाधिकरणयोग्यत्वमेव वार्तिके विवक्षितमिति तत्र प्रथमा उपपाद्यते, तदा तथैव प्रकृतेऽपि प्रथमानिर्वाह सम्भवति। एव क्रियापदरहितस्थले नियमेन अस्तिपदाध्याहारवादिभिरपि, 'अस्तिर्भवन्तीपर' इत्यनुशासनज्ञानाभावे निरुक्तस्थले पण्डितामिन्नश्चैत्र इति बोध इष्यते। तस्मात् चैत्र पण्डित इत्यादौ प्रथमान्तार्थमुख्यविशेष्यको बोध क्लृप्त इति, सति सम्भवे प्रथमान्तार्थमुख्यविशेष्यक एव बोध स्वीकर्तुमुचित ॥

चैत्र तण्डुल पचति इत्यत्र तण्डुलप्रातिपदिकार्थ द्वितीयार्थे कर्मत्वे अन्वेति। प्रातिपदिकार्थविशेष्यतया कर्मत्वादौ विवक्षित एव द्वितीयादीनामनुशासनसिद्धत्वात्। समभिव्याहृतत्वेन नियमेन निरूपकसाकांक्ष द्वितीयार्थकर्मत्व धात्वर्थे पाके अन्वेति। पाकश्चाख्यातार्थकृत्यन्वयी। प्रकृतिप्रत्ययौ सहार्थं ब्रूत तयोस्तु प्रत्यय प्राधान्येन इति व्युत्पत्ते। आख्यातार्थकृतिश्च व्यापाररूपा शुद्ध प्रातिपदिकार्थमात्रमाकाक्षति, नतु व्यापारिणम्। व्यापारिणमाकाक्षमाणश्च व्यापार तेनैव व्यापारेण व्यापारिणमाश्रयते, उतान्येन। यदि तेनैव, तदा आत्माश्रय। यद्यन्येन, तदा अनवस्था। शुद्धश्च प्रातिपदिकार्थ प्रथमान्तार्थ एव। नच प्रथमाप्रकृत्यर्थस्य प्रथमार्थे अन्वय संभवति। प्रथमाया सङ्ख्यातिरिक्तार्थाभावात्।

नच प्रातिपदिकार्थसूत्रात् प्रातिपदिकार्थ एव प्रथमार्थ इति वाच्यम्। तस्य प्रातिपदिकेनैव लाभात् प्रत्ययस्य तत्र शक्तिकल्पनाया अयुक्तत्वात्, अनन्यलभ्य शब्दार्थ इति न्यायात्। तत्र प्रातिपदिकार्थस्याभ्यासमवाय, अभेदाद्यप्रयोजिकाया विरूपोपस्थितेरभावात्। चैत्रादिपदोत्तरप्रथमाया एव चैत्रादिरर्थ, प्रातिपदिक प्रथमाया तदर्थतात्पर्यग्राहकमित्युक्तौ च, अनन्तानां प्रातिपदिकानां स्वार्थत्वापरपर्यायतात्पर्यग्राहकत्वकल्पनामपेक्ष्य अल्पीयस्या प्रथमाया प्रयोगसाधुत्वसंपादकताकल्पनमेव युज्यते। एव तट, तटी, तटम् इत्यादौ लिङ्गस्य पुंस्त्वादे बोध एव नास्ति, बाधितत्वात्। बोधेऽपि तटान्, तटी इत्यादौ प्रथमा-

रहितस्थल इव तटः इत्यत्राप्युपपत्तेः न प्रथमायाः तदर्थकता। द्रोणं व्रीहिमानय इत्यादाविव द्रोणपदस्य द्रोणपरिमिते लक्षणयैव द्रोणो व्रीहिः इति प्रयोगः सूपपाद इति परिमाणमपि न प्रथमार्थः। परन्तु अनन्यलभ्या संख्यैव। प्रातिपदिकार्थातिरिक्तेषु कर्मत्वादिषु अविवक्षितेषु प्रथमा भवतीति प्रातिपदिकार्थसूत्रार्थः। एवञ्च प्रयोगसाधुत्वाय प्रथमा प्रयुज्यते। अर्थाभावेऽपि प्रथमामनुशासता सूत्रकारेण 'न केवला प्रकृतिः प्रयोक्तव्या' इति सूचितम्। संख्या च न प्रकृत्यर्थविशेष्यतया भासते इति वक्तुं युक्तम्। तथा सति तस्याः धात्वर्थे परम्परासंबन्धेनान्वयस्य वाच्यतया गौरवात्। अतः सा प्रकृत्यर्थे एव समवायेन साक्षात्संबन्धेनान्वेति। एवञ्च प्रथमान्तचैत्रपदस्य एकत्वविशिष्टश्चैत्रोऽर्थः।

ननु 'अभिहिते प्रथमा' इति कात्यायनस्मरणात् आख्याताभिहितं कर्तृत्वादिकं प्रथमार्थः। तत्रैव प्रकृत्यर्थः विशेषणतया अन्वेतीति चेत्।

न। उक्तार्थानामप्रयोगः इति न्यायेन, आख्याताभिहितकर्तृत्ववाचकत्वस्य प्रथमायां कल्पयितुमयुक्तत्वात्। न चाख्यातेन सामान्यतः कर्तृत्वबोधनेऽपि चैत्रवृत्तित्वेन कर्तृत्वबोधार्थं प्रथमया कर्तृत्वाभिधानमावश्यकमिति वाच्यम्। आख्यातार्थस्य कर्तृत्वस्य प्रथमान्तार्थे अन्वयेनैव चैत्रवृत्तिकर्तृत्वस्य लाभात्। न चाख्यातोपात्तकर्तृत्वं आख्यातार्थभावनायां (कृतौ) अन्वेति, न प्रथमान्तार्थे इति वाच्यम्। कृत्यतिरिक्तस्य कर्तृत्वस्याप्रामाणिकत्वात्। कृतिरूपकर्तृत्वाभिधानस्यैव प्रथमाप्रयोजकत्वात्।

नच कृत्यभिधानस्य तत्प्रयोजकत्वे चैत्रेण सुप्यते इत्यत्र चैत्रपदोत्तरं प्रथमा स्यात्, चैत्रेण स्वापः क्रियते इति विवरणानुसारेण भावाख्यातेन कृत्यभिधानादिति वाच्यम्। चैत्रेण सुप्यते इत्यत्र स्वापनिरूपितं कर्तृत्वं कृतिपर्यवसितं तृतीयया बोध्यते। सा च कृतिः धात्वर्थे स्वापे अन्वेति। चैत्रेण स्वापः क्रियते इत्यत्र तु कृञर्थनिरूपितमेव कर्तृत्वं आश्रयत्वरूपं तृतीयया बोध्यते, नतु स्वापनिरूपितम्। आश्रयत्वस्य कर्तृत्वरूपत्वे आधेयत्वपर्यवसितं कर्तृमत्त्वं तृतीयार्थः नवीनमते। तच्च धात्वर्थकृतावन्वेति। चैत्रवृत्तिकृतिनिरूपितसाध्यताख्यविषयताश्रयः स्वापः इति विवरणवाक्याधीनो बोधः। एवञ्च कृञ्धातोः आख्यातविवरणत्वाभावेन

भावाख्यातस्य कृतिबोधकत्वे मानाभावात् कृतिरूपस्य कर्तृत्वस्यानभिधानात् चैत्रपदोत्तर तृतीयैव, न प्रथमा। प्रातिपदिकार्थनिष्ठे कर्तृत्वादिके समभिव्याहृताख्यातादिना अभिहिते सति, तत्प्रातिपदिकोत्तर प्रथमा इत्येवपर 'अभिहिते प्रथमा' इति वार्तिकम्।

एवञ्च प्रथमान्तार्थ कुत्र विशेषणतया अन्वियात् ॥

आख्यातार्थभावना व्यापाररूपा व्यापारिणमाकाङ्क्षते। प्रथमान्तार्थश्च निर्व्यापार व्यापारमाकाङ्क्षते। अत उभयाकाङ्क्षया उभयोरन्वय। तत्रापि भावना प्रकार, न प्रथमान्तार्थ। पूर्वोक्तन्यायेन तस्य विशेष्यभासकसामग्रीविरहात्। ननु विशेष्यतया प्रकृत्यर्थान्वयिन प्रथमार्थस्याभावेऽपि आख्यातार्थे एव प्रथमान्तार्थ अन्वेतु। नामार्थस्य भेदसम्बन्धेन धात्वर्थे अनन्वयात् न व्युत्पत्तिविरोधोऽपीति चेत्।

न। तच्छब्द पूर्ववाक्यार्थबोधे य प्रधान—मुख्यविशेष्य, त परामृशति। 'पुरुष प्रयाति, तस्य पादयोरभिवादय' इत्यत्र तच्छब्देन पुरुषस्य परामर्श', पुरुष प्रयाति इति वाक्यजन्यबोधे प्रथमान्तार्थस्य मुख्यविशेष्यतायामेव युज्यते, नतु आख्यातार्थविशेषणतायाम्। एवमेव, 'यो य शूद्रस्य पचति द्विजोऽन्न सोऽतिनिन्दित ।' इत्यत्र तच्छब्द पूर्ववाक्यार्थबोधप्रधानीभूतद्विज परामृशति।

एव आख्यातार्थस्य प्रथमान्तार्थविशेषणत्वे 'पचन् पचति' इति वाक्य निराकाङ्क्ष सपद्यते। तद्वाक्यात् पाककृतिविशिष्ट पाककृतिमानिति बोधो भवन् भवेत्। तद्धर्मे तद्धर्मवत आधेयतया अन्वयबोधस्येव, तदधिकरणे तद्वैशिष्ट्यबोधस्यापि अव्युत्पन्नतया तद्वाक्य न प्रामाणिकमिति आशयेनोपपादयितु शक्यते।

एव प्रथमान्तार्थविशेष्यकबोधाङ्गीकारे, व्याकरणमतेन च, वैयाकरण इति विवरणविवियमाणयो विग्रहवृत्तिवाक्ययो समानविशेष्यकसमानप्रकारकबोधजनकत्वमाशयेनोपपद्यते।

---

टिप्पणी—

अव्युत्पन्नतयेति। अभेदान्वयबोधे उद्देश्यतावच्छेदकविधेयतावच्छेदकयोर्भेद, भेदान्वयबोधे, उद्देश्यतावच्छेदकविधेययोश्च भेद अपेक्षित ॥

तथा चाख्यातार्थभावनैव प्रथमान्तार्थे अन्वेति । पाकानुकूलकृतिमांश्चैत्रः इति प्रथमान्तार्थमुख्यविशेष्यको बोधः ।

तदुक्तं न्यायकुसुमाञ्जलौ उदयनाचार्यैः—

"नह्यन्यतराकांक्षा अन्वयहेतुः । अपितु उभयाकांक्षा । प्रातिपदिकार्थो हि फलेनान्वयमलभमानः क्रियासंबन्धमपेक्षते । भावनापि व्यापारभूता सती व्यापारिणमित्युभयाकांक्षा अन्वयहेतुः ।" इति, "अतएवानुभवोऽपि यावदुक्तं भवति पाकानुकूलवर्तमानयत्नवान् तावदुक्तं भवति पचतीति ।" इति च ॥

एवमुपपत्तिसिद्धः प्रथमान्तार्थमुख्यविशेष्यको बोधः सर्वानुभवसाक्षिकः । आलङ्कारिकाः प्रायः प्रथमान्तार्थमुख्यविशेष्यकमेव बोधं निरूपयन्ति । बोधादिष्वभिनिवेशरहिताः वेदान्तिनोऽपि शाब्दबोधवर्णनप्रसङ्गे प्रथमान्तार्थमुख्यविशेष्यकं बोधं वर्णयन्ति ।

एवञ्च चैत्रः पचति इत्यत्र पाकानुकूलकृतिमांश्चैत्रः इति अनुभवसिद्धो बोधः युज्यते । अतएव अवगतनिरुक्तवाक्यार्थः पुरुषः, चैत्रः पाकानुकूलकृतिमान्न वेति न संदिग्धे ॥

ननु 'भावप्रधानम्' इति निरुक्तस्मृतिः न भावशब्दितभावनारूपस्य प्रत्ययार्थस्य धात्वर्थनिरूपितविशेष्यत्वं बोधयति । तादृशार्थस्य 'तयोस्तु प्रत्ययः प्राधान्येन' इत्येव सिद्धत्वादस्या वैयर्थ्यापत्तेः, भावाख्याते अव्याप्तेश्च । तत्र, बोधे धात्वर्थस्यैव विशेष्यतया भानेन तदपेक्षया प्रधानीभूतप्रत्ययार्थबोधकत्वस्याभावात् । अपितु भावपदार्थधात्वर्थस्यैव प्राधान्यं बोधयतीति तद्विरुद्धः प्रथमान्तार्थविशेष्यको बोधः स्वीकर्तुं न शक्यते इति चेत् ।

न । 'प्रत्ययः प्राधान्येन' इत्यनेनैव आख्यातार्थस्य धात्वर्थविशेष्यत्वे सिद्धेऽपि, आख्यातार्थेषु कालसंख्याभावनारूपेषु कीदृशः आख्यातार्थः विशेष्यः इति जिज्ञासायां, आख्यातार्थभावनायाः धात्वर्थापेक्षया प्राधान्यं बोधयति भाव-

---

टिप्पणी—

'फलेन—धात्वर्थेन' इति वर्धमानटीका ।

प्रधानमिति स्मृतिः। भावपदार्थो भावना। कर्त्राख्याते कर्तृत्वं, कर्माख्याते कर्मत्वं, आश्रयत्वं, प्रतियोगित्वम् इत्यादयः भावनापदव्यपदेश्याः। एवञ्च धात्वर्थनिष्ठप्रकारतानिरूपितभावनानिष्ठविशेष्यताशालिबोधजनकमाख्यातमिति फलितम्। प्रत्ययार्थः प्रधानमित्यपि न सुबर्थविषयतया संकोचयितव्यम्।

आख्यातार्थेषु कस्य गुणत्वं कस्य प्राधान्यमिति विचिकित्सायां, आख्यातार्थसंख्याद्यपेक्षया भावनायाः प्राधान्यं बोधयति निरुक्तमिदम् इति तु न युक्तम्। तथा सति आख्यातार्थसंख्यायाः भावनायां, कर्त्राख्याते स्वाश्रयसमवेतत्वसंबन्धेन, कर्माख्याते स्वाश्रयौदनादिनिष्ठविक्लित्तिजनकपाकानुकूलत्वसंबन्धेन चान्वयस्य वाच्यतया शाब्दबोधस्याधिकविषयतया गौरवापत्तेः।

तदुक्तमभियुक्तैः—पदवाक्यरत्नाकरे—

भावप्रधानमाख्यातमिति निर्वचनस्मृतेः।
आख्यातार्थेषु भावस्य प्राधान्यमनुशिष्यते॥ इति॥

न चैवमपि भावाख्याते अव्याप्तिस्तदवस्थैवेति वाच्यम्। चैत्रेण सुप्यते इत्यत्रापि चैत्रकर्तृकस्वापाश्रयत्वम् इत्याकारकस्य धात्वर्थप्रकारकस्य आश्रयत्वरूपभावनाविशेष्यकस्य बोधस्य जननेन लक्षणसंगमनात्। अयञ्च बोधः शिरोमणिसंमतः। "चैत्रेण सुप्यते, गगनेन स्थीयते इत्यादौ प्रथमान्तपदाभावात् धात्वर्थस्य भावनाया विशेषणतयैवान्वयस्य व्युत्पन्नत्वात् भावनाया बाधितत्वाच्च, भावनाविशेष्यविरहादनन्वितैव मंख्या। एकवचनं तु साधुत्वार्थम्।" इति आख्यातवादे शिरोमणिभट्टाचार्याः निरूपयन्ति। भावनाविशेष्यविरहात् इत्यनेन, भावनाविशेष्यको बोधः तत्र, नतु भावनाविशेषणकेतरविशेष्यको बोधः इति लभ्यते। अन्यथा भावनाया अबोधात् इत्येव ब्रूयुः। युज्यते चायं बोधः निरुक्तस्मृत्यनुसारात्। एवञ्च न भावाख्याते अव्याप्तिः।

अथवा, 'भावप्रधानम्' इत्यनेन न भावप्रधानकबोधोपधायकत्वं विवक्षितं, अजनितबोधाख्याते अव्याप्त्यापत्तेः। अतः तादृशबोधस्वरूपयोग्यत्वं, तादृशबोधजनकतावच्छेदकीभूतानुपूर्वीमत्त्वरूपमेव विवक्षणीयम्। अकर्मकस्यादेः यदा

पाकगमनादौ शक्तिभ्रमः लक्षणाग्रहो वा, तदा ततः धात्वर्थप्रकारकाख्यातार्थ-भावनाविशेष्यकबोधोदयेन तादृशबोधजनकतावच्छेदकानुपूर्वीमत्त्वस्य तत्र सत्त्वेन भावाख्याते नाव्याप्तिः ॥

भावप्रधानमिति वचनं प्रमाणीकुर्वद्भिरपि नव्यवैयाकरणैः, वैयाकरणः इत्यादिवृत्तेः विवरणवाक्ये आख्यातस्य भावप्राधान्यं न स्वीक्रियते। ते हि, वृत्तिविग्रहयोः समानविशेष्यकसमानप्रकारकबोधजनकत्वानुभवेन, तथा बोधक-भाष्यप्रामाण्यात्, 'क्वचिद्गुणप्रधानत्वमर्थानामविवक्षितम्' इत्युपक्रम्य,

'आख्यातं तद्धितकृतोर्यत्रार्थस्योपदर्शकम्।
गुणप्रधानभावस्य तत्र दृष्टो विपर्ययः ॥'

इति हर्युक्तेः तत्र विपर्ययशब्दस्वारस्याच्च 'व्याकरणमधीते यः' इति विवरणवाक्यस्य व्याकरणाध्ययनकर्तृबोधकत्वं व्यवस्थापयन्ति। तैश्चावश्यं निरुक्तस्मृतेः तद्धितादि-वृत्तिविवरणस्थले संकोचः स्वीकरणीयः। एवमस्माभिरपि भावाख्यातस्थले तस्याः संकोचः स्वीक्रियते इत्यपि वक्तुं शक्यते ॥

ननु 'भावप्रधानमाख्यातम्' इति वचनस्यैवमर्थवर्णनेऽपि, 'यत्रोभे भाव-प्रधाने भवतः' इत्युत्तरग्रन्थपर्यालोचनया भावस्यैव वाक्यजबोधविशेष्यत्वं प्रतीयते, न प्रथमान्तार्थस्येति चेत् ॥

न। "वाक्ये हि आख्यातं प्रधानं, तदर्थत्वात् गुणभूतं नाम। तदर्थस्य भावनिष्पत्तावङ्गत्वात्। एवं तावत् वाक्ये आख्यातं प्रधानम्।" इति निरुक्तभाष्यं आख्यातार्थनिष्पत्त्यर्थं कारकाणामपेक्षितत्वरूपं आख्यातार्थप्राधान्यं बोधयति। किञ्च तस्य प्राधान्यं विधेयत्वनिबन्धनमपि स्यात्। चैत्रः पचति इति वाक्यजबोधे पाकानुकूलकृतेराख्यातार्थस्य विधेयत्वात्। अतः नोत्तरग्रन्थपर्यालोचनया आख्या-तार्थविशेष्यकत्वं वाक्यजन्यबोधस्य सिद्ध्यति ॥

---

**टिप्पणी**— क्रियाकालयोगाभिधायित्वोक्तौ भोक्तुं इत्यादि नाम्नि अतिप्रसङ्गः।
"क्रियाकालयोगाभिधायित्वोक्तौ भोक्तुं इत्यादि नाम्नि अतिप्रसङ्गः। स्वनिष्ठा हि आख्यातात् क्रिया प्रतीयते। अत उक्तं क्रियाप्रधानमिति। भोक्तुमित्यादौ तु क्रियान्तरमन्तरेणापर्यवस्यन्ती क्रिया गम्यते। नान्यतन्त्रा। भोक्तुमित्यादौ तु न तथा। तदिदं क्रियाप्राधान्यमिति। तदनेन पचति पचेत व्रजतीत्यादौ तु न तथा। तदिदं क्रियाप्राधान्यमिति। तदनेन पचति पचेत पच्यते स्थीयते इत्यादि सर्वमाख्यातं संगृहीतं भवति।" इति न्यायवार्तिक-तात्पर्यटीका।

'क्रियाकालयोगाभिधायि क्रियाप्रधानमाख्यातम्' इति न्यायवार्तिके क्रियाप्रधानपदेन क्रियान्तरानाकाङ्क्षित्वरूप प्राधान्य विवक्षितम्। स्पष्टीकृतश्चायमर्थ तात्पर्यटीकायां वाचस्पतिमिश्रैः। तस्मात् न न्यायवार्तिककारस्य भावविशेष्यकबोधोऽभिमत ॥

अर्थान्तरसूत्रे न्यायभाष्यकारः 'क्रियाकारकसमुदाय, कारकसंख्याविशिष्टक्रियाकालयोगाभिधाय्याख्यात, धात्वर्थमात्रञ्च कालाभिधानविशिष्टम्।' इति ग्रन्थेन आख्यातलक्षणमाचष्टे। क्रियाकारकसमुदायबोधकत्वमित्येक, कारकसंख्याविशिष्टक्रियाकालयोगाभिधायित्वमित्यपर, कालविशिष्टधात्वर्थबोधकत्वमित्यन्यच्च लक्षणमाख्यातस्य। अभिधीयते इत्यभिधानमिति व्युत्पत्त्या कालरूपाभिधानविशिष्टधात्वर्थबोधकत्वमिति तृतीयलक्षणबोधक 'धात्वर्थमात्र च कालाभिधानविशिष्टम्' इति ग्रन्थ। विस्तरेण चेममर्थं निरूपयति तात्पर्यटीकाया वाचस्पतिमिश्राः। अत सिद्ध धात्वर्थमुख्यविशेष्यको बोध न प्राचीननैयायिकानामभिमत इति ॥

किञ्च, भावप्रधानमिति निरुक्त तद्वाक्यस्वरसात् सकलकारकसंख्याविशिष्टभावना धात्वर्थ इत्यभिप्रायेण प्रवृत्तमिति ज्ञायते। सुबन्त हि तत्र भाष्ये नामपदेन व्यवहृतम्। 'सत्ता द्रव्य लिङ्ग सख्येति नामार्थ' इति निरुक्तभाष्य कारकस्य नामार्थता न प्रतिपादयति। एवञ्च पञ्चक धात्वर्थ इति पक्ष स्वीकृत। न चाय पक्ष क्षोदक्षम। कारकादिविशिष्टक्रियाया धात्वर्थत्वे 'ल कर्मणि' (पा सू 3-4 69) इत्यादीना द्योतकताबोधकत्व 'कर्तरि कृत्' (पा सू 3-4-67) इत्यादीना कर्त्रादिवाचकताबोधकत्वमिति समानाकारसूत्राणा विभिन्नार्थकत्वस्वीकारापत्ति। एव 'एका क्रिया' इति भाष्यात् एकत्वसंख्याया क्रियायां सत्त्वेऽपि द्वित्वादिसंख्याया तत्र सत्त्वे मानाभावेन, चैत्रमैत्रौ पचत इत्यत्र कर्त्रादिगतद्वित्वसंख्याया क्रियायामारोपो वाच्य इति तद्वाक्यस्याप्रामाण्य स्यात्। एव कारकविशिष्टक्रियाया धात्वर्थत्वे प्रथमान्तार्थस्य कर्तरि अभेदेनान्वयो न स्यात्, कर्तु धात्वर्थैकदेशत्वेन पदार्थ पदार्थेनेति व्युत्पत्तिविरोधात्। एव, स्तोक पचति इत्यत्र स्तोकपदस्येव, धात्वर्थे अभेदान्वयार्थकचैत्रादिपदाना नपुसकतापत्तिश्च। तस्मात् वैयाकरणैरेवाय पक्ष न स्वीकर्तुं शक्यते, किमुत नैयायिकै।

**महाभाष्यकारास्तु** पञ्चकस्य धात्वर्थतामिव, कारकादीनां प्रत्ययवाच्यतामपि व्युत्पादयन्ति । आकरग्रन्थव्युत्पादितेषु यः पक्षो युज्यते, स एव ग्राह्यः । एवञ्च ये प्रत्ययानां कर्त्रादिवाचकत्वमभ्युपगच्छन्ति, तैः पक्षान्तराभिप्रायेण प्रवृत्तं निरुक्तं प्रत्ययार्थापेक्षया धात्वर्थस्य प्राधान्ये प्रमाणतयोद्भावयितुं न शक्येत ॥

अपिच **वैयाकरणभूषणसारकाराः** 'विशेष्यत्वात् भावना प्रत्ययस्यैवार्थः न धातोः' इति पक्षस्य निराकरणावसरे, "उत्सर्गोऽयम् । विशेष्यत्वादिना बोधस्तु तथा व्युत्पत्त्यनुरोधात् । अतएव नैयायिकानां प्रथमान्तविशेष्यक एव बोधः । अतएव 'प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्' (पा. सू. 1-2-56) इति **भगवान् पाणिनिः** । प्रधानं प्रत्ययस्यार्थः इति वचनं न कार्यम्, अर्थस्य-तथा बोधस्य, अन्यप्रमाणत्वात्-व्युत्पत्त्यनुसारित्वादिति तदर्थः । एवं सत्यपि नियामकापेक्षणे च 'भावप्रधानमाख्यातम्' इति वचनमेव गृह्यताम् ।" इति निरूपयन्ति । अनेन स्पष्टं ज्ञायते, तत्तद्विशेष्यकबोधे नियामकं वचनं नापेक्ष्यते इति । स्वानुभवसिद्धस्य बोधस्य संवादकत्वात्, एवं सत्यपि नियामकापेक्षणे, निरुक्तं गृह्यतामिति निरुक्तं प्रमाणीचक्रुः ग्रन्थकाराः । नहि वैयाकरणाः निरुक्त-महाभाष्ययोर्विरोधे महर्षिप्रोक्तमपि निरुक्तं प्रमाणीकुर्युः । तस्मात् निरुक्तानुसारेणैव बोधो वाच्यः इति न निर्बन्धः इति न कापि क्षतिः ॥

तत् सिद्धमुपपन्नः अनुभवसिद्धः प्रथमान्तार्थमुख्यविशेष्यको बोधः इति ॥

कालादिव्यतिरिक्ताख्यातार्थप्रकारकशाब्दबोधे अन्याविशेषणीभूतप्रथमान्तपदजन्योपस्थितिः कारणमिति आख्यातार्थसंख्याभावनासाधारण्येन एककार्यकारणभावकल्पनालाघवञ्च न प्रथमान्तार्थविशेष्यकबोधाङ्गीकारे मूलयुक्तिः । निरुक्तन्यायेन आख्यातत्वस्यानुगताननतिप्रसक्तस्य दुर्वचतया तादृशानुगतकार्यकारणभावासंभवात् । अपिच प्रथमान्तपदजन्योपस्थितिकार्यतावच्छेदकं, किं भावनान्वयबुद्धित्वं, उत संख्यान्वयबुद्धित्वमिति विचार्य, आख्यातार्थभावनानवगाहिनः आख्यातार्थसंख्याबोधस्यानुदयेन भावनान्वयबुद्धित्वमेव कार्यतावच्छेदकम्, प्रथमान्तपदानुपस्थाप्ये च न संख्यान्वयबोधो भवति, व्याप्यधर्मावच्छिन्नजनकसामग्र्या कार्ये जननीये व्यापकधर्मावच्छिन्नजनकसामग्र्या अपेक्षणात्, संख्या-

न्वयबोधत्वव्यापकभावनान्वयबुद्धित्वावच्छिन्नजनिकायाश्च प्रथमान्तपदजन्योपस्थिते-रभावादिति निर्धारयन्ति, नैयायिकप्रवन्धारः ॥

चैत्रः पचति इत्यादौ आख्यातैकवचनजन्यैकत्वोपस्थितिः न शाब्दबोधे हेतुः मानाभावात्, आख्यातं विनापि सुवेकवचनादेकत्वबोधसंभवादिति निष्कर्षानुसारिणामाशयः गदाधरभट्टाचार्यैः प्रपञ्चितो व्युत्पत्तिवादे। चैत्रो मैत्रश्च गच्छतः इत्यत्र चैत्रे मैत्रे च प्रत्येकमेकत्वं सुबेकवचनात् बोध्यते, आख्यात-द्विवचनात् द्वित्वमपीति उभयविधानुभवोऽपि शाब्द एव। नत्वन्यतरस्यापि अशाब्दत्वं कल्पनीयम् ॥

चैत्रो न पचति इत्यत्र भावनाया नञर्थे, संख्यायाश्च प्रथमान्तार्थे अन्वयेन कार्यकारणभावान्तरं स्वीक्रियते। न चैवं तत्तत्स्थलानुसारेण तत्र तत्रान्वयस्वीकारे कार्यकारणभावकल्पनागौरवमिति वाच्यम्। निरुक्तवाक्यात् पाकानुकूलकृत्यभाववान् चैत्रः इति अस्मत्संमतबोधस्वीकारे न कोऽपि प्रयोगस्याति-प्रसङ्गः, अप्रसङ्गो वा। परन्तु कार्यकारणभावान्तरं कल्पनीयम्। परैस्तु पच-त्यपि चैत्रे, न पचतीति प्रयोगातिप्रसङ्गवारणाय नञः चैत्रनिष्ठाभावे, आख्यातस्य वा कृत्यभावे लक्षणा स्वीक्रियते। एवञ्च तत्तत्पदजन्यलक्ष्यार्थोपस्थितेः शाब्दबोधहेतुत्वं कल्पनीयम्। लक्षणाकल्पनस्य तादृशकारणताकल्पने एव पर्यवसानात्। द्वितीय-कल्पे नञः व्यर्थत्वापरपर्यायतात्पर्यग्राहकतापि कल्पनीया। एवं नञा केवल-शक्यार्थबोधस्य कुत्राप्यजननात् नञो लक्षणाकथनमप्यसमञ्जसम्। नञ्समभि-व्याहारस्थलेषु नञः लक्षकान्य-पदान्तरगतलक्षणातात्पर्यग्राहकत्वयोरन्यतरस्यैव तैः प्रतिपादनात् इत्यादिकमनुसन्धेयम् ॥

- किञ्च सुबर्थलिङ्गसंख्याव्यतिरिक्तप्रातिपदिकार्थव्यतिरिक्तप्रकारकशाब्द-बोधं प्रति भावनानिष्ठविशेष्यतासंबन्धेन लिङ्गान्वयिपदजन्योपस्थितिः कारण-मिति अनुगतः कार्यकारणभावो न संभवति। जानातीत्यादौ आश्रयत्वं, नश्यती-त्यत्र प्रतियोगित्वं, पचति, पच्यते इत्यादौ कृतिः, न पचतीत्यादौ कृत्यभावश्च मुख्यविशेष्यतया भासते परेषां मते। न ह्याश्रयत्वादिसाधारणमनुगतानतिप्रसक्तं भावनात्वं निर्वक्तुं शक्यम्। नच संख्याकालव्यापारानतिरिक्ताख्यातार्थत्वं भाव-

नात्वम् । आख्यातार्थत्वं च शक्तिलक्षणान्यतरसंबन्धेन आख्यातप्रतिपाद्यत्व वाच्यम् । पूर्वोक्तन्यायेन आख्यातत्वस्यैवाननुगतत्वात् । नच भावनात्वमख धर्मः इति वाच्यम् । तत्साधिकायाः अभावादिसाधारण्याः भावना इत्यनु प्रतीतेः शपथैकनिर्णेयत्वात् । नच तान्त्रिकैः भावनापदव्यपदेश्यत्वमेव तत्त्व वाच्यम् । तान्त्रिकसंकेतसंबन्धेन भावनापदवत्त्वं पुरुषान्तरीयसंकेतसंब पदान्तरवत्त्वं चादाय विनिगमनाविरहात् ॥

भावनात्वमिव निरुक्तकार्यतावच्छेदककोटिप्रविष्टं सुप्त्वं प्रातिपदिकत्वं नानुगतमिति क्वानुगतकार्यकारणभावस्यावकाशः ॥

एवं प्रातिपदिकार्थव्यतिरिक्तः सुबर्थलिङ्गसंख्याव्यतिरिक्तश्च सर्वो भावनायामन्वेति इत्युक्तावपि, तत्तत्पदार्थस्य भावनायां भिन्नभिन्नसंबन्धेनैवान्वया लडर्थवर्तमानकालस्य पचतीत्यादौ आधेयतासंबन्धेन, नश्यतीत्यत्र स्ववृत्त्युत्पत्ति नाशनिरूपितत्वसंबन्धेन चान्वयात्, तत्तत्संसर्गकबोधे तादृशतादृशसम व्याहारज्ञानस्य हेतुत्वं कल्पनीयमिति अनन्ताः कार्यकारणभावाः प्रसज्यन्त ए शाब्दबोधे सर्वत्र संबन्धः विशेषरूपेणैव संसर्गमर्यादया भासते, न संबन्धत्व सामान्यरूपेण । स्पष्टश्चैतत् **गदाधरीयचतुर्दशलक्षण्यां प्रथमस्वलक्षणे** एवञ्च शाब्दबोधः विशिष्यैव संबन्धावगाहीति संसर्गभेदेन कार्यकारणभावभे अवर्जनीयः । घटवत् द्रव्यमित्यत्र तु मतुबर्थः संबन्धी । वैयाकरणैरपि तथैवा वर्णनात् । संबन्धस्य प्रकारतया संबन्धत्वेन भाने न कापि क्षतिः । पर्व वह्निमानिति वाक्यात् वह्निसंबन्ध्यभिन्नः पर्वतः इति शाब्दबोधे जाते, तत्र संबन्ध त्वेन संबन्धस्य प्रकारतया भानात् संबन्धविशेषस्याज्ञानात्, युक्त एव तदनन्त केन संबन्धेन वह्निमानिति जिज्ञासोदयः ॥

अपिच, सर्वत्र संबन्धसामान्यसंसर्गकशाब्दबोधानन्तरं प्रवृत्त्यादिनिर्वाह संसर्गविशेषावगाहिमानसबोधस्वीकारात् सर्वत्र प्रवृत्तिः विलम्बेनेति कल्पनम सकलविभक्त्यन्तपदघटितवाक्यस्थले सर्वेषां विभक्त्यर्थानां स्वनिरूपकधात्वर्थघटित परम्परासंबन्धेन भावनायामन्वयात् धातूपस्थापितस्यैवार्थस्य अनेकधा परम्पर संबन्धघटकतया भानकल्पनम्, सुबर्थसंख्यायाः सुबर्थे परम्परया अन्वयः इत्ये

रीत्या बोधस्य गुरुभूतपरम्परासम्बन्धविषयकत्वकल्पनम्, चैत्र सुन्दर इत्यादौ प्रतिपिपादयिषिताभेदस्य मानसबोधविषयत्वात् शाब्दानन्तरक्षणे विषयान्तरसञ्चारानुभवविरोधश्च, इत्येतेषां पर्यालोचनमेव तत्तदर्थे तत्तदर्थस्य साक्षात्सम्बन्धावगाहिनि सति समभवे प्रथमान्तार्थमुख्यविशेष्यक बोधमङ्गीकारयति ॥

अपिच, सम्बन्धत्वेन सम्बन्धमसंसर्गकशाब्दबोधानन्तर जायमाने संसर्गविशेषावगाहिमानसबोधे संसर्गविशेषभाननियमनिर्वाहाय, तादृशसमभिव्याहारज्ञानस्य, तादृशवाक्यजन्यशाब्दबोधस्य वा कारणत्वमवश्यकल्पनीयम्। अतश्च अनिच्छयापि कार्यकारणभावानन्त्यमापतति। नहि शाब्दबोधकारणतानन्त्यमेव दोष, नतु मानसबोधकारणतानन्त्यमित्यत्र नियामकमस्ति। नच कार्यकारणभावकल्पनालाघवेन भावनामुख्यविशेष्यके बोधे सिद्धे, तदनुरोधिमानसबोधकारणतानन्त्य न दोष फलमुखत्वादिति वाच्यम्। प्रयोगातिप्रसङ्गाप्रसङ्गाप्रयोजकस्य साक्षात्सम्बन्धेन तत्र तत्र तत्तपदार्थावगाहिन शाब्दबोधस्य अनुभवसिद्धत्वात् तद्बलायातकार्यकारणभावानन्त्यस्यापि फलमुखत्वेन दोषताविरहात्। अनुभवसिद्धबोधानुसारेण व्युत्पत्तय कल्प्यन्ते। नतु व्युत्पत्त्यनुसारेण बोध शिक्ष्यते ॥

नच बोधानुरोधेन व्युत्पत्तिनानात्वस्वीकारे राजपुरुष इत्यत्रापि विनैव लक्षणा, नामार्थयोरिति व्युत्पत्ति विहाय राजपदार्थस्यैव स्वस्वामिभावसम्बन्धेन पुरुषपदार्थे अन्वय कुतो न स्वीक्रियते इति वाच्यम्। यत राजप्रकारक स्वत्वसंसर्गक पुरुषविशेष्यक बोध राजपुरुष इति समस्तपदादनुभवन्तो नव्यनैयायिकाः समासस्थले नामार्थयोरपि भेदान्वयव्युत्पत्ति स्वीकुर्वन्ति। स्पष्टश्चायमर्थ शब्दशक्तिप्रकाशिकायाम् ॥

लिङ समभिव्याहृतपदोपस्थापितकामनाविषयतावच्छेदकबोपलक्षितधर्मावच्छिन्नसाधनत्वे शक्तिस्वीकारेण, यजेत स्वर्गकाम इत्यत्र लिङैव स्वर्गसाधनत्वबोधसम्भवात् न स्वर्गपदार्थस्य लिङर्थैकदेशे इष्टे अभेदान्वयव्युत्पत्ति स्वीकर्तव्या ॥

अभिहितश्च नागेशभट्टैः लघुमञ्जूषायां लिङर्थनिरूपणे—"तत्तद्व्युत्पत्त्यनुसारेण तथा तथा बोधस्य तेषां तेषां जायमानत्वेन तथा तथा कार्यकारणभावाना सर्वेषामावश्यकत्वेन तद्गौरवगौरवविचारस्यायुक्तत्वात्।" इति ॥

चैत्र एव पचतीत्यत्र चैत्रः पाकानुकूलकृतिमान्, चैत्रान्यः पाकानुकूल-कृत्यभाववानिति बोधः। इष्यते च मुख्यविशेष्यभेदात् वाक्यभेदः। चैत्रवृत्तिः चैत्रान्यावृत्तिश्चैककर्तृका भावना इति बोधस्वीकारे, चैत्रे मैत्रे च पचति सति, चैत्र एव पचति इति प्रयोगापत्तिः। भावनायाः (कृतेः) चैत्रनिष्ठायाः मैत्रनिष्ठा-याश्च भिन्नतया चैत्रनिष्ठायां पाकानुकूलकृतौ चैत्रान्यावृत्तित्वस्याबाधितत्वात्॥

चैत्रः कीदृशः इति प्रश्नस्य चैत्रः पचति इत्युत्तरं न संगच्छते। घटः कस्मात् इति पृष्टे, दण्डात् इत्युत्तरयन्ति। न तु दण्डजन्य इति। घटत्वा-वच्छिन्ने जिज्ञासितधर्मावच्छिन्नजन्यत्वप्रकारकं बोधं जनयति प्रश्नवाक्यम्। उत्तरवाक्यमपि घटत्वावच्छिन्ने जिज्ञासितदण्डत्वावच्छिन्ननिरूपितपञ्चम्यर्थजन्यत्व-प्रकारकबोधं जनयति। दण्डजन्यः इति तु नोत्तरम्। तेन घटत्वावच्छिन्ने दण्ड-जन्यत्वावच्छिन्नप्रकारकाभेदसंसर्गकबोधजननेऽपि आश्रयतासंसर्गकजन्यत्वप्रका-रकबोधाजननात्। एवञ्च प्रश्नवाक्यं जिज्ञासितधर्मावच्छिन्नीयतत्संबन्धसंसर्गक-बोधं जनयति, जिज्ञासितधर्मावच्छिन्नीयतत्संबन्धसंसर्गकबोधजनकमेवोत्तरवाक्य-मिति सिद्धम्॥

'जिज्ञासितपदार्थस्य संसर्गो येन गम्यते।
तदुत्तरमिति प्रोक्तमन्यदाभासशब्दितम्॥'

इत्यस्याप्ययमेवार्थः। चैत्रः कीदृश इति प्रश्नवाक्यं हि चैत्रविशेष्यकं जिज्ञासित-धर्मावच्छिन्नप्रकारकमभेदसंसर्गकं बोधं प्रसूते। उत्तरवाक्येनापि अभेदसंसर्गक-बोधजनकेनैव भाव्यम्। चैत्रः पचतीति वाक्यं तु आख्यातार्थकृतिप्रकारकं समवायसंसर्गकं बोधं जनयति, इति नोत्तरम्। चैत्रः पाचकः इति वाक्यात्तु अभेदसंसर्गकः कृत्यवच्छिन्नप्रकारकः शाब्दबोधो जायते इति भवति तदुत्तरं, कीदृशः चैत्रः इति प्रश्नस्य। नचेदेवम्, भावनाविशेष्यकबोधस्वीकारेऽपि, कीदृशी कृतिः इति प्रश्नस्य, चैत्रः पचतीत्युत्तरं स्यात्। नच स्त्रीलिङ्गविशिष्टकृतिबोधकस्य प्रश्नस्य तादृशलिङ्गविशिष्टकृतिबोधकमेवोत्तरम्। आख्यातार्थकृतेः लिङ्गानन्व-यित्वात् लिङ्गानास्कन्दितकृतिबोधकं पचतीति वाक्यं नोत्तरमिति वाच्यम्। कीदृशी कृतिः इत्यत्र बाधेन स्त्रीत्वस्य कृतौ बोधाभावात्। शाब्दिकरीत्या शब्दनिष्ठस्य

स्त्रीत्वस्य बोधस्वीकारेऽपि, प्रश्नवाक्ये लिङ्गस्याविवक्षितत्वे, लिङ्गाबोधकस्याप्युत्तरवाक्यत्वे क्षत्यभावात्, कीदृशी वृत्तिः इत्यस्य, पचति इत्युत्तरापत्तिर्दुर्वारैव। अनयैव सरण्या कीदृशौ चैत्रनद्यौ इति प्रश्ने, चैत्र एव पचति इत्युत्तरापत्तिरपि परिहरणीया ॥

एवञ्च सति संभवे प्रथमान्तपदप्रयोगे प्रथमान्तार्थमुख्यविशेष्यक एव बोधः संगच्छते ॥

ननु प्रथमान्तार्थस्य मुख्यविशेष्यत्वे, कथं 'पश्य, मृगो धावति' इत्येकं वाक्यम्, कथञ्च मृगस्य दर्शनकर्मत्वे मृगपदात् न द्वितीया इति चेत्।

धावति मृगः इत्यवान्तरवाक्यबोध्यस्य धावनविशिष्टमृगस्य कर्मतया दर्शने, तस्य चाख्यातार्थाश्रयत्वे, तस्य चाध्याहृतत्वंपदार्थे अन्वयः, इत्येकमुख्यविशेष्यकबोधजनकत्वात् पश्य मृगो धावतीत्येकं वाक्यम्। वाक्यार्थस्य कर्मतासंबन्धेन भेदसंबन्धेन दर्शनक्रियायामन्वयोऽपि न व्युत्पत्तिविरुद्धः। व्युत्पत्तेः नामार्थविषयत्वात्। न चैवं सति नीलरूपविशिष्टघटस्य ज्ञानकर्मत्वे प्रतिपिपादयिषिते सति, नीलो घटो जानाति इति प्रयोगः स्यात्, न स्याच्च नीलं घटं जानातीति प्रयोगः। नीलविशिष्टघटस्य वाक्यार्थत्वेन तद्बोधकात् द्वितीयाया अप्रसक्तेरिति वाच्यम्। नीलविशिष्टघटस्य ज्ञानकर्मत्वतात्पर्येण नीलो घटो जानाति इति प्रयोगः इष्यते एव। नीलं घटं जानातीति वाक्यात् विशेष्ये विशेषणं, तत्र च विशेषणान्तरमिति रीत्यैव शाब्दबोधः। यदा तु अस्माद्वाक्यात् नीलविशिष्टघटकर्मकज्ञानशाब्दबोधः, तदा घटपदस्य नीलविशिष्टघटे लक्षणा। नीलपदं तात्पर्यग्राहकम्। विशिष्टबोधकस्य पदत्वात् तदुत्तरं द्वितीया चोपपद्यते। वाक्यार्थस्य कर्मतया अन्वयाच्च, 'जानामि, सीता जनकप्रसूता।' 'श्रुत्वा ममैनन्माहात्म्यं तथा चोत्पत्तयः शुभाः।', 'देवाकर्णय, सङ्ग्रामे चापेनासादिताः शराः।' इत्यादयः प्रयोगाः साधु संगच्छन्ते। कर्मबोधकवाक्यस्य अप्रातिपदिकत्वेन तदुत्तरं द्वितीयाया अप्रसक्तेः। एवञ्च पश्य मृगो धावतीत्यत्र वाक्यैकवाक्यता सिद्धा॥

यदि च पदैकवाक्यतैवात्र महाभाष्यसिद्धेति ब्रूयात्, तदा धावत्यर्थान्वितस्य मृगस्य प्रथमान्तार्थस्य विषयतापर्यवसितेन कर्मत्वसंबन्धेन दर्शनक्रियायां, तस्याश्चाध्याहृतत्वंपदार्थे अन्वयः इति पदैकवाक्यता सूपपादैव।

नच तण्डुलस्य कर्मतासंबन्धेन धात्वर्थपाके अन्वयतात्पर्येण, तण्डुलः पचतीति प्रयोगवारणाय, नामार्थधात्वर्थयोः साक्षात् भेदेनानन्वयव्युत्पत्तेः स्वीकरणीयतया, मृगस्य नामार्थस्य विषयतासंबन्धेन दर्शनेऽन्वयो न संभवतीति वाच्यम्। आख्यातार्थाविशेषितनामार्थधात्वर्थयोरेव भेदेन साक्षादनन्वयः इति व्युत्पत्तिस्वीकारात्, आख्यातार्थाविशेषितस्य तण्डुलस्य कर्मतासंबन्धेन पाके अन्वयो न संभवतीति, न तण्डुलः पचति इति वाक्यं प्रामाणिकम्। धावतीत्याख्यातार्थ-धावनकर्तृत्वान्वितस्य मृगस्य नामार्थस्यापि कर्मतया दर्शनक्रियायामन्वयो युज्यते एव। स्पष्टञ्चैतत् **गदाधरीयप्रतिज्ञालक्षणविवरणे कृष्णभट्टीये**॥

'पश्य लक्ष्मण पम्पायां बकः परमधार्मिकः।' इत्यत्रापि अस्तीति क्रिया-पदस्याध्याहारात्, तादृशक्रियाकर्तृत्वान्वितस्यैव बकस्य नामार्थस्य दर्शन-क्रियायामन्वयात् न कोऽपि व्युत्पत्तिविरोधः। दृश्यते च व्युत्पत्तिवैचित्र्येण प्रथमान्तार्थस्यापि कर्मतासंबन्धेन कर्मत्वान्तरविशेषणतापन्नक्रियायामन्वयः, काष्ठं भस्म क्रियते इत्यादौ, कर्तृत्वान्तरविशेषणतापन्नायां च क्रियायां कर्तृत्वसंबन्धेनान्वयः नीलो घटो भवति, काष्ठं भस्म भवति इत्यादौ॥

अथवा पाकविशेष्यककर्मतासंसर्गकतण्डुलप्रकारकशाब्दबोधस्यैवाप्रसिद्धया तत्सामग्र्या अकल्पनात्, आपादकाभावेन, तण्डुलः पचतीति वाक्यात् तादृश-बोधापादनासंभवात् नामार्थधात्वर्थयोरिति व्युत्पत्तिरेव न कल्पनीयेति, मृगस्य कर्मतासंबन्धेन दर्शने अन्वये न कोऽपि व्युत्पत्तिविरोधः। इत्थञ्च 'पश्य लक्ष्मण पम्पायां बकः परमधार्मिकः।' इत्यत्र अस्तिपदाध्याहारोऽपि नावश्यकः॥

---

**टिप्पणी—**

काष्ठं भस्म क्रियते इत्यत्र भस्मनः धात्वर्थकृतौ स्वोत्पादकतासंबन्धे-नान्वयः। कृतेश्चाख्यातार्थकर्मत्वे नाशप्रतियोगित्वपर्यवसिते, तस्य च काष्ठे अन्वयः। उत्पत्तिरूपफलाश्रयत्वात् भस्मनः विकृतिकर्मता, प्रतियोगितया नाशरूपफलाश्रयत्वाच्च काष्ठस्य प्रकृतिकर्मता। भस्मोत्पादककृतिजन्य-नाशप्रतियोगि काष्ठमिति तद्वाक्याधीनो बोधः। नीलकर्तृकं यदसाधारण-धर्मात्मकं भवनं तदाश्रयः घटः इति नीलो घटो भवतीति वाक्याधीनबोधः॥

मृगवृत्तिकर्मतायाः संसर्गतया भानात् न मृगपदात् द्वितीयापत्तिः। 'अनभिहिते, कर्मणि द्वितीया' इत्यनेन प्रातिपदिकार्थविशेष्यतया कर्मत्वे विवक्षित एव द्वितीयानुशासनात्। अनभिहितसूत्रस्य चात्रैवार्थे तात्पर्यमिति निपुणतरमुपपादितं गदाधरभट्टाचार्यैः व्युत्पत्तिवादे प्रथमार्थविचारे लकारार्थविचारे च। एषैव सरणिरादृता भट्टाचार्यैः काष्ठं भस्म क्रियते इत्यत्र भस्मपदोत्तरं द्वितीयावारणे।

इत्थञ्च पश्य मृगो धावतीत्यत्र पदैकवाक्यतोपपादिता॥

यदि च महाभाष्यसिद्धायाः पदैकवाक्यताया उपपादितत्वेऽपि, तत्सिद्धं धावनक्रियायाः दर्शनक्रियाकर्मत्वं नोपपादितमिति मन्यते॥

तदा प्रथमान्तार्थविशेषिताख्यातार्थधावनवृत्तेः कर्मतया दर्शनक्रियायामन्वयस्वीकारेण पदैकवाक्यत्वं धावनस्य दर्शनकर्मत्वञ्चेत्युभयमपि सिद्धं भवति॥

तथाहि—प्रथमान्तकर्तृवाचकपदसमभिव्याहारे प्रायः प्रथमान्तार्थमुख्यविशेष्यक एव बोधः। क्वचित् पश्य मृगो धावति इत्यादौ प्रथमान्तार्थस्यापि आख्यातार्थे विशेषणतयान्वयः व्युत्पत्तिवैचित्र्यात्। एवञ्च मृगस्य आधेयतासंबन्धेन, धावनान्वितवृत्तौ आख्यातार्थे, मृगान्वितधावनविशिष्टवृत्तेः कर्मतासंबन्धेन दर्शनक्रियायां, तदन्वितारव्यातार्थाश्रयत्वस्य चाध्याहृतत्वंपदार्थेऽन्वयः। तथा च मृगनिष्ठधावनवृत्तिकर्मकदर्शनाश्रयः त्वम् इति शाब्दबोधः। एतत्स्थलानुरोधेन व्युत्पत्त्यन्तरकल्पनं तु सर्वाभिमतमेव। धात्वर्थस्यापि धात्वन्तरार्थे अन्वयार्थं वैयाकरणैः, धावनभावनायाः दर्शनभावनायामन्वयार्थं मीमांसकैश्च व्युत्पत्त्यन्तरस्य स्वीकारात्। नच प्रथमान्तार्थस्य अविशेष्यत्वे अपसिद्धान्तः। व्युत्पत्तिवैचित्र्येण प्रथमान्तार्थस्यापि अन्यत्रान्वयस्य बहुषु स्थलेषु प्रदर्शितत्वात्। नहि नैयायिकाः वाक्ये प्रथमान्तार्थः सर्वोऽपि मुख्यविशेष्यतया भासते इति, प्रथमान्तपदासमभिव्याहारेऽपि, अध्याहृत्य प्रथमान्तपदं तदर्थमुख्यविशेष्यको बोधः, इति वा अभ्युपगच्छन्ति। नीलो घटः इत्यत्र प्रथमान्तार्थस्य नीलस्य, भूतले घटो नेत्यत्र घटस्य, अर्घ्यं नमः इत्यत्र अर्घ्यस्य च मुख्यविशेष्यतया भानानङ्गीकारात्। स्पष्टश्चायमर्थः—

"अतएव यत्र समानविभक्तिकं विशेष्यवाचकपदं निपातपदं वा नास्ति, तत्र प्रथमान्तार्थस्य विशेष्यभासकसामग्र्यभावादसौ मुख्यविशेष्यतया भासते ॥" इति व्युत्पत्तिवादे ॥

एवंच अत्र मुख्यविशेष्यः त्वंपदार्थ एक एवेति एतदेकं वाक्यम् । आख्यातार्थस्य दर्शनेऽन्वयांच्च पदैकवाक्यता । आख्यातार्थस्यैव धात्वर्थेऽन्वयोपगमेन न नामार्थधात्वर्थयोरिति व्युत्पत्तिविरोधः । कर्मबोधकाख्यातोत्तरं द्वितीया शङ्कितुमपि न शक्यते । कृतेरतीन्द्रियत्वात् धावनविशिष्टकृतेः दर्शनकर्मत्वमवगाहमानो बोधः, 'सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्यबाधे' इति न्यायेन विशेषणीभूतधावनस्यैव दर्शनकर्मत्वे पर्यवस्यति । इत्थञ्च धावनस्य दर्शनकर्मत्वं महाभाष्योक्तमुपपद्यते ॥

आवश्यकी चेयं रीतिः वैयाकरणानामपि । आनय मृगो धावति इत्यत्र मृगकर्तृकधावने आनयनकर्मत्वस्य बाधात्, बाधात् मृगविशिष्टधावनस्य बोधितं आनयनकर्मत्वं, सविशेषणे हीति न्यायेन मृगे पर्यवस्यतीति तैर्वक्तव्यत्वात् । एवञ्च नास्माकं मते, पश्य मृगो धावति इत्यत्र का चित् क्षतिः । शृणु मेघो गर्जति इत्यत्राप्येवमेवोपपादनीयम् ॥

पचति भवति इत्यत्र भवनाश्रयत्वस्य पच्यर्थान्विताख्यातार्थकृतावन्वयः । पाकानुकूलकृतिः भवनाश्रयः इति बोधः । पाकविशिष्टकृतेर्भवनाश्रयत्वबोधे विशेषणीभूतपाकस्यापि भवनाश्रयत्वं भवनकर्तृत्वरूपं बुद्धं भवतीति 'पचादयः क्रियाः भवतिक्रियायाः कर्त्र्यो भवन्ति' इति महाभाष्यमपि संगच्छते । चैत्रः पचति भवति इत्यत्र तु भवत्यर्थान्वितायाः पाकान्विताख्यातार्थकृतेः प्रथमान्तार्थे अन्वयः । भवनाश्रयपाकानुकूलकृतिमान् चैत्रः इति प्रथमान्तार्थमुख्यविशेष्यको बोधः । एकवाक्यता चानायासेन निर्वहति ॥

नच राजपुरुषो भार्यायाश्च, घटो द्रव्यत्वस्य इत्यादिप्रयोगवारणाय, एकसंबन्धेन एकविशेषणविशिष्टे तज्जातीयसंबन्धेन विशेषणान्तरानन्वयव्युत्पत्तेः स्वीकरणीयतया, चैत्रः पचतीति वाक्यात्, समवायेन चैत्रत्वविशिष्टे समवायेन पाकानुकूलकृतिवैशिष्ट्यावगाहिबोधो न संभवतीत्युक्तमिति वाच्यम् । विभक्त्यर्थ-

प्रकारकशाब्दबोधवादिभिः निरुक्तव्युत्पत्तिस्वीकारेण उक्तप्रयोगो वारयितुं न शक्यते। घटो द्रव्यत्वस्य इति वाक्यात् द्रव्यत्वप्रतियोगिकषष्ठ्यर्थसमवायसंबन्धप्रकारकबोधो भवन् भवेत्। स च नोक्तव्युत्पत्तिविरुद्धः, तस्य समवायेन घटत्वविशिष्टे विशेष्ये विशेषणान्तरद्रव्यत्वप्रतियोगिकतत्संबन्धसजातीयसमवायप्रकारकत्वेन, समवायेन द्रव्यत्वाप्रकारकत्वात्। एवं राजपुरुषो भार्यायाश्च इत्यत्रापि भार्यानिरूपितषष्ठ्यर्थसंबन्धप्रकारकबोध एव भवन् भवेत्। अतः निरुक्तप्रयोगवारणाय, एकसंबन्धेन एकविशेषणविशिष्टे विशेषणान्तरनिरूपिततत्सजातीयसंबन्धप्रकारकबोधो नेति व्युत्पत्तिरङ्गीकरणीया। चैत्रः पचति इति वाक्यजन्यबोधे समवायेन चैत्रत्वविशिष्टे पाकानुकूलकृतेः समवायेन प्रकारत्वेऽपि, कृतिरूपविशेषणान्तरनिरूपिततत्सजातीयसमवायप्रकारकत्वाभावात् नोक्तव्युत्पत्तिविरोधः। तथा च प्रथमान्तार्थविशेष्यकः आख्यातार्थकृतिप्रकारको बोधः नाव्युत्पन्नः इति सिद्धम्॥

पचति व्रजति इति प्रयोगश्च, येषां मते धात्वर्थविशेष्यः आख्यातार्थः कर्ता, तान्प्रत्येवापादयितुं शक्यते, पाककर्ता व्रजनाश्रयः इति बोधसंभवात्। अस्मन्मते च कृतेरेवाख्यातार्थत्वात्, पाकानुकूलकृतेश्च व्रजनाश्रयत्वबाधात् न तादृशप्रयोगापत्तिः। आख्यातस्य कर्तरि निरूढलक्षणां स्वीकुर्वतां मीमांसकानां मतेऽपि नापत्तिः, तैः कर्तुः भावनाविशेषणतया भानोपगमात्।

तस्मात् असति बाधके प्रायः प्रथमान्तार्थमुख्यविशेष्यक एव बोधः समुचितः॥

चैत्रः तण्डुलं पचतीत्यत्र द्वितीयार्थः आधेयत्वम्। तथाहि—'कर्मणि द्वितीया' (पा. सू. 2-3-2) इत्यनुशासनात् कर्मत्वं द्वितीयया बोध्यते। तच्च क्रियाजन्यफलशालित्वम्, न त्वखण्डम्। सखण्डस्य निर्वचनसंभवे एव अगतिकतया अखण्डपदार्थाङ्गीकारात्। क्रियाजन्यफलशालित्वात् कर्मत्वम् इति वाक्ये कर्मत्वपदं कर्मसंज्ञायां, कर्मपदप्रवृत्तिनिमित्ते वा लाक्षणिकम्। नच लक्षणायां गौरवमिति शङ्कनीयम्। आश्रयनिरूपकभेदेन भिन्नानां अनेकेषामखण्डपदार्थानां कल्पनागौरवात् तस्यागुरुत्वात्। नच कर्मसंज्ञामजानताऽपि क्रियाजन्यफलाश्रय-

स्वात् कर्मत्वमिति व्यवहारात् कर्मत्वपदं न संज्ञापरमिति वाच्यम्। अखण्ड-
कर्मत्वशक्तिमजानतापि तादृशव्यवहारात् अखण्डशक्तिपरत्वमपि तस्य नेति वक्तुं
शक्यत्वात्। तद्वति तत्प्रकारकत्वात् याथार्थ्यम्, शब्दाश्रयत्वादाकाशत्वम्
इत्यादिव्यवहारात् याथार्थ्याकाशत्वादीनामप्यखण्डतापत्तेश्च। तस्मात् सखण्डमेव
क्रियाजन्यफलशालित्वं कर्मत्वम्। तदेव द्वितीयया बोध्यते॥

क्रियाकारकभावश्च न द्वितीयार्थः वाक्यजन्यबोधे तस्याभानात्। तस्य
विभक्त्यर्थत्वे प्रमाणाभावाच्च। नच "कष्टं श्रितो भवतीत्यत्र क्रियाकारकयोरभि-
संबन्धस्य द्वितीया वाचिका भवति।" इति भाष्यं प्रमाणमिति वाच्यम्। तत्र
क्रियाकारकयोरभिसंबन्धपदेन कर्मत्वस्यैवोक्तत्वात्। निरूपकत्वाश्रयत्वाभ्यां क्रिया-
कारकोभयनिष्ठत्वेन तस्य संबन्धत्वाक्षतेः। अतएव अखण्डकर्मत्वस्य द्वितीयार्थत्व-
वादिनः मीमांसकाः स्वोक्तेऽर्थे, 'क्रियाकारकयोरभिसंबन्धस्य द्वितीया वाचिका।'
इति महाभाष्यं प्रमाणयन्ति **भाट्टरहस्ये**॥

विशेषणत्वे ज्ञाते एव तन्नियामकसंबन्धाकांक्षणात् विशेषणत्वमपि द्विती-
यार्थः इति न युज्यते। क्रियाकारकभावसंबन्धस्यैव द्वितीयार्थत्वविरहात्। व्यव-
सायातिरिक्तमनुव्यवसायमङ्गीकुर्वतामस्माकं मते शाब्दबोधे विशेषणत्वादीनां भाना-
भावात् अनुव्यवसाय एव तद्भानाच्च॥

तथा च कर्मत्वमेव द्वितीयार्थः। शक्तिः कारकमिति पक्षस्य वैयाकरणैरपि
स्वीकारात्, लाघवेन कर्मत्व एव शक्तेरुचितत्वाच्च। तत्र क्रिया फलञ्च धातुत
एव लभ्यते। फलं व्यापारश्च धात्वर्थः इति सिद्धान्तात्। फलस्य व्यापारजन्यता
च विनैव पदार्थतां संसर्गमर्यादया भासते। एवञ्च अनन्यलभ्यमाश्रयत्वं द्वितीयार्थः
इति वक्तव्यम्। प्रकृत्यर्थतण्डुलान्वितस्याश्रयत्वस्य निरूपकतासंबन्धेन धात्वर्थफले
अन्वयः स्वीकरणीयः। तथा च सति, 'तेमनं पचति न तण्डुलम्' इत्यत्र द्विती-
यार्थाश्रयत्वस्य निरूपकतासंबन्धावच्छिन्नाभावः फले नञा बोधनीयः स्यात्। तच्च
न संभवति वृत्त्यनियामकस्य निरूपकत्वस्य प्रतियोगितानवच्छेदकत्वेन तत्संबन्धा-
वच्छिन्नतदभावाप्रसिद्धेः। अतः आधेयत्वमेवार्थः।

पाककर्तृत्वावच्छिन्नविशेष्यकजिज्ञासोदयाच्च आख्यातात् कर्तुर्बोधः आवश्यक इति वाच्यम्। प्रथमान्तपदासमभिव्याहृते पचति इत्यादौ आख्यातार्थसंख्यायाः स्वाश्रय-समवेतत्वसंबन्धेन कृतावन्वयात्, संसर्गविधया कृत्याश्रये (कर्तरि) एकत्वभानात् न तज्जन्यबोधानन्तरं पाककर्ता एको न वेति संशय उदेति। कृतेर्बोधे कृत्याश्र-यस्य कर्तुरुपस्थितिसंभवात् पाककर्तृत्वावच्छिन्नधर्मिकजिज्ञासाप्युपपद्यते ॥

नच शाब्दबोधानन्तरं ज्ञानान्तरकल्पनया जिज्ञासोदयविलम्ब इति वाच्यम्। आख्यातबोध्ये कर्तरि तदर्थसंख्यायाः धात्वर्थस्य च विशेषणतयान्वय-स्वीकारे, एकः पाककर्ता इति बोधसंभवात् विनापि क्षणविलम्बं निरुक्तजिज्ञा-सोदयः, एको न वेति संशयानुदयश्चोपपादयितुं शक्यते। न चैवं स्वीकुर्वन्ति आख्यातात् कर्तुर्बोधवादिनः **वैयाकरणाः मीमांसका** वा। **वैयाकरणैः** आख्यातार्थैकत्वान्वितस्य तदर्थस्य कर्तुः धात्वर्थे विशेषणतया अन्वयात् एक-कर्तृकः पाकः इति बोध इष्यते। अनन्तरं पाककर्तृत्वावच्छिन्नविशेष्यकमेकत्व-प्रकारकं मानसज्ञानमुत्पद्यते इति क्षणविलम्बेनैव निरुक्तसंशयानुत्पादजिज्ञासोदया-वुपपादनीयौ ॥

मीमांसकमतेऽपि धात्वर्थो न कर्तर्यन्वेति। अपितु भावनायामेव। धात्वर्थसाधारणकारकप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति भावनाविशेष्यता-संबन्धेन लिङ्गानन्वयिपदजन्योपस्थितेः हेतुतास्वीकारात्। आख्यातार्थसंख्यापि कर्तृघटितपरम्परासंबन्धेन भावनायामन्वेति, न कर्तरि। 'भावप्रधानमाख्यातम्' इति स्मृत्या भावनातिरिक्ताख्यातार्थं प्रति भावनाया एव प्राधान्यबोधनात्। एवं कर्तापि भावनायामन्वेति। एवञ्च पचतीति वाक्यजन्यबोधे पाककर्तृत्वेन पाक-कर्तुः तद्गतत्वेन एकत्वस्यानवगाहनात्, पाककर्ता एकः इति मानसं बोधान्तरं संपाद्यैव निरुक्तसंशयानुदयजिज्ञासोदयावुपपादनीयाविति क्षणविलम्बः मीमांसका-नामपि आवश्यक एव।

तस्मात् आख्यातात् कर्तुः निरूढलक्षणया बोधो न समञ्जसः। यदि लाघवेन कृतेः शक्यत्वेऽपि 'लः कर्मणि' (पा. सू. 3-4-69) इत्यनुशासनबलात्

कर्तापि निरूढलक्ष्य इत्युच्यते। तदा अनुशासनाक्षरार्थानतिलङ्घनेन कर्तुरेवा ख्यातवाच्यतास्वीकारो युक्तः स्यात्। तस्मात् न कर्ता आख्यातस्य लक्ष्यः नापि वाच्य, अनन्तकृतिव्यक्तीना शक्यतावच्छेदकत्वे गौरवात्। इत्यः कृतिरेवाख्यातार्थ. ॥

तत्र धात्वर्थः विषयत्वसहितानुकूलत्वसम्बन्धेनान्वेति।

पचतीति वाक्य पाक करोति इति वाक्येन विव्रियते। तेन च पाक कर्मकृतिबोधो भवति। कृतेः पाककर्मकत्वं च पाकविषयकत्वम्। तच्च विषयः पचतीत्यत्र पाकस्य कृतौ संसर्गतया भासते इति पाक करोति इति वाक्ये विव्रियमाणत्व पचतीत्यस्योपपद्यते। विषयतामात्रस्य ससर्गत्वे पाकानिष्पत्तिस्थ पचतीति प्रयोगापत्तिः। अतः उपधायकत्वरूपानुकूलत्वस्यापि संसर्गतास्वीकारः

युक्तश्चैतत्। आख्यानेन हि पाककर्तृत्व प्रतीयते। तत्तत्क्रियाकर्तृत्वः नाखण्डपदार्थ इति पूर्वमेव निवेदितम्।

नच तथानङ्गीकारे दम्पत्योः व्यासज्यवृत्तिकर्तृत्वं न स्यात्। उभयादि पर्याप्तस्यैकस्य व्यासज्यवृत्तित्वात्, कृतिमत्तायाश्च पत्नीनिष्ठायाः पतिनिष्ठायाश्च भिन्नभिन्नत्वादिति वाच्यम्। प्रकृतयागक्रियाविषयकृत्याधारतात्वेन अनुगतरूपेण कृतिमत्तारूपकर्तृत्वस्य व्यासज्यवृत्तित्वमभवात्। न चायमपसिद्धान्तः। संबन्धादि भेदेन भिन्नाया अपि महानसीयत्ववह्नित्वादिनिष्ठावच्छेदकतायाः महानसीयवह्न्य भावप्रतियोगितावच्छेदकतात्वेनानुगतरूपेण व्यासज्यवृत्तितायाः, वह्नित्वे प्रतियोगि तानवच्छेदकत्वसंगमनाय गदाधरभट्टाचार्यैः सिद्धान्तलक्षणे प्रतिपादनात्॥

अतश्च तत्क्रियाकर्तृत्व तत्क्रियानुकूला तत्क्रियाविषयिणी च या कृति तद्वत्त्वम्। एकक्रियाविषयककृतिन यत्र नान्तरीयकक्रियान्तरनिष्पत्ति. तत्र कृति मति पुरुषे तत्क्रियाकर्तृत्व नास्ति। अत एव मत्तो भूतं, न तु मया कृतमिति व्यपदेशः सगच्छते। अत क्रियाविषयकत्वमपि कर्तृत्वशरीरे प्रवेशनीयम्॥

नच ओदन पचति इत्यस्य पाकेनौदन करोतीति विवरणात् धात्वर्थपाकस्य करणतासम्बन्धेनैव कृतावन्वयो युक्त इति वाच्यम्। पाक प्रति कृतेः कारणतया

न पाककरणकत्वं कृतेः संभवति। अपितु पाककरणकौदनोद्देश्यकत्वमेव। अतः विवरणवाक्ये पाकेनेति तृतीया न करणे। अपि तु हेतौ। हेतुत्वञ्च प्रयोजकत्वम्। तच्च फलसाधारणम्। 'फलमपीह हेतुः, अध्यनेन वसति' इति प्रामाणिकैरभिधानात्। पाकस्य ओदनविषयककृतिफलत्वमक्षतम्। तद्वाक्याच्च पाकप्रयोज्योदनविषयककृतिमानिति बोधो जायते। ओदनकृतेः पाकप्रयोज्यत्वं पाकफलकत्वं पाकानुकूलत्वपर्यवसितम्। एवञ्च धात्वर्थस्य कृतौ अनुकूलतासंबन्धेनान्वय एव पाकेनेत्यादिविवरणमनुकूलं भवति। तत् सिद्धं धात्वर्थः पाकः विषयत्वानुकूलत्वोभयसंबन्धेन कृतावन्वेतीति। अत एव "यत्नमात्रं शक्यं, विषयत्वं जनकत्वं वा संसर्गमर्यादया भासते।" इत्याख्यातवाददीधितौ "वाकारः समुच्चयार्थः।" इति **मथुरानाथभट्टाचार्याः** निरूपयन्ति ॥

आख्यातार्थवर्तमानकालश्च व्युत्पत्तिवैचित्र्यात् तदर्थकृतावन्वेति। कृतिः प्रथमान्तार्थेऽन्वेति। आख्यातैकवचनार्थः एकत्वसंख्या प्रथमान्तार्थे नान्वेतीति -निष्कर्षानुसारिणः। इत्थञ्च तण्डुलनिरूपिताधेयताश्रयरूपपरावृत्तिजनकतेजस्संयोगानुकूलकृतिमानेकत्वविशिष्टः चैत्रः इति चैत्रः तण्डुलं पचति इति वाक्याधीनो बोधः ॥

चैत्रेण तण्डुलः पच्यते इत्यत्र तृतीयार्थः कृतिः। तस्याः जन्यत्वविषयत्वोभयसंबन्धेन धात्वर्थव्यापारे, तस्य कर्माख्यातस्थलनियन्त्रितव्युत्पत्तिवैचित्र्यात् धातोरर्थे फले जन्यतासंबन्धेन चान्वयः। कर्माख्यातार्थश्च आश्रयत्वं, तदतिरिक्तस्य कर्मत्वघटकस्यान्यलभ्यत्वात्। आश्रयत्वं च स्वरूपसंबन्धेन प्रथमान्तार्थे अन्वेति। स च वृत्तिनियामक एवेति नञ्समभिव्याहारे तत्संबन्धावच्छिन्नतदभावबोधनं प्रथमान्तार्थे संगच्छते। एवञ्च चैत्रनिष्ठकृतिजन्यव्यापारजन्यरूपपरावृत्त्याश्रयः तण्डुलः इति तद्वाक्यार्थबोधः ॥

चैत्रेण सुप्यते इत्यत्र आख्यातस्य भावे विहितत्वात् भावस्य च धातोरेव लाभात् साधुतासंपादकत्वमेव। आख्यातार्थसंख्या न शाब्दबोधे भासते, तदन्वयिनोऽभावात्। तथाच चैत्रकर्तृकः स्वापः इति धात्वर्थमुख्यविशेष्यको बोधः ॥

चैत्रो न पचति इत्यत्र पचतिप्रतिपाद्यपाकविशिष्टकृतेः नञर्थाभावे प्रतियोगितया, तस्य चाश्रयतया प्रथमान्तार्थे अन्वयात् पाकानुकूलवर्तमानकृत्यभाववान् चैत्रः इति बोधः ॥

चैत्र एव पचति इत्यत्र एवकारस्य अन्यः अभावश्चार्थः। प्रथमान्तपदोपस्थाप्यस्यापि प्रतियोगितया एवकारार्थैकदेशे भेदे अन्वयः। आख्यातार्थकृत्यन्वितस्यैवकारार्थाभावस्य एवकारार्थे अन्यस्मिन् अन्वयो व्युत्पत्तिवैचित्र्यात्। एवञ्च चैत्रः पाकानुकूलकृतिमान् चैत्रान्यः पाकानुकूलकृत्यभाववानिति बोधः ॥

ननु प्रयोगातिप्रसङ्गवारणे दत्तदृष्टीनां नैयायिकानां शाब्दबोधवर्णनपद्धतिः वस्त्वनुरोधिन्यपि नानुशासनानुरोधिनी। तथाहि—तण्डुलानोदनं पचति इत्यत्र तण्डुलपदोत्तरद्वितीयायाः धात्वर्थपाकान्वयिनाशकत्वार्थकताम्, ओदनपदोत्तरद्वितीयायाः धात्वर्थान्वय्युत्पादकत्वार्थकताञ्च व्युत्पादयन्ति **भट्टाचार्याः व्युत्पत्तिवादे**। असत्कार्यवादिना तेषां मते पाकेन तण्डुलस्य नाशः ओदनस्योत्पत्तिश्च भवतीति वस्तुतत्त्वानुरोधीदं व्युत्पादनम्, नानुशासनानुरोधि। न हि नाशकत्वे उत्पादकत्वे वा द्वितीया केनाप्यनुशासनेन विहिता दृश्यते। एवं 'कर्मणि द्वितीया' (पा. सू. 2-3-2) इति सूत्रे सप्तम्याः वाचकत्वार्थकता, दाने कर्णसमः इत्यत्र दानपदोत्तरसप्तम्याः साधारणधर्मात्मकसमशब्दार्थसाम्याग्वय्यभेदार्थकताञ्च निरूपयन्ति। नहि वाचकत्वे, अभेदे वा सप्तमी अनुशिष्टा लभ्यते। प्रत्युत 'अभेदे सप्तम्यनुशासनाभावात्' इति प्रामाणिकग्रन्थः लभ्यते तत्र तत्र ॥

एवं नूतनानुशासनोल्लेखनमपि दृश्यते **भट्टाचार्याणां** निबन्धे। "क्रियाविशेषणस्थले न द्वितीयातिरिक्तविभक्तिरुत्पद्यते, 'क्रियाविशेषणानां कर्मत्वम्' इत्यनुशासनेन तत्र कर्मत्वातिदेशात्।" इति **व्युत्पत्तिवादः** ॥

नहि पाणिनिव्याकरणे सूत्रेषु वार्तिकेषु वा 'क्रियाविशेषणाना कर्मत्वम्' इत्यनुशासन समुपलभ्यते। परन्तु क्रियायामभेदेन विशेषणाना कर्मत्वं निर्वहन्ति **वैयाकरणाः**। स्तोकं पचति, शोभनं पचति इत्यादौ धात्वर्थान्तर्गतविक्लित्तिरूपफलमेव कर्म। व्यपदेशिवद्भावेन तादात्म्यसंबन्धपर्यवसितेन क्रियाजन्यविक्लित्तिरूपफलाश्रयत्वात्। कर्मणि धात्वर्थफले स्तोकादेरभेदान्वयविवक्षणे

कर्मसमानाधिकरणात् स्तोकादिपदात् 'कर्मणि द्वितीया' (पा. सू. 2-3-2) इति
सूत्रेण द्वितीया भवति । 'सामान्ये नपुंसकम्' (का. वा.) इति नपुंसकलिङ्गता च
तत्पदस्य सिद्ध्यति इति । एवं वैयाकरणैः न्यायेन साधितं क्रियाविशेषणानां
कर्मत्वं तादृशानुशासनसिद्धं मन्यमाना इव लक्ष्यन्ते भट्टाचार्याः ॥

एवं अनुशासनोदाहरणप्रसङ्गे प्रमादोऽपि दृश्यते भट्टाचार्याणाम् । "यूपाय
दारु इत्यादौ न संप्रदानचतुर्थी । अपितु तादर्थ्यार्थे सूत्रान्तरेण" इति व्युत्पत्ति-
वादः । यूपायेत्यत्र चतुर्थी 'तादर्थ्ये चतुर्थी' इति वार्तिकेनानुशिष्यते, न
सूत्रेण । न चात्र सूचकत्वगुणयोगात् वार्तिकमेव सूत्रान्तरपदेनाभिसंहितमिति
वाच्यम् । यतः तादर्थ्यघटकार्थपदार्थप्रयोजनत्वस्य विचारे, जन्यतयेच्छाविषय-
त्वस्य तद्रूपतानिराकरणावसरे, 'तथा सति पक्तुं व्रजतीत्यर्थे पाकाय व्रजतीति
निर्वाहाय तुमर्थेतिसूत्रप्रणयनवैयर्थ्यात्, पाकादेः निरुक्तव्रजनार्थतयैव तद्वाच-
कपदात् चतुर्थ्युपपत्तेः ।' इति ग्रन्थे, तादर्थ्ये इत्यनुशासनेन तुमर्थेतिसूत्रस्य
वैयर्थ्यमापादयन्ति । यदि 'तादर्थ्ये चतुर्थी' इत्यनुशासनं वार्तिकमित्यभिमतं
तेषाम्, तदा तेन तुमर्थेतिसूत्रवैयर्थ्यापादनं न घटेत । नहि वार्तिकं दृष्ट्वा सूत्र-
कारस्य प्रवृत्तिः । तस्मात् 'तादर्थ्ये चतुर्थी' इत्यनुशासनं सूत्रं मन्यन्ते भट्टाचार्याः ।
तथाच नैयायिकसरणिः नानुशासनानुरोधिनीति चेत् । न ॥

तण्डुलानोदनं पचतीत्यत्र कर्मण्येव द्वितीया । क्रियाजन्यफलाश्रयत्वरूप-
कर्मत्वघटकक्रियाया धातुलभ्यत्वात् फलं कर्मणि विहितद्वितीयार्थः इति पर्यवस्यति ।
व्युत्पादितश्चायं पक्षो व्युत्पत्तिवादे । 'द्व्यर्थः पचिः' इति महाभाष्यात्, नाशः
उत्पत्तिश्चेति फलद्वयावच्छिन्नव्यापारः पचधातोरर्थः । पराक्रान्तं चात्र हरिवल्लभ-
भट्टाचार्यैः ।

अत्र व्यापारजन्यनाशरूपफलाश्रयत्वात् तण्डुलस्य, उत्पत्तिरूपफलाश्रय-
त्वादोदनस्य च कर्मता । कर्मणि विहितद्वितीयायाः फलार्थकत्वमनुशासनसिद्धम् ।
जनकतासंबन्धेन धात्वर्थान्वयिनाशोत्पत्त्योः द्वितीयार्थत्वे, नञ्समभिव्याहारे जन-
कताया वृत्त्यनियामकतया तत्संबन्धावच्छिन्नाभावबोधनं न संभवतीति आश्रयता-
संबन्धेन धात्वर्थान्वयि नाशकत्वम् (फलजनकत्वम्) उत्पादकत्वं च द्वितीयार्थं
इति व्युत्पादितं भट्टाचार्यैरिति नानुशासनाननुरोधः ॥

एवं 'कर्मणि द्वितीया' इत्यत्र अधिकरणे एव सप्तमी। कर्म च द्वितीयाया वाच्यतासंबन्धेनाधारः। वाच्यतासंबन्धावच्छिन्नाधारत्वं वाच्यतारूपमेव, तत्तत्संबन्धावच्छिन्नाधारतायाः तत्तत्संबन्धरूपतायाः भट्टाचार्यैः निरूपणात्। वाच्यत्वस्याधारतारूपत्वे वाचकत्वमाधेयत्वपर्यवसितं सप्तम्यर्थः। नव्यमते आधारसप्तम्या आधेयत्वार्थकत्वात्। एवं, दाने कर्णसमः इत्यत्र 'सप्तम्यधिकरणे च' (पा. सू. 2-3-36) इत्यत्र चकारात्सप्तमी। 'प्रकृत्यादिभ्य उपसंख्यानम्' (का. वा.) इत्यत्रेव अर्थविशेषनिर्देशाभावेऽपि यथासंभवमभेदार्थकत्वम्। 'चाद् दूरान्तिकार्थेभ्यः' इति वैयाकरणानां व्याख्यानमिव इदमपि व्याख्यानं युज्यते। अयमर्थः सप्तम्यर्थविचारे व्युत्पत्तिवादे "अथवा 'सप्तम्यधिकरणे च' इति चकारेण अकारकाधारवाचिनोऽपि सप्तमी।" इति ग्रन्थेन सूचितः। कारकाधारवाचिभिन्नादपि दानादिपदात् सप्तमी साधुः इति तद्विवरणसंगतेः॥

तस्मात् भट्टाचार्याणामर्थविशेषनिरूपणमनुशासनानुरोधीति सिद्धम्॥

व्यपदेशिवद्भावाश्रयणेन कर्मीभूतधात्वर्थफलसमानाधिकरणस्तोकपदात् द्वितीयां इति रीतिः स्तोकं पचतीत्यादौ सकर्मकस्थल एव संभवति। न तु स्तोकं तिष्ठति, यतते इत्यादावकर्मकस्थले। नैयायिकनये अकर्मकधातोः व्यापारमात्रार्थकत्वात्। वैयाकरणनये सर्वधातूनां फलव्यापारोभयार्थकत्वेऽपि फलस्य व्यापारसामानाधिकरण्यवैयधिकरण्याभ्यां सकर्मकत्वाकर्मकत्वव्यवस्था स्वीकृता।

तदुक्तम्—

फलव्यापारयोरेकनिष्ठतायामकर्मकः।
धातुः, तयोर्धर्मिभेदे सकर्मक उदाहृतः। इति॥

एवं च अकर्मकधात्वर्थफलस्य तदर्थव्यापारसमानाधिकरणत्वेन व्यापारव्यधिकरणफलाश्रयत्वस्य कर्मत्वस्य व्यपदेशिवद्भावेनापि तत्रोपपादनासंभवेन तत्समानाधिकरणस्तोकपदात् द्वितीयानिर्वाहायोगात्। कथञ्चिदेवं स्तोकस्य कर्मसंज्ञायां सत्यां 'स्तोकं पच्यते' इति कर्मणि लकारापत्तिश्च॥

एवं— 'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु।
द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते॥'

इति अनुशासनघटकेन 'ततोऽन्यत्रापि दृश्यते' इति भागेन क्रियाविशेषणवाचिपदात् द्वितीयामात्रं भवति। कर्मसंज्ञाया विरहात् न कर्मणि लकारापत्तिः इति नव्य-मीमांसकानां पद्धतिरपि नानुशासनस्वरसानुरोधिनी ॥

कानि चिदव्ययानि परिगणय्य तेषां योगे द्वितीयां (उपपदविभक्तिं) विधायानन्तरं प्रवृत्तः 'ततोन्यत्रापि दृश्यते' (का. वा.) इति भागः परिगणिताव्ययभिन्नाव्यययोगेऽपि द्वितीया दृश्यत इत्येव स्वरसतो बोधयति। न तु क्रियायोगे क्रियाविशेषणवाचिपदोत्तरं द्वितीया भवतीति। तेन च दशमीं यावत्प्रपूजयेत् इत्यादौ यावच्छब्दयोगे द्वितीया सिध्यति। तस्मात् 'ततोऽन्यत्रापि दृश्यते' इत्यनेन क्रियायोगे स्तोकं पचतीत्यादौ द्वितीया भवतीति न समञ्जसम्॥

अत एव, 'ततोऽन्यत्रापि दृश्यते' इत्यनेन कल्पितं 'क्रियाविशेषणानां कर्मत्वम्' इत्यनुशासनम्। तच्च धात्वर्थतावच्छेदकफलाश्रयभिन्नस्यापि स्तोकादेः कर्मत्वमतिदिशति। अतिदेशफलं च द्वितीयाविभक्तिरेव। 'आतिदेशिकमनित्यम्' इति परिभाषया अतिदेशस्थले सर्वकार्याभावात् कर्मसंज्ञाप्रयुक्तः कर्मणि लकारो न भवति—इति व्युत्पत्तिवादव्याख्यातॄणां सरणिरपि न हृदयङ्गमा॥

यतः कतिपयाव्यययोगे द्वितीयां विधाय प्रवृत्तस्य 'ततोऽन्यत्रापि दृश्यते (का. वा.) इत्यंशस्य क्रियायोगे द्वितीयाविधायकत्वमेव यदा न स्वारसिकम्, तदा का स्वरसकथा तस्य कर्मसंज्ञातिदेशबोधकानुशासनकल्पकतायाम्॥

परन्तु, प्राचीनवैयाकरणेन **सीरदेवेन** कृतायां **परिभाषावृत्तौ** ठकूपादे, 'तत्प्रत्यनुपूर्वमीपलोमकूलम्' (पा. सू. 4-4-28) इति क्रियाविशेषणकर्मद्वितीयान्तात् ठग्विधानं ज्ञापयति इत्यादिना, 'क्रियाविशेषणानां कर्मत्वं नपुंसकलिङ्गता च' इति परिभाषा विवृता वर्तते। तां परिभाषामनुशासनं मन्यन्ते **भट्टाचार्याः**। सूत्रादीनामेकदेशधारणस्यैव भट्टाचार्यसंप्रदायसिद्धत्वात्, अत्रापि 'नपुंसकलिङ्गता च' इत्यंशं विहाय क्रियाविशेषणानां कर्मत्वम् इत्युद्धृतम् भट्टाचार्यैः। कोशधातुपाठादीनामिव परिभाषाया अप्यनुशासनत्वमविरुद्धम्। अस्यानुशासनस्य परिभाषात्वमुपेत्य, **विभक्त्यर्थनिर्णये** 'क्रियाविशेषणानां कर्मत्वं

अपि तु—

कालानामध्वमानानां क्रियाणां नीवृतामपि ।
आधारता ध्रौव्यधातोः कर्मता स्याद्विभाषया ॥

इति भागुरिस्मृत्यभिप्रायकः ॥

जटाभिस्तापसः इत्यत्र विशेषणे तृतीया इति नैयायिकानां सुप्रसिद्धो व्यवहारः । स च कातन्त्रानुसारी । कातन्त्रे द्वितीयाध्यायचतुर्थपादे द्वात्रिंशं 'विशेषणे' (का. सू. 2-4-32) इति सूत्रं तृतीयाविधायकमस्ति । जटाभिस्तापसः इति तत्सूत्रोदाहरणं वर्णयति दुर्गसिंहः कातन्त्रवृत्तौ । न हि पाणिनीये विशेषणे तृतीया अनुशिष्टास्ति ॥

स्थलान्तरेष्विव चतुर्थीविचारेऽपि 'तादर्थ्यार्थे सूत्रान्तरेण' इति ग्रन्थेन 'तादर्थ्ये' (का. 2-4-27) इति कातन्त्रसूत्रमेव निर्दिशन्ति भट्टाचार्याः, न 'तादर्थ्ये चतुर्थी वाच्या' इति पाणिनिसूत्रवार्तिकम् । तथानुपूर्व्या अनुल्लेखात् । अत एव तादर्थ्यघटकार्थत्वपरिष्कारविचारे तेन सूत्रेण समनन्तरस्य तुमर्थाच्च भाववाचिनः' (का. सू. 2-4-28) इति कातन्त्रसूत्रस्य वैयर्थ्यापादनं साधु संगच्छते । तत्र तुमर्थाच्च भाववचनात् इतिसूत्रवैयर्थ्यप्रसङ्गात् इति चेत् भट्टाचार्यग्रन्थोऽभविष्यत्, कातन्त्रसूत्रमपरामृष्टमभविष्यत् । भाववचनात् इति सूत्रानुपूर्व्याः पाणिनिव्याकरणसिद्धायाः कातन्त्रे अदर्शनात् । अतः अनुशासनैकदेशोद्धरणव्यग्रैः भट्टाचार्यैः 'तुमर्थाच्च' इति भागेन 'तुमर्थाच्च भाववाचिनः' (का. सू. 2-4-28) इति कातन्त्रसूत्रमेवाभिसंहितमिति निर्धारयामः ॥

तस्मात् चतुर्थ्यर्थविचारे न भट्टाचार्याणां अनुशासनोल्लेखे प्रमादलेशोऽपीति सिद्धम् ॥

इत्थञ्च सति संभवे प्रथमान्तपदसमभिव्याहारे प्रथमान्तार्थमुख्यविशेष्यकः, क्वचित् निपातार्थमुख्यविशेष्यकः, भावाख्यातस्थले धात्वर्थविशेष्यकः, क्वचित्

---

टिप्पणी—

ध्रौव्यधातुः—अकर्मकधातुः ।

आख्यातार्थविशेष्यकश्च शाब्दबोधः जायते। प्रथमान्तार्थमुख्यविशेष्यक एव बोधः इति न, निर्बन्धः इति, अनुशासनमनतिलङ्घ्य, वस्तुस्वभावञ्चानुसृत्य, व्यवस्थापयन्ति। इति शिवम्॥

इति षष्ठः तरङ्गः समाप्तः।

---

ग्रामः कवेरजातीरे पण्डितग्राममण्डितः।
साहजीराजदत्तश्रीविशल्लूरिति विश्रुतः॥ १॥
दर्भङ्गानृपमान्यश्रीवेङ्कट्रामतनूभवः।
छन्दोगवंशजस्तत्र सुब्रह्मण्याभिधो बुधः॥ २॥
जगद्गुरूणां करुणापूरपूरितया दृशा।
आबाल्याद्रक्षितो, यस्मै प्रसीदति च सर्वदा॥ ३॥
श्रीपरीक्षिन्महाराजः गोश्रीजनपदेश्वरः।
अण्णामलै-विश्वविद्यानिलयाध्यापकः सुधीः॥ ४॥
तत्तद्दर्शनराद्धान्तान् समालोच्य यथामति।
व्युत्पित्सुजनबोधाय तथा स्वमतिशुद्धये॥ ५॥
निर्मितां सुमनोवृन्दप्रियां शाब्दतरङ्गिणीम्।
समर्पयामि भक्त्या च मह्यो विश्वेशितुः पदे॥ ६॥
तेन विश्वसमाराध्यः प्रीणितो विश्वभावनः।
महेश्वरो देवदेवः विद्याधीशः प्रसीदतु॥ ७॥

इति पण्डितराजेन वि. सुब्रह्मण्यशास्त्रिणा विरचिता
शाब्दतरङ्गिणी समाप्ता॥
॥ शुभं भूयात्॥

---

'लिबर्टी' मुद्रणालये मुद्रितम्, चेन्नपुरी-१.

# APPENDIX—I

## उद्धृतानां निबन्धानां सूची

# APPENDIX—II

## उद्धृतानां श्लोकानां सूची

---

# APPENDIX—III

## उद्धृतानां सूत्राणां सूची

# APPENDIX—IV

## उदाहृतानां निबन्धॄणां सूची




'लिबर्टी' मुद्रणालये मुद्रितम्, चेन्नपुरी-१.